THE

# DÛTAVÂKYA

OF

# BHÂSA

With commentary

BY

Mahâmahopâdhyâya
**PANDIT T. GANAPATI SÂSTRÎ**
Honorary Member of the Royal Asiatic Society of Great Britain and Ireland;
Honorary Doctor of Philosophy, University of Tubingen;
Editor of the Trivandrum Sanskrit Series.

---

Trivandrum.
PRINTED AT THE SRIDHARA POWER PRESS.

---

1925

 [ Price as 8.

॥ श्रीः ॥

# दूतवाक्यं

महाकविश्रीभासप्रणीतम्

अनन्तशयनसंस्कृतग्रन्थावलिप्रकाशनकार्याध्यक्षेण
पिह्रेच्. डि., एम्. आर्. ए. एस्. इति व्यपदेशयुक्तेन
महामहोपाध्यायेन

पण्डितगणपतिशास्त्रिणा

प्रणीतया व्याख्यया

समेतं

तेनैव च संशोधितं प्रकाशितं च ।

---

१९२५



---

मूल्यं ८ आणकाः ।

# PREFACE.

This play is called Dûtavâkya owing to the importance attached to the advice given to Duryodhana by Srî-Krishna in his mission as an envoy of the Pândavas.

A palm-leaf manuscript obtained from Mr. Nîlakanthan Chakyar of Manganam has been consulted in this edition. Though much worn out, this manuscript yielded some correct and valuable readings and some additional passages in the text. To help the students, I have added a lucid and simple commentary.

TRIVANDRUM. T. Ganapati Sâstrî.

# निवेदना ।

पाण्डवदूतस्य कौरवपाण्डवसन्धिसंघटनेच्छोर्भगवतः श्रीकृष्णस्य सुयोधनहितोपदेशपरं वाक्यमिह रूपके प्रधानमिति कृत्वा दूतवाक्यमिदं व्यपदिश्यते ।

अस्यास्मिन् संस्करणे माङ्गानवासिश्रीनीलकण्ठचाक्यार्सकाशाधिगतं जीर्णत्रुटितानेकपत्रमादर्शान्तरमाश्रित्य शुद्धाश्च गुणवन्तश्चाधिकाश्च कतिपये पाठा योजिताः । ललितमनतिविस्तृतं व्याख्यानं च किञ्चिदस्माभिः प्रणीयात्र संश्लेषितं व्युत्पित्सूपकाराय ।

अनन्तशयनम् त. गणपतिशास्त्री

---

## पात्राणि ।

काञ्चुकीयः — दुर्योधनभृत्यः ।

दुर्योधनः — धृतराष्ट्रस्य ज्येष्ठः पुत्रः ।

वासुदेवः — श्रीकृष्णः ।

सुदर्शनः — श्रीकृष्णचक्रायुधाभिमानी देवः ।

धृतराष्ट्रः — पाण्डोर्ज्येष्ठभ्राता ।

---

॥ श्रीः ॥

श्रीगणेशाय नमः ।

## महाकविश्रीभासप्रणीतं

# दूतवाक्यं

### महामहोपाध्यायगणपतिशास्त्रिप्रणीतया व्याख्यया समेतम् ।

---

( नान्द्यन्ते ततः प्रविशति सूत्रधारः । )

**सूत्रधारः** —

पादः पायादुपेन्द्रस्य सर्वलोकोत्सवः स वः ।
व्याविद्धो नमुचिर्येन तनुताम्रनखेन खे ॥ १ ॥

---

वन्देऽहं विघ्नराजं च वाग्देवीं च पुनःपुनः ।
पूर्यन्ते यत्कृपालेशान्मद्रक्षु नम्रमनोरथाः ॥
श्रीभासरूपकस्तोमे विचित्ररसयोगिनि ।
दूतवाक्याह्वयस्यार्थो रूपकस्य प्रकाश्यते ॥

अथ श्रीवाल्मीकिव्यासदेश्यस्तत्रभवान् श्रीभासः दूतवाक्यसंज्ञं रङ्गप्रयोगप्रधानं रूपकं चिकीर्षुस्तदारम्भे प्रयोगसम्यङ्निष्पत्त्यादिपरिपन्थिदुरितप्रशमौपयिकं पूर्वरङ्गप्रधानाङ्गं मङ्गलश्लोकपाठम् उपक्रम्यमाणप्रयोगस्य कथावस्त्वंशस्य निवेदनं च प्रयोगनिर्वाहधुरन्धरेण सूत्रधारेण रङ्गे प्रथमसमाचरणीयं पश्यन् सूत्रधारस्य प्रवेशं तावदाह—नान्द्यन्ते ततः प्रविशति सूत्रधार इति । नन्दिरानन्दः, तस्या इयं नान्दी, आनन्दजनयित्री गीतवाद्यवादनादिरूपा क्रिया, तस्या अन्ते अवसाने । सा हि प्रयोगारम्भात् प्राग् देवतापरिषदानन्दार्थानुष्ठीयते । यद्यप्युक्तव्युत्पत्त्या देवस्तावकमङ्गलश्लोकपाठोऽपि नान्दी भवति, तथापि सा श्लोकनान्दी सत्काव्यरूपत्वाद् रङ्गप्रयोगयोग्या रङ्ग एव प्रयोक्ष्यत इति तदतिरिक्तैव नान्दीह ग्राह्या । ततः तदनन्तरं गीतवाद्यवादनादिक्रियापरिसमाप्त्यव्यवहितोत्तरकाले इत्यर्थः । सूत्रधारः सूत्रं प्रयोगानुष्ठानं धारयति निर्वाहयतीति सूत्रधारः । प्रविशति अर्थाद् रङ्गम् ॥

प्रविष्टः सूत्रधारो मङ्गलश्लोकं पठति — पाद इति । सर्वलोकोत्सवः सर्वेषां लोकानां जगताम् उत्सवः हर्षहेतुः । उपेन्द्रस्य इन्द्रानुजस्य वामनस्य । स पादः

एवमार्यमिश्रान् विज्ञापयामि । अये किन्नुखलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग ! पश्यामि ।

( नेपथ्ये )

भो भोः प्रतिहाराधिकृताः ! महाराजो दुर्योधनः समाज्ञापयति ।

---

चरणः । वः सामाजिकान् । पायाद् रक्षतात् । प्रयोगप्रेक्षणरूपाभिलषितार्थनिर्विघ्नसिद्धया योजयतादित्यर्थः । सर्वलोकोत्सवत्वानुगुणं परमाद्भुतं तस्यापदानमाह,—तनुताम्रनखेन तनवः अल्पाकृतयः ताम्रा अरुणाश्च नखा यस्य तेन तथाभूतेन । एतेन बालभावानुत्तीर्णत्वमुक्तम् । येन पादेन । नमुचिः तन्नामा बलिबन्धुः असुरः । खे आकाशे, व्याविद्धः क्षिप्तः । नमुचिव्याविधनकथा पुराणेष्वनुसन्धेया । इन्द्रेण तु नमुचिर्नामासुरः समुद्रफेनेन निहतः । एतच्च मङ्गलं तन्त्रेण ग्रन्थविघ्नविघाताद्यर्थमपि भवतीति सर्वविघ्नमङ्गलसिद्धिः ॥

अत्र पाण्डवदूतस्य भगवतः श्रावितपाण्डवसन्देशस्य प्रयातुमिच्छोर्मोचनमननुमन्यमानः प्रत्युत बन्धनाय सन्नह्यन् आसुरप्रकृतिर्दुर्योधनो नमुचिपदेनावयवशक्त्या मोचनप्रतिषेधं बोधयता सूचितः; नमुचिव्याविधनलक्षणस्य चापदानाद्भुतस्य कथनेन परमाद्भुतविश्वरूपप्रदर्शननिमित्तो दुर्योधननिग्रहो भगवत्कृतो ग्रन्थप्रतिपाद्यो द्योतितः । अत्रार्धान्ते पुनरुक्तवदाभासौ शब्दालङ्कारौ बोद्धव्यौ ॥ १ ॥

इत्थं मङ्गलपाठसम्मुखीकृतान् सामाजिकान् प्रति उपक्रंस्यमानस्य कथावस्त्वंशस्य विज्ञापनं प्रतिजानीते—एवमार्यमिश्रानित्यादि । एवम् अनेन बुद्धिस्थेन प्रकारेण । आर्यमिश्रान् पूज्यतमान् । विज्ञापनप्रतिज्ञया सूत्रधारस्येङ्गितं गृहीत्वा तद्वर्ग्यैर्विज्ञाप्यवस्तुप्रयोगोपक्रमसूचकः शब्दो नेपथ्ये समुत्थापितः । सूत्रधारस्तु अस्यार्थस्याज्ञानाभिनयचमत्कारेण तटस्थ इव तं शब्दं गृह्णन्नाह — अये इत्यादि । अये इति विषादे कोपे वा । स च शब्दे विज्ञापनविघ्नत्वबुद्ध्यभिनयात् । किन्नुखलु किं कारणम् । मयि विज्ञापनव्यग्रे सति विज्ञापनव्यासक्तमात्रे सति । शब्द इव विशेषाकारेणानिश्चितः शब्दः, इवपदस्यानिश्चयार्थत्वात् । पश्यामि शब्दस्य विशेषाकारं निमित्तं च परीक्ष्य ज्ञास्यामि । अङ्गेति दर्शनविषयं सम्भ्रमं सूचयति ॥

शब्दस्य विशेषाकारनिश्चयाय श्रवणापेक्षायां तस्य नेपथ्ये प्रवृत्तिं कविः स्ववाक्येन सूचयति—नेपथ्य इति । वक्ष्यमाणाकारः शब्दो नेपथ्ये प्रवृत्त इत्यर्थः । शब्दस्याकारमाह—भो भो इत्यादि ॥

**सूत्रधारः** — भवतु, विज्ञातम् ।

उत्पन्ने धार्तराष्ट्राणां विरोधे पाण्डवैः सह ।
मन्त्रशालां रचयति भृत्यो दुर्योधनाज्ञया ॥ २ ॥

(निष्क्रान्तः ।)

## स्थापना ।

---

(ततः प्रविशति काञ्चुकीयः ।)

**काञ्चुकीयः** — भो भोः प्रतिहाराधिकृताः! महाराजो दुर्योधनः समाज्ञापयति — अद्य सर्वपार्थिवैः सह मन्त्रयितुमिच्छामि । तदाहूयन्तां

---

भवत्विति । भवतु शब्दस्य भवनं प्राप्तावसरं, लोटः प्राप्तकालार्थत्वात् । प्राप्तावसरत्वोक्त्या च शब्दस्य विज्ञाप्यवस्तुसम्बद्धत्वं प्रत्यायितम् । विज्ञातम् अवगतम् अर्थाच्छब्दस्य निमित्तम् ॥

तदेव विवृणोति—उत्पन्न इति । धार्तराष्ट्राणां धृतराष्ट्रपुत्राणां सुयोधनादीनाम् । पाण्डवैः सह पाण्डुपुत्रैर्युधिष्ठिरादिभिः सह विरोधे वैरे । उत्पन्ने सति, दुर्योधनाज्ञया दुर्योधनस्य चोदनया । भृत्यः अर्थाद् दुर्योधनस्य । मन्त्रशालां कार्यसम्मन्त्रणार्थां सभाम् । रचयति योजयति, मन्त्रसभायोगानुकूलमाचरतीत्यर्थः । तच्च मन्त्रसभासमवायार्हपार्थिवाह्वानाय प्रतिहाराधिकृतानां प्रेरणम् । एतन्निमित्तमेव शब्दस्योत्थानमिति तात्पर्यम् ॥ २ ॥

विज्ञाप्यविज्ञापनं नेपथ्योत्थशब्दविवरणभङ्ग्या निर्वृत्तं मन्वानस्य सूत्रधारस्य निष्क्रमणमाह—निष्क्रान्त इति । स्थापनेति । एवं कथावस्त्वंशस्य स्थापनात् स्थापना । क्वचित् प्रस्तावनेति पाठः । स्थापना प्रस्तावनेति पर्यायौ ॥

स्थापनायां कविकाव्यनामानुत्कीर्तनं तदुत्कीर्तनसमुदाचारप्रवृत्तिकालादस्य रूपकस्य प्राचीनत्वं गमयति । अस्य नामधेयं दूतवाक्यमिति, 'दूतवाक्यं समाप्तम्' इति ग्रन्थान्ते लेखनात् । अस्य प्रणेता पुनः श्रीभास इति स्वप्नवासवदत्तोपोद्घाते न्यरूपयाम ॥

सूचितस्य भृत्यस्य प्रवेशमाह—तत इत्यादि । भो भो इत्यादि । प्रतिहाराधिकृताः प्रतिहारो द्वारं तस्मिन्नधिकृताः, तत्र स्थित्वा राज्ञ आज्ञां ये भृत्याः

सर्वे राजान इति । (परिक्रम्यावलोक्य) अये अयं महाराजो दुर्योधन इत एवाभिवर्तते । य एषः,

श्यामो युवा सितदुकूलकृतोत्तरीयः सच्छत्रचामरवरो रचिताङ्गरागः ।
श्रीमान् विभूषणमणिद्युतिरञ्जिताङ्गो नक्षत्रमध्य इव पर्वगतः शशाङ्कः ॥ ३ ॥

(ततः प्रविशति यथानिर्दिष्टो दुर्योधनः ।)

दुर्योधनः —

उद्धूतरोषमिव मे हृदयं सहर्षं प्राप्तं रणोत्सवमिमं सहसा विचिन्त्य ।
इच्छामि पाण्डवबले वरवारणानामुत्कृत्तदन्तमुसलानि मुखानि कर्तुम् ॥ ४ ॥

---

प्रतिपालयन्ति ते । सर्वपार्थिवैः सह सर्वैः पार्थिवैः पृथिव्या ईश्वरैः साकम् । मन्त्रयितुम् आलोचयितुम् । आलोचनं चैकादशाक्षौहिणीबलसमुदयस्य पाण्डवयुद्धार्थे संगृहीतस्य सेनापतिनिर्धारणविषयं स्पष्टीभविष्यति । अभिवर्तते अभिमुखमागच्छति ।

श्याम इति । श्यामः कृष्णवर्णः । युवा, सितेन धवलेन दुकूलेन क्षौमेण सूक्ष्मवस्त्रेण वा कृतम् उत्तरीयं येन सः सितदुकूलकृतोत्तरीयः । रचितः अङ्गरागः अङ्गानुलेपनं येन सः रचिताङ्गरागः । विभूषणमणिद्युतिभिः आभरणरत्नकान्तिभिः रञ्जितानि रूषितानि अङ्गानि यस्य सः विभूषणमणिद्युतिरञ्जिताङ्गः । य एषः । धवलदुकूलच्छत्रचामरादिमध्यवर्तिनो राज्ञ उपमामाह---नक्षत्रमध्ये, स्थित इति शेषः । पर्वगतः पूर्णिमां प्राप्तः । शशाङ्क इव चन्द्र इव प्रियदर्शनत्वात् । शोभत इति शेषः "दुकूलं तु क्षौमेऽन्ये सूक्ष्मवाससि" इति केशवस्वामी ॥ ३ ॥

उद्धूतेति । मे, हृदयम्, इमं बुद्धिस्थं चिरमनोरथपथपरिशीलितमित्यर्थः । रणोत्सवं युद्धमेवानन्दहेतुत्वाद् उत्सवम् । सहसा अचिरेण, प्राप्तम् । विचिन्त्य, उद्धूतरोषमिव उद्धूतः निरस्तो रोषः कोपः पाण्डवविषयो येन तत् तथाभूतमिव । इवेति संभावनायाम् । तेन रोषस्य सतोऽप्युद्धूतवदवभासमानतोक्ता । सा च चित्तवृत्त्यन्तरेणाभिभवादित्याशयवानाह — सहर्षं हर्षयुक्तं, भवति । एवंच रोषन्यक्कारेण हर्षं उदित इति तात्पर्यम् । कथं युद्धप्राप्तिचिन्तया हर्षोदयस्तत्राह---पाण्डवबले पाण्डवानां सैन्ये । वरवारणानां प्रशस्तगजानाम् । मुखानि, उत्कृत्तदन्तमुसलानि उत्कृत्ताः छिन्नाः दन्तमुसलाः दन्ता मुसला इव येषु तानि तथाभूतानि ।

**काञ्चुकीयः** — जयतु महाराजः । महाराजशासनात् समानीतं सर्वराजमण्डलम् ।

**दुर्योधनः** — सम्यक् कृतम् । प्रविश त्वमवरोधनम् ।

**काञ्चुकीयः** — यदाज्ञापयति महाराजः । (निष्क्रान्तः ।)

**दुर्योधनः** — आर्यौ ! वैकर्णवर्षदेवौ ! उच्यताम् — अस्ति ममैकादशाक्षौहिणीबलसमुदयः । अस्य कः सेनापतिर्भवितुमर्हतीति ।

किमाहतुर्भवन्तौ — महान् खल्वयमर्थः । मन्त्रयित्वा वक्तव्यमिति ।

सदृशमेतत् । तदागम्यतां मन्त्रशालामेव प्रविशामः । आचार्य ! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । पितामह ! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । आर्यौ ! वैकर्णवर्षदेवौ ! प्रविशतां भवन्तौ ।

---

कर्तुम्, इच्छामि । एवञ्च इच्छायाः फलप्राप्तिकालः प्रत्यासन्नो युद्धस्यासन्नत्वादिति निश्चयो हर्षोदये कारणमित्युक्तं भवति । 'इच्छा हि' इति क्वचित् पाठः । तदा हिशब्दो हेतौ, यस्मात् कारणादित्यर्थः । इच्छा कामः । समास्तीत्यर्थगम्यम् ॥ ४ ॥

सम्यगित्यादि । अवरोधनम् अन्तःपुरम् ॥

आर्यावित्यादि । वैकर्णवर्षदेवौ राजविशेषौ । वैकर्तनवर्षदेवाविति क्वचित् पाठः । एकादशाक्षौहिणीबलसमुदयः एकादश या अक्षौहिण्यः सेनापरिमाणविशेषाः ता एव बलानि सैन्यानि तेषां समुदयः सङ्घातः । "त्रिहयं पञ्चपादातं यदेकरथकुञ्जरम् । सैन्यं सा पत्तिरेतस्यास्त्रैगुण्यात् स्युर्यथाक्रमम् । सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः । अनीकिनीत्यनीकिन्यः पुनरक्षौहिणी दश ।" इति वैजयन्ती । किमाहतुरित्यादि । एतच्च पृष्टयोः रङ्गमप्रविष्टयोः प्रतिवचनस्यानुवादभङ्ग्या प्रकाशनम् । इदमाकाशभाषितमित्युच्यते । यदाह धनिकः — "किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् । श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाशभाषितम् ॥" इति ।

सदृशं युक्तम् । आहूतागतान् द्रोणभीष्मादीन् प्रति सत्कारवाक्यानि 'तदागम्यतामि'त्यादीनि । कूर्मासनं कूर्माकाराङ्कितम् आसनम् । स्वैरं निश्शङ्कम् । आक्षिप्तुं शङ्कमानानिव सर्वक्षत्रियान् पश्यन् पृच्छति — किमिति किमिति कुतः

भो भोः सर्वक्षत्रियाः! स्वैरं प्रविशन्तु भवन्तः। वयस्य! कर्ण! प्रविशावस्तावत्।

(प्रविश्य)

आचार्य! एतत् कूर्मासनम्, आस्यताम्। पितामह! एतत् सिंहासनम्, आस्यताम्। मातुल! एतच्चर्मासनम्, आस्यताम्। आर्यौ! वैकर्णवर्षदेवौ! आसातां भवन्तौ। भो भोः सर्वक्षत्रियाः! स्वैरमासतां भवन्तः।

किमिति किमिति। महाराजो नास्त इति। अहो सेवाधर्मः। नन्वयमहमासे। वयस्य! कर्ण! त्वमप्यास्स्व। (उपविश्य)

आर्यौ! वैकर्णवर्षदेवौ! उच्यताम् — अस्ति ममैकादशाक्षौहिणीबलसमुदयः। अस्य कः सेनापतिर्भवितुमर्हतीति।

किमाहतुर्भवन्तौ — अत्रभवान् गान्धारराजो वक्ष्यतीति। भवतु, मातुलेनाभिधीयताम्।

किमाह मातुलः — अत्रभवति गाङ्गेये स्थिते कोऽन्यः सेनापतिर्भवितुमर्हतीति।

सम्यगाह मातुलः। भवतु भवतु। पितामह एव भवतु। वयमप्येतदभिलषामः।

---

कुतः। शङ्कन्त इति क्रियाध्याहारः। तैरुक्तं शङ्काहेतुमनुवादभङ्ग्या प्रकाशयति— महाराज इत्यादि। अत्र इतिशब्दानन्तरं 'किं ब्रूथे'ति शेषः। सेवाधर्मः सेव्यानुरोधसमुदाचारः अनुपविष्टे सेव्ये अनुपवेशलक्षणः। नन्विति अनुनये। वयस्य! हे सखे!।

अत्रेत्यादि। अत्रभवान् पूज्यः। गान्धाराणां राजा गान्धारराजः शकुनिः। 'राजाहस्सखिभ्यष्टच्' इति समासान्तः।

अत्रभवतीत्यादि। गाङ्गेये गङ्गाया अपत्यं पुमान् गाङ्गेयः भीष्मः तस्मिन्। वयमपीत्यादिस्थाने 'अहमप्येतदभिलषामीति' क्वचित् पाठः।

सेनानिनादपटहस्वनशङ्खनादैश्चण्डानिलाहतमहोदधिनादकल्पैः ।
गाङ्गेयमूर्ध्नि पतितैरभिषेकतोयैः सार्धं पतन्तु हृदयानि नराधिपानाम् ॥ ५ ॥

(प्रविश्य)

काञ्चुकीयः —जयतु महाराजः । एष खलु पाण्डवस्कन्धावाराद् दौत्येनागतः पुरुषोत्तमो नारायणः ।

दुर्योधनः —मा तावद् भो बादरायण! । किं किं कंसभृत्यो दामोदरस्तव पुरुषोत्तमः । स गोपालकस्तव पुरुषोत्तमः । बार्हद्रथापहृतविषयकीर्त्तिभोगस्तव पुरुषोत्तमः । अहो पार्थिवासन्नमाश्रितस्य भृत्यजनस्य समुदाचारः । सगर्वं खल्वस्य वचनम् । आ अपध्वंस ।

---

सेनेति । चण्डानिलाहतमहोदधिनादकल्पैः चण्डमारुतोल्लोलितसमुद्रध्वनिसदृशैः । सेनानिनादपटहस्वनशङ्खनादैः सेनानिनादः सैन्यसिंहनादश्च पटहस्वनश्च शङ्खनादश्चेत्येतैः सैनापत्याभिषेकमङ्गलाङ्गैः । उपलक्षितैरिति शेषः । गाङ्गेयमूर्ध्नि भीष्मशिरसि । पतितैः; अभिषेकतोयैः साकं सैनापत्याभिषेकजलैः सह । नराधिपानां शत्रुनृपाणां हृदयानि, पतन्तु, पतनं च तोयपक्षे मूर्धाधोदेशप्राप्तिः, हृदयपक्षे धैर्यच्युतिः । सहोक्तिरलङ्कारः ॥ ५ ॥

जयत्वित्यादि । पाण्डवस्कन्धावारात् पाण्डवशिबिरात् । दौत्येन दूतभावेन । पुरुषोत्तमः पुरुषेषु मध्ये उत्तमः । नारायणः श्रीकृष्णः ॥

श्रीकृष्णस्य पुरुषोत्तमत्वविशेषणं निसर्गद्वेषित्वादसहमान आह—मेत्यादि । मा तावदिति प्रतिषेधोऽनिष्टवचनविषयः । किंशब्द आक्षेपे, कोपाद् द्विरुक्तिः । आक्षेप्यं तु पुरुषोत्तमत्वम् । तच्च विरुद्धधर्मोद्भावनया त्रिः खण्डयति 'कंसभृत्य' इत्यादिना । कंसभृत्यः कंसस्य सेवकः । दामोदरः दाम रज्जुः उदरे यस्य निबद्धं चौर्यनिवारणाय जनन्या स तथाभूतः । आभ्यां विशेषणाभ्यां नीचवृत्तित्वम् आबालदुश्शीलत्वं चोक्तम् । तव पुरुषोत्तमः त्वत्पक्षे पुरुषोत्तमः । नीचवृत्तिं दुश्शीलं च जनं त्वं पुरुषोत्तमं मन्यसे, धिक् त्वामित्यभिप्रायः । गोपालकः आभीरः । अनेन कुलहीनता सूचिता । बार्हद्रथापहृतविषयकीर्त्तिभोगः बार्हद्रथेन जरासन्धेन अपहृतः विषयो देशः कीर्तिर्भोगश्च यस्य स तथा । एतेन शौर्यहीनतोक्ता । पार्थिवासन्नम् आश्रितस्य राजान्तिकं सेवमानस्य । समुदाचारः व्यवहारक्रमः । आः कोपे । अपध्वंस नष्टो भव, मदन्तिकात् सहसापसरेत्यर्थः । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात् परस्मैपदम् ॥

**काञ्चुकीयः** — प्रसीदतु प्रसीदतु महाराजः । संभ्रमेण समुदाचारो विस्मृतः । (पादयोः पतति ।)

**दुर्योधनः** — संभ्रम इति । आ मनुष्याणामस्त्येव संभ्रमः । उत्तिष्ठोत्तिष्ठ ।

**काञ्चुकीयः** — अनुगृहीतोऽस्मि ।

**दुर्योधनः** — इदानीं प्रसन्नोऽस्मि । क एष दूतः प्राप्तः ।

**काञ्चुकीयः** — दूतः प्राप्तः केशवः ।

**दुर्योधनः** — केशव इति । एवमेष्टव्यम् । अयमेव समुदाचारः । भो भो राजानः! दौत्येनागतस्य केशवस्य किं युक्तम् । किमाहुर्भवन्तः — अर्घ्यप्रदानेन पूजयितव्यः केशव इति । न मे रोचते । ग्रहणमस्यात्र हितं पश्यामि ।

ग्रहणमुपगते तु वासुभद्रे हृतनयना इव पाण्डवा भवेयुः ।
गतिमतिरहितेषु पाण्डवेषु क्षितिरखिलापि भवेन्ममासपत्ना ॥ ६ ॥

---

प्रसीदत्वित्यादि । संभ्रमेण त्वरया ।

सम्भ्रम इत्यादि । आ इति स्मरणे । अमनुष्याणमिति पाठे मनुष्याभासानामित्यर्थः ॥

इदानीमित्यादि । क एष इति प्रश्नो न्याय्यं समुदाचारं भापयितुम् ॥

केशव इति । एवम् एष्टव्यं निर्विशेषणनामधेयमात्रग्रहणलक्षणः एष प्रकार एषितुमर्ह इत्यर्थः । किं युक्तं कीदृशं सम्भावनमनुरूपम् । अर्घ्यप्रदानेन अर्घाय पूजायै हितम् अर्घ्यं तस्य प्रदानेन । न रोचते अर्थात् पूजनम् । ग्रहणं बन्दीकरणम् ।

ग्रहणस्य हितत्वमुपपादयति — ग्रहणमिति । वासुभद्रे कृष्णे । वासुदेवनामैकदेशस्य वासुशब्दस्य सौम्यार्थकभद्रपदयुक्तस्यायं प्रयोगो रामभद्रवत् । ग्रहणं बन्दीकरणम् । उपगते प्राप्ते सति । पाण्डवाः, हृतनयना इव नेत्रहीना इव । भवेयुः । वासुदेवेन हि नयनस्थानीयेन ते कार्याणि सम्यक् पश्यन्तस्तद्विरहे कार्यदर्शनाक्षमा भवेयुरित्यभिप्रायः । पाण्डवेषु, गतिमतिरहितेषु गत्या शरणेन कृष्णात्मना मत्या कृष्णदीयमानया बुद्ध्या च रहितेषु सत्सु । अखिलापि समस्तापि ।

अपिच योऽत्र केशवस्य प्रत्युत्थास्यति, स मया द्वादशसुवर्णभारेण दण्ड्यः । तदप्रमत्ता भवन्तु भवन्तः । (आत्मगतम्) कोनुखलु इदानीं ममाप्रत्युत्थानस्योपायः । हन्त दृष्ट उपायः । (प्रकाशम्) बादरायण! आनीयतां स चित्रपटो ननु, यत्र द्रौपदीकेशाम्बरावकर्षणमालिखितम् । (आत्मगतम्) तस्मिन् दृष्टिविन्यासं कुर्वन् नोत्थास्यामि केशवस्य ।

**काञ्चुकीयः** — यदाज्ञापयति महाराजः । (निष्क्रम्य प्रविश्य) जयतु महाराजः । अयं स चित्रपटः ।

**दुर्योधनः** — ममाग्रतः प्रसारय ।

**काञ्चुकीयः** — यदाज्ञापयति महाराजः । (प्रसारयति ।)

**दुर्योधनः** — अहो दर्शनीयोऽयं चित्रपटः । एष दुःशासनो द्रौपदीं केशहस्ते गृहीतवान् । एषा खलु द्रौपदी,

दुःशासनपरामृष्टा सम्भ्रमोत्फुल्ललोचना ।

---

क्षितिः भूमिः । असपत्ना निश्शत्रुः सती, भागार्थिनां शत्रूणामसहायतया युद्धेऽनुद्योगात् प्राणपरित्यागाद् वेति भावः । मम भवेत् ममैव भवेत् मदेकस्वामिका भवेत ॥ ६ ॥

प्रत्युत्थानमात्रेणापि कृष्णं सम्भावयितुर्दण्डमादिशति—**अपिचेत्यादि** । अत्र सभास्तारेषु मध्ये । प्रत्युत्थास्यति प्रत्युत्थानसमुदाचारमनुष्ठास्यति । द्वादशसुवर्णभारेण, सुवर्णः कर्षः, द्वादशाशीतमको नाणकविशेषो द्वादशसुवर्ण इति व्यपदिष्टः, द्वादशसुवर्णानां भारः पलसहस्रद्वयं द्वादशसुवर्णभारः, तेन । 'सुवर्णो ना स्वर्णकर्षे' इति मेदिनी । 'भारः सहस्रद्वितये पलानां च गरिम्णि च' इति यादवः । महतो दण्डस्य विधानं प्रत्युत्थानस्य महापराधत्वबोधनार्थम् । प्रत्युत्थातुः परस्य विहितदण्डोऽपि कृष्णसम्मुखदर्शने अप्रत्युत्थानमात्मना कर्तुमशक्यं मन्यमानश्चिन्तयति — **कोन्वित्यादि** । चित्रपटः आलेख्यपटः । नन्विति सम्भ्रमे । तस्मिन्नित्यादि । तस्मिन् चित्रपटे । एवञ्च कृष्णादर्शनच्छद्मना प्रत्युत्थानं परिहरिष्यामीत्यभिप्रायः ॥

**ममेत्यादि** । प्रसारय विस्तारय अर्थाच्चित्रपटम् ॥

**अहो इत्यादि** । एष आलिखितः । दुश्शासनः, केशहस्ते कचकलापे ।

**दुश्शासनेत्यादि** । दुश्शासनपरामृष्टा दुश्शासनकरगता । संभ्रमोत्फुल्ललो-

राहुवक्त्रान्तरगता चन्द्रलेखेव शोभते ॥ ७ ॥

एष दुरात्मा भीमः सर्वराजसमक्षमवमानितां द्रौपदीं दृष्ट्वा प्रवृद्धामर्षः सभास्तम्भं तुलयति । एष युधिष्ठिरः,

सत्यधर्मघृणायुक्तो द्यूतविभ्रष्टचेतनः ।
करोत्यपाङ्गविक्षेपैः शान्तामर्षं वृकोदरम् ॥ ८ ॥

एष इदानीमर्जुनः,

रोषाकुलाक्षः स्फुरिताधरोष्ठस्तृणाय मत्वा रिपुमण्डलं तत् ।
उत्सादयिष्यन्निव सर्वराज्ञः शनैः समाकर्षति गाण्डिवज्याम् ॥ ९ ॥

एष युधिष्ठिरोऽर्जुनं निवारयति । एतौ नकुलसहदेवौ,

कृतपरिकरबन्धौ चर्मनिस्त्रिंशहस्तौ परुषितमुखरागौ स्पष्टदष्टाधरोष्ठौ ।
विगतमरणशङ्कौ सत्वरं भ्रातरं मे हरिमिव मृगपोतौ तेजसाभिप्रयातौ ॥

---

चना सम्भ्रमेण संवेगेन उत्फुल्ले अतिविकसित लोचने यस्याः सा ॥ ७ ॥

एष इत्यादि । भीमः भीमसेनः । सर्वराजसमक्षं सर्वराजानां सर्वेषां राज्ञां प्रत्यक्षं यथा भवति तथा । प्रवृद्धामर्षः संवृद्धकोपः । तुलयति चलयति । यद्वा उन्मिमीते । उन्मानमिह तारतम्यपरीक्षणं, किमनेन स्तम्भेन शत्रून् प्रहरेयं किममुना स्तम्भेनेति तत्सारफल्गुतां दृष्ट्या पर्यालोचयतीत्यर्थः । युधिष्ठिरः धर्मसूनुः ।

सत्येत्यादि । घृणा अकार्यविषया जुगुप्सा । 'घृणा जुगुप्साकृपयोः' इति मेदिनी । द्यूतविभ्रष्टचेतनः द्यूतेन अक्षक्रीडया तन्निमित्तपराजयेनेत्यर्थः विभ्रष्टा नष्टा चेतना संविद् यस्य सः । अपाङ्गविक्षेपैः सेङ्गितैः कटाक्षावलोकनैः । वृकोदरं भीमम् ॥ ८ ॥

रोषेत्यादि । तृणाय मत्वा तृणं मत्वा तृणमिवानादृत्येत्यर्थः 'मन्यकर्मण्यनादरे' इति चतुर्थी । सर्वराज्ञः सर्वान् द्रौपदीपरिभवस्य कर्तॄन् अनुमन्तॄन् द्रष्टॄंश्च नृपान् । 'राजाहस्सखिभ्य' इति समासान्तस्याकरणमनित्यत्वात् । 'सर्वराजान्' इत्येव क्वचित् पाठः । उत्सादयिष्यन्निव ध्वंसयिष्यन्निव । 'लटः सद्वा' इति लटः शत्रादेशः प्रकृत्यर्थस्य समाकर्षणक्रियां प्रति फलत्वविवक्षया । गाण्डिवज्यां गाण्डिवाख्यस्य चापस्य मौर्वीम् ॥ ९ ॥

एष इत्यादि । निवारयति अर्थाद् युद्धोद्यमात् ।

कृतेत्यादि । कृतः परिकरबन्धः प्रगाढगात्रबन्धः याभ्यां तौ । चर्मनिस्त्रिं-

एष युधिष्ठिरः कुमारावुपेत्य निवारयति —

नीचोऽहमेव विपरीतमतिः कथं वा रोषं परित्यजतमद्य नयानयज्ञौ ।
द्यूताधिकारमवमानममृष्यमाणाः सत्त्वाधिकेषु वचनीयपराक्रमाः स्युः ॥ ११ ॥

इति । एष गान्धारराजः,

अक्षान् क्षिपन् स कितवः प्रहसन् सगर्वं सङ्कोचयन्निव मुदं द्विषतां स्वकीर्त्या ।
स्वैरासनो द्रुपदराजसुतां रुदन्तीं काक्षेण पश्यति लिखत्यपि गां नखाग्रैः ॥

---

शहस्तौ चर्मनिस्त्रिंशौ फलकखड्गौ हस्तयोर्ययोस्तौ । परुषितमुखरागौ परुषितः परुषो रूक्षः कृतः मुखरागो मुखप्रकाशो ययोस्तौ । एतेन सकोपत्वमुक्तम् । मे भ्रातरं दुश्शासनम् । हरिमिव सिंहमिव । मृगपोतौ हरिणडिम्भौ । तेजसा वीर्येण । अभिप्रयातौ प्रत्यवस्थितौ । मृगपोतोपमया नकुलसहदेवयोरभियानस्योपहास्यत्वं द्योतितम् ॥ १० ॥

नकुलसहदेवौ निवारयता धर्मजेन सभायां पुरा यदुक्तं वाक्यं, तत् प्रकृतानुगुण्यात् स्मरति—नीच इति । अहमेव, नीचः अधमः । भवामीति शेषः । वाशब्दोऽन्यथाशब्दार्थे, नीचत्वाभावे इत्यर्थः । कथं केन हेतुना । विपरीतमतिः विपरीता आत्मयोगक्षेमप्रतिकूला मतिः द्यूतगोचरा यस्य स तथाभूतः । भवेयमित्यार्थम् । अद्य इदानीं द्यूतपराजितसमुदाचारानुष्ठानयोग्येऽस्मिन् समये इत्यर्थः । नयानयज्ञौ द्यूतनीत्यनीतिवेदिनौ । युवां, रोषं परित्यजतं, द्यूतविजितैर्नामिदृशः परिभवः सोढव्य एव, न तु पराक्रमेण सद्यः प्रतिकर्तुं योग्य इति भावः । पराक्रमणे को दोषस्तत्राह— द्यूताधिकारं द्यूतेन अधिक्रियते प्रस्तूयत इति द्यूताधिकारः । तं द्यूतनिमित्तकमित्यर्थः । अवमानम्, अमृष्यमाणाः असहमानाः, अर्थाद् विक्रमेण प्रतिकर्तुं सद्यो व्यवस्यन्तः पुरुषाः । सत्त्वाधिकेषु सत्त्वं पराक्रमः तेनाधिकेषु महापराक्रमशालिषु मध्ये । वचनीयपराक्रमाः वचनीयः अकालप्रयोगान्निन्द्यः पराक्रमः विक्रमो येषां ते तथोक्ताः स्युः ॥ ११ ॥

अक्षानित्यादि । अक्षान् पाशकान् । कितवः अक्षदेवी । स्वकीर्त्या आत्मयशसा अक्षदेवननैपुण्यजन्मना । स्वैरासनः स्वैरं स्वच्छन्दम् अगणितगुरुजनसान्निध्यम् आसनम् उपवेशप्रकारो यस्य सः । रुदन्तीम् अश्रु मुञ्चन्तीम् । रुदधातोस्तुदादित्वमप्यत एव प्रयोगात् कल्प्यम् । काक्षेण पश्यति अक्षिकोणेन विलोकते । अक्षम् इन्द्रियं तच्च प्रकृतेऽक्षिरूपम् । ईषदक्षं काक्षम् । 'ईषदर्थे' इति कोः

एतावाचार्यपितामहौ तां दृष्ट्वा लज्जायमानौ पटान्तान्तर्हितमुखौ स्थितौ । अहो अस्य वर्णाढ्यता । अहो भावोपपन्नता । अहो युक्तलेखता । सुव्यक्तमालिखितोऽयं चित्रपटः । प्रीतोऽस्मि । कोऽत्र ।

**काञ्चुकीयः** — जयतु महाराजः ।

**दुर्योधनः** — बादरायण! आनीयतां स विहगवाहनमात्रविस्मितो दूतः ।

**काञ्चुकीयः** — यदाज्ञापयति महाराजः । (निष्क्रान्तः ।)

**दुर्योधनः** — वयस्य ! कर्ण !

प्राप्तः किलाद्य वचनादिह पाण्डवानां दौत्येन भृत्य इव कृष्णमतिः स कृष्णः ।
श्रोतुं सखे! त्वमपि सज्जय कर्ण! कर्णौ नारीमृदूनि वचनानि युधिष्ठिरस्य ॥

(ततः प्रविशति वासुदेवः काञ्चुकीयश्च ।)

**वासुदेवः** — अद्य खलु धर्मराजवचनाद् धनञ्जयाकृत्रिममित्रतया चाहवदर्पमनुक्तग्राहिणं सुयोधनं प्रति मयाप्यनुचितदौत्यसमयोऽनुष्ठितः ।

---

कादेशः । काक्षेणेति लिखतिनापि संबध्यते । काक्षेण गां लिखत्यपि कुत्सितेन पाशकेन भूमिं लिखति च । इह 'का पथ्यक्षयोः' इति कादेशः । नयज्ञः नीतिज्ञः द्यूतविशेषज्ञो वा 'नयो नीतिद्यूतविशेषयोः' इति मेदिनी ॥ १२ ॥

**एता**वित्यादि । लज्जायमानौ लज्जामनुभवन्तौ । 'सुखादिभ्यः'—इति क्यङ् । लज्जाशब्दस्य सुखादिषु पाठः कल्प्यः । पटान्तान्तर्हितमुखौ वस्त्राग्रच्छन्नवदनौ । अहो इति श्लाघायाम् । अस्य चित्रपटस्य । वर्णाढ्यता वर्णसम्पन्नता । भावोपपन्नता भावेन स्वभावेन आलेखनीयवस्तुगतेन, चित्रकाराभिप्रायेण वा उपपन्नता संवादिता । 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इति मेदिनी । युक्तलेखता युक्तः अन्यूनानतिरिक्तः लेखो लेखनं यस्मिन् स युक्तलेखः तस्य भावस्तत्ता ॥

**बादरायणे**त्यादि । विहगवाहनमात्रविस्मितः विहगः पक्षी गरुडः तद्रूपं वाहनं तन्मात्रेण विस्मितः गर्वितः ॥

**प्राप्त** इत्यादि । कृष्णमतिः मलिनबुद्धिः । त्वमपीत्यपिशब्देन अहं सज्जितकर्णः स्थित एवेति द्योत्यते । नारीमृदूनि स्त्रीवचनाविक्लबानि । वृत्तौ नारीशब्दो नारीसमवेतवचनक्रियावर्ती ॥ १३ ॥

**अद्ये**त्यादि । धनञ्जयाकृत्रिममित्रतया च धनञ्जयस्यार्जुनस्य अकृत्रिमं निरुपाधिकं मित्रं सुहृत् तस्य भावस्तत्ता तया च । आहवदर्पम् आहवे युद्धे दर्पः

कृष्णापराभवभुवा रिपुवाहिनीभकुम्भस्थलीदलनतीक्ष्णगदाधरस्य ।
भीमस्य कोपशिखिना युधि पार्थपत्रिचण्डानिलैश्च कुरुवंशवनं विनष्टम् ॥

इदं सुयोधनशिबिरम् । इह हि,

आवासाः पार्थिवानां सुरपुरसदृशाः स्वच्छन्दविहिता
विस्तीर्णाः शस्त्रशाला बहुविधकरणैः शस्त्रैरुपचिताः ।
हेषन्ते मन्दुरास्थास्तुरगवरघटा बृंहन्ति करिण
ऐश्वर्यं स्फीतमेतत् स्वजनपरिभवादासन्नविलयम् ॥ १५ ॥

भोः,

दुष्टवादी गुणद्वेषी शठः स्वजननिर्दयः ।
सुयोधनो हि मां दृष्ट्वा नैव कार्यं करिष्यति ॥ १६ ॥

भो बादरायण ! किं प्रवेष्टव्यम् ।

**काञ्चुकीयः** — अथकिमथकिम् । प्रवेष्टुमर्हति पद्मनाभः ।

**वासुदेवः** — (प्रविश्य) कथं कथं मां दृष्ट्वा संभ्रान्ताः सर्वक्षत्रियाः । अलमलं संभ्रमेण । स्वैरमासतां भवन्तः ।

---

अहङ्कारो यस्य तम् । अनुक्तग्राहिणम् उक्तावधीरिणम् । मयापि अननुष्ठितपूर्वानुचितकर्मणापि । समयशब्द आचारे सङ्केते वा ।

**कृष्णेति** । रिपुवाहिनीभकुम्भस्थलीदलनतीक्ष्णगदाधरस्य रिपुवाहिनीभानां शत्रुसेनागजानां कुम्भस्थल्या मस्तकस्थलस्य दलने पाटने तीक्ष्णा निर्दया या गदा आयुधविशेषः तस्या धरस्य धारयितुः । भीमस्य, कृष्णापराभवभुवा द्रौपदीपरिभवजन्मना । कोपशिखिना कोपाग्निना । पार्थपत्रिचण्डानिलैश्च अर्जुनबाणरूपैश्चण्डमारुतैश्च । कुरुवंशवनं कुरूणां वंशः कुलमेव वंशो बहुशाखत्वाद् वेणुः तस्य वनम् । विनष्टं, भावित्वेनाभिमतस्य विनाशस्य भूतत्ववचनम् अचिरावश्यम्भावद्योतनार्थम् ॥ १४ ॥

**आवासा** इत्यादि । बहुविधकरणैः बहुप्रकारव्यापारैः । हेषन्ते शब्दायन्ते । मन्दुरास्थाः अश्वशालास्थाः । तुरगवरघटाः अश्वश्रेष्ठसमूहाः । बृंहन्ति गर्जन्ति । बृहि शब्दे । करिणः गजाः । स्फीतं समृद्धम् । आसन्नविलयं सन्निहितनाशम् । इह तृतीयपादान्तलघोर्वैकल्पिकं गुरुत्वं बोद्धव्यम् ॥ १५ ॥

**भो** इति विषादसूचनं वक्ष्यमाणार्थचिन्तया ।

**दुष्टेत्यादि** । दुष्टवादी दुष्टं वदितुं शीलमस्येति तथा । शठः धूर्तः ॥ १६ ॥

**कथमित्यादि** । संभ्रान्ताः ससम्भ्रमाः ॥

**दुर्योधनः** — कथं कथं केशवं दृष्ट्वा सम्भ्रान्ताः सर्वक्षत्रियाः । अलमलं सम्भ्रमेण । स्मरणीयः पूर्वमाश्रावितो दण्डः । नन्वहमाज्ञप्ता ।

**वासुदेवः** — (उपगम्य) भोः सुयोधन! किमास्से ।

**दुर्योधनः** —(आसनात् पतित्वा आत्मगतम्) सुव्यक्तं प्राप्त एव केशवः ।

उत्साहेन मतिं कृत्वाप्यासीनोऽस्मि समाहितः ।
केशवस्य प्रभावेन चलितोऽस्म्यासनादहम् ॥ १७ ॥

अहो बहुमायोऽयं दूतः । (प्रकाशम्) भो दूत! एतदासनमास्यतां ।

**वासुदेवः** —आचार्य! आस्यताम् । गाङ्गेयप्रमुखा राजानः! स्वैरमासतां भवन्तः । वयमप्युपविशामः । (उपविश्य) अहो दर्शनीयोऽयं चित्रपटः । मा तावत् । द्रौपदीकेशाम्बराकर्षणमत्रालिखितम् अहोतुखलु,

सुयोधनोऽयं स्वजनावमानं पराक्रमं पश्यति बालिशत्वात् ।
को नाम लोके स्वयमात्मदोषमुद्घाटयेन्नष्टघृणः सभासु ॥ १८ ॥

---

कथं कथं केशवमित्यादि । अहमिति स्वाज्ञानुष्ठापननिर्बन्धित्वं द्योतयति ॥

भो इत्यादि । किम् आस्से कुशली वर्तसे किमित्यर्थः । कुशलप्रश्नसमुदाचार ईदृशो भासनाटकेषूपलभ्यते ॥

आसनात् पतित्वेति । पतनं च ससंभ्रमं चलनम् । सम्भ्रमे च केशवप्राप्तिज्ञानं निमित्तम् ।

आसनादचलने प्रयत्नमास्थितस्यापि मम कृष्णप्राप्तिज्ञानमात्रेण ससम्भ्रमं यच्चलनं सञ्जातं तत् कृष्णस्य माहात्म्यादित्याह — उत्साहेनेति । अहं, समाहितः अविक्षिप्तचित्तः । उत्साहेन अविशङ्कयेत्यर्थः । मतिम् अनुत्थाननिश्चयम् । कृत्वापि, आसीनोऽस्मि । तथापीत्यर्थगम्यम् । केशवस्य, प्रभावेन महिम्ना । आसनात्, चलितः सम्भ्रमोत्थितः । अस्मि ॥ १७ ॥

अहो इत्यादि । बहुमायः बह्वी बहुप्रकारा माया शाम्बरी यस्य सः ॥

प्रत्युत्थानोपचारेणात्मानं सम्भावयतो द्रोणभीष्मादीन् प्रतिसत्कुर्वन्नाह — आचार्येत्यादि । गाङ्गेयप्रमुखाः भीष्ममुखाः । मुखं प्रगतः प्रमुखः मुख्यः । आपातदर्शनप्रवृत्तं चित्रपटश्लाघावादं तद्गतजुगुप्सितविशेषदर्शनेनाक्षिपति—मा तावदिति । 'केशघर्षणमि'ति क्वचित् पाठः । अहोतुखलु इत्याश्चर्ये ।

सुयोधन इत्यादि । पराक्रमं पश्यति शौर्यं मन्यते । बालिशत्वात् मौर्ख्यात् । नष्टघृणः निर्जुगुप्सः ॥ १८ ॥

आः अपनीयतामेष चित्रपटः ।

दुर्योधनः—बादरायण! अपनीयतां किल चित्रपटः ।

काञ्चुकीयः — यदाज्ञापयति महाराजः । (अपनयति ।)

दुर्योधनः—भो दूत!

धर्मात्मजो वायुसुतश्च भीमो भ्रातार्जुनो मे त्रिदशेन्द्रसूनुः ।
यमौ च तावश्विसुतौ विनीतौ सर्वे सभृत्याः कुशलोपपन्नाः ॥ १९ ॥

वासुदेवः — सदृशमेतद् गान्धारीपुत्रस्य । अथकिमथकिम् । कुशलिनः सर्वे । भवतो राज्ये शरीरे बाह्याभ्यन्तरे च कुशलमनामयं च पृष्ट्वा विज्ञापयन्ति युधिष्ठिरादयः पाण्डवा —

अनुभूतं महद् दुःखं संपूर्णः समयः स च ।
अस्माकमपि धर्म्यं यद् दायाद्यं तद् विभज्यताम् ॥ २० ॥

इति ।

दुर्योधनः—कथं कथं दायाद्यमिति । भोः,

वने पितृव्यो मृगयाप्रसङ्गतः कृतापराधो मुनिशापमाप्तवान् ।
तदा प्रभृत्येव स दारनिःस्पृहः परात्मजानां पितृतां कथं व्रजेत् ॥ २१ ॥

---

धर्मात्मज इत्यादि । त्रिदशेन्द्रसूनुः देवेन्द्रपुत्रः । यमौ युग्मजातौ नकुलसहदेवौ । अश्विसुतौ अश्विनोर्देवतयोः पुत्रौ । कुशलोपपन्नाः क्षेमयुक्ताः किम् । इह प्रश्नकाकुः ॥ १९ ॥

सदृशमित्यादि । अथकिमित्यङ्गीकारे । बाह्यान्तरे शरीरे च बहिर्भवे अभ्यन्तरभवे देहे च । तत्राभ्यन्तरं शरीरं मनः । अनामयम् आरोग्यम् ।

अनुभूतमित्यादि । स समयः एकवर्षाज्ञातवाससङ्केतसचिवो द्वादशवर्षवनवाससङ्केतः । धर्म्यं धर्मादनपेतम् । दायाद्यं पितृरिक्थं । दायः कुलधनं दायरूपम् आद्यम् अदनीयं भोग्यं वस्तु दायाद्यमिति व्युत्पत्तिः ॥ २० ॥

कथमित्यादि । इतिशब्दानन्तरम् उच्यत इति शेषः । एवञ्च पार्थानां दायाद्यमेव नास्तीत्यर्थः ।

अस्माभिर्भुज्यमानं पितृव्यस्य पाण्डोर्धनं पार्थान् प्रति तदा दायाद्यं स्याद्, यदि पाण्डुस्तेषां पिता स्यात् । स तु तान् प्रति पितैव न भवतीत्याह—वन इति ।

**वासुदेवः**—पुराविदं भवन्तं पृच्छामि—

विचित्रवीर्यो विषयी विपत्तिं क्षयेण यातः पुनरम्बिकायाम् ।
व्यासेन जातो धृतराष्ट्र एष लभेत राज्यं जनकः कथं ते ॥ २२ ॥

मा मा भवान्,

एवं परस्परविरोधविवर्धनेन शीघ्रं भवेत् कुरुकुलं नृप! नामशेषम् ।
तत् कर्तुमर्हति भवानपकृष्य रोषं यत् त्वां युधिष्ठिरमुखाः प्रणयाद् ब्रुवन्ति ॥

**दुर्योधनः**—भो दूत! न जानाति भवान् राज्यव्यवहारम् ।

---

पितृव्यः पितृभ्राता पाण्डुः । वने, मृगयाप्रसङ्गतः आखेटप्रसक्त्या । कृतापराधः, अपराधश्च, मृग्या सह मृगरूपं धृत्वा क्रीडतः किन्दमाख्यस्य मुनेर्वधरूपः । अत एव, मुनिशापं 'पत्नीसंसर्गे मरिष्यसी'त्येवमात्मकं मुनेर्निग्रहवचनम् । आ तवान् । तदा प्रभृत्येव शापप्राप्तिकालादारभ्यैव । दारनिःस्पृहः कलत्रनिराशः । सः पितृव्यः । परात्मजानां परेषाम् अन्येषां धर्म-वायु-शक्राश्विनाम् आत्मजाः पुत्राः परात्मजाते परेषाम् । पितृतां, कथं व्रजेत् नैव व्रजेदित्यर्थः ॥ २१ ॥

**पुरेत्यादि** । पुराविदं पुरावृत्तज्ञम् ।

**विचित्रेति** । विषयी विषयासक्तः । विचित्रवीर्यः, क्षयेण राजयक्ष्मणा । विपत्तिं यातः मृतिं गतः । पुनः पश्चात् । व्यासेन महर्षिणा निमित्तेन । अम्बिकायां विचित्रवीर्यभार्यायाम् । जातः, ते, जनकः पिता । एषः धृतराष्ट्रः, राज्यम् अपितुर्विचित्रवीर्यस्य राष्ट्रम् । कथं केन न्यायेन । लभेत । यदि परात्मजो धृतराष्ट्रो विचित्रवीर्यस्य क्षेत्रजः पुत्र इति कृत्वा "अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥" इति शास्त्रात् क्षेत्रिरिक्थं लभेत, तर्हि पार्था अपि क्षेत्रजाः पाण्डोः क्षेत्रिभूतस्य रिक्थं लभेरन्नेवेति भावः ॥ २२ ॥

**मा मा भवानेवमिति** । हे नृप! भवान्, एवं 'परात्मजानां पितृतां कथं व्रजेद्' इत्यनेन प्रकारेण । मा मा, कथयत्वित्यर्थगम्यम् । कथने दोषमाह—परस्परेत्यादिना । नामशेषं नष्टम् । अपकृष्य नियम्य । प्रणयात् स्नेहाद् अथवा प्रार्थनयेत्यर्थः ॥ २३ ॥

**भो दूतेत्यादि** । भवानिति अराजकुलप्रसूतत्वं द्योतयति । अत एव राज्यव्यवहारानभिज्ञत्ववाचोयुक्तिरुपपन्नतरा । राजत्वं हि यदुकुलस्य खण्डितं पूर्वपुरुषययातिशापात् ।

राज्यं नाम नृपात्मजैः सहृदयैर्जित्वा रिपून् भुज्यते
तल्लोके न तु याच्यते न तु पुनर्दीनाय वा दीयते ।
काङ्क्षा चेन्नृपतित्वमाप्तुमचिरात् कुर्वन्तु ते साहसं
स्वैरं वा प्रविशन्तु शान्तमतिभिर्जुष्टं शमायाश्रमम् ॥ २४ ॥

वासुदेवः — भोः सुयोधन! अलमलं बन्धुजने परुषमभिधातुम् ।

पुण्यसञ्चयसम्प्राप्तामधिगम्य नृपश्रियम् ।
वञ्चयेद् यः सुहृद्बन्धून् स भवेद् विफलश्रमः ॥ २५ ॥

दुर्योधनः — भो दूत!

स्यालं तव गुरोर्भूपं कंसं प्रति न ते दया ।
कथमस्माकमेवं स्यात् तेषु नित्यापकारिषु ॥ २६ ॥

---

राज्यमिति । राज्यं नाम, नामेति सम्भावनायाम् । सहृदयैः सचित्तैः समुन्नतचित्तैरित्यर्थः । नृपात्मजैः नृपस्य औरसैः पुत्रैः । रिपून् शत्रून् । जित्वा अभिभूय । भुज्यते अनुभूयते । यथास्माभिस्तथेत्यार्थम् । लोके, तद् राज्यम् । न तु याच्यते नैव भिक्ष्यते । यथा पार्थैस्तथेत्यार्थम् । वा अथवा । दीनाय दरिद्राय । न तु पुनः दीयते नैव दीयते । इत्थं राज्यव्यवहारस्य स्थितौ पार्थैर्यत् कर्तव्यं तद् बोधयति — नृपतित्वं राजत्वम् । अचिराद् अविलम्बम् । आप्तुं लब्धुं । काङ्क्षा इच्छा । चेद् अस्ति यदि । ते पार्थाः । साहसं युद्धम् । कुर्वन्तु, अर्थादस्माभिः सह । वा पक्षान्तरे राज्येप्साभावे इत्यर्थः । शान्तमतिभिः निर्मत्सरबुद्धिभिः अर्थाद् मुनिभिः । जुष्टं सेवितम् आश्रमं मुनिगृहम् । शमाय शान्त्यर्थम् । स्वैरं स्वच्छन्दम् । प्रविशन्तु ॥ २४ ॥

अलमित्यादि । न युज्यत इत्यर्थेऽलंशब्दः । द्विरुक्तिर्दार्ढ्याय । परुषं निष्ठुरम् ।

पुण्येति । यः, पुण्यसञ्चयसंप्राप्तं सञ्चितपुण्योपनताम् । नृपश्रियं राजलक्ष्मीम् । अधिगम्य स्वीकृत्य । सुहृद्बन्धून्, वञ्चयेत् नृपश्रीसंविभागेन नानुगृह्णीयात । सः, विफलश्रमः विफलः इष्टासिद्ध्या निष्फलः अनिष्टप्राप्त्या विपरीतफलो वा श्रमः वञ्चनविषय आयासो यस्य स तथा । भवेत । सुहृद्बन्धुविषयया वञ्चनया इष्टासिद्धिरनिष्टप्राप्तिश्च भवतीत्यभिप्रायः ॥ २५ ॥

बन्धुवञ्चनोक्तिमसहमान आह — स्यालमिति । तव, गुरोः पितुर्वसुदेवस्य स्यालं पत्नीभ्रातरम् । अर्थात् स्वन्मातुलम् । भूपं राजानम् । कंसं प्रति, ते,

**वासुदेवः** — अलं तन्मद्दोषतो ज्ञातुम् ।

कृत्वा पुत्रवियोगार्तां बहुशो जननीं मम ।
वृद्धं स्वपितरं बद्ध्वा हतोऽयं मृत्युना स्वयम् ॥ २७ ॥

**दुर्योधनः** — सर्वथा वञ्चितस्त्वया कंसः । अलमात्मस्तवेन । न शौर्यमेतत् । पश्य,

जामातृनाशव्यसनाभितप्ते रोषाभिभूते मगधेश्वरेऽथ ।
पलायमानस्य भयातुरस्य शौर्यं तदेतत् क्व गतं तवासीत् ॥ २८ ॥

**वासुदेवः** — भोः सुयोधन ! देशकालावस्थापेक्षि खलु शौर्यं नयानुगामिनाम् । इह तिष्ठतु तावदस्मद्गतः परिहासः । स्वकार्यमनुष्ठीयताम् ।

---

दया, न, नासीत् । स हि निहतस्त्वयेत्यर्थः । एवं, सुहृद्बन्धुमुख्ये स्वमातुलेऽपि तव दया नेत्येवं स्थित इत्यर्थः । नित्यापकारिषु, तेषु पाण्डवेषु विषये । अस्माकं, कथं स्यात्, अर्थाद् दया ॥ २६ ॥

अलमिति । तत् कंसहननम् । मद्दोषतो ज्ञातुं मद्दोषान्निष्पन्नं मन्तुम् । अलं न युज्यते ।

कंस आत्मदोषादेव मृत्युवशं गत इत्याह — **कृत्वेत्यादि** । स्वपितरम् उग्रसेनम् । शिशुभूतबहुभागिनेयहननं, निरपराधनिजभगिनीशोकोत्पादनम्, आत्मपितृबन्धनम् इत्येतैः पापकृत्यैः कंसः स्वयमेव मृत्युवशं गतो न तु मया हत इति श्लोकाभिप्रायः ॥ २७ ॥

**सर्वथेत्यादि** । एतत् कंसहननम् । शौर्यं न, शूरकर्म न भवति । पश्य वक्ष्यमाणं जानीहीत्यर्थः ।

**जामात्रिति** । अथ कंसवधानन्तरम् । जामातृनाशव्यसनाभितप्ते जामातुः स्वदुहितृभर्तुः कंसस्य नाशेन यद् व्यसनं दुःखं तेनाभितप्ते । मगधेश्वरे जरासन्धे । रोषाभिभूते सति कोपाविष्टे सति, कोपात् त्वां प्रति कृताभिषेणने सतीत्यार्थम् । भयातुरस्य भयपीडितस्य । अत एव पलायमानस्य स्वावासदेशं परित्यज्य धावतः । तव तदेतद्, यत् कंसे प्रयुक्तं तदिदमित्यर्थः । शौर्यं, क्व, गतम् आसीत् ॥ २८ ॥

**भो इत्यादि** । देशकालावस्थापेक्षि देशं कालम् अवस्थां च अपेक्षितुं शीलमस्येति तथा । अपेक्षितमिति पाठे सञ्जातापेक्षं देशकालावस्थासापेक्षमित्यर्थः ।

कर्तव्यो भ्रातृषु स्नेहो विस्मर्तव्या गुणेतराः ।
सम्बन्धो बन्धुभिः श्रेयान् लोकयोरुभयोरपि ॥ २९ ॥

दुर्योधनः —
देवात्मजैर्मनुष्याणां कथं वा बन्धुता भवेत् ।
पिष्टपेषणमेतावत् पर्याप्तं छिद्यतां कथा ॥ ३० ॥

वासुदेवः — (आत्मगतम्)
प्रसाद्यमानः साम्नायं न स्वभावं विमुञ्चति ।
हन्त संक्षोभयाम्येनं वचोभिः परुषाक्षरैः ॥ ३१ ॥

(प्रकाशम्) भोः सुयोधन! किं न जानीषेऽर्जुनस्य बलपराक्रमम् ।

दुर्योधनः — न जाने ।

वासुदेवः — भोः! श्रूयतां,
कैरातं वपुरास्थितः पशुपतिर्युद्धेन सन्तोषितो
वह्नेः खाण्डवमश्नतः सुमहती वृष्टिः शरैश्छादिता ।
देवेन्द्रार्तिकरा निवातकवचा नीता क्षयं लीलया
नन्वेकेन तदा विराटनगरे भीष्मादयो निर्जिताः ॥ ३२ ॥

---

एवञ्च जरासन्धाभियाने शौर्यं देशकालाननुगुणत्वान्न प्रयुक्तमित्यभिप्रायः । नयानुगामिनां नीत्यनुसारिणाम् । अस्मद्गतः अस्मत्संबद्धः ।

कर्तव्य इत्यादि । गुणाः इतरे अन्ये येभ्यस्ते गुणेतराः दोषाः । उभयोः इह परत्र च ॥ २९ ॥

देवेत्यादि । देवात्मजैः देवानां यमादीनां पुत्रैः । पिष्टपेषणं पिष्टपेषणकल्पं 'राज्यं दीयतामि'त्यस्यार्थस्योक्तस्यैव पुनःपुनर्वचनम् । पर्याप्तं यथेप्सितम् । कथा राज्यदानप्रस्तावः । छिद्यतां विरम्यताम् ॥ ३० ॥

प्रसाद्यमान इत्यादि । साम्ना सान्त्वेन । हन्तेति सम्भ्रमे । संक्षोभयामि स्वनिश्चयाद् विचालयामि ॥ ३१ ॥

भो इत्यादि । बलपराक्रमं बलं शक्तिः तद्युक्तं विक्रमम् ।

कैरातमित्यादि । कैरातं किरातस्य व्याधस्येदम् । आस्थितः आश्रितः । पशुपतिः परमेश्वरः । खाण्डवं तदाख्यं वनम् । अश्नतः दहतः । वृष्टिः इन्द्रोत्पादितं मेघवर्षम् । निवातकवचाः असुरविशेषाः । एकेन असहायेन ॥ ३२ ॥

अपिच, तवापि प्रत्यक्षमपरं कथयामि ।

ननु त्वं चित्रसेनेन नीयमानो नभस्तलम् ।
विक्रोशन् घोषयात्रायां फल्गुनेनैव मोक्षितः ॥ ३३ ॥

किं बहुना,

दातुमर्हसि मद्वाक्याद् राज्यार्धं धृतराष्ट्रज ! ।
अन्यथा सागरान्तां गां हरिष्यन्ति हि पाण्डवाः ॥ ३४ ॥

दुर्योधनः — कथं कथम् । हरिष्यन्ति हि पाण्डवाः ।

प्रहरति यदि युद्धे मारुतो भीमरूपी
प्रहरति यदि साक्षात् पार्थरूपेण शक्रः ।
परुषवचनदक्ष ! त्वद्वचोभिर्न दास्ये
तृणमपि पितृभुक्ते वीर्यगुप्ते स्वराज्ये ॥ ३५ ॥

---

नन्वित्यादि । चित्रसेनेन गन्धर्वविशेषेण । फल्गुनेनैव अर्जुनेनैव, न तु त्वत्सुहृत्तमैः कर्णादिभिः । मोक्षितः मोचितः ॥ ३३ ॥

दातुमित्यादि । राज्यार्धं राज्यस्य अर्धः असमो यः कश्चिदंशो राज्यार्धः तम् । समांशविवक्षायां तु अर्धशब्दस्य क्लीबत्वाद 'अर्धं नपुंसकम्' इति समासे अर्धराज्यमिति स्यात् । असमांशदानोक्त्या च "पञ्च नस्तात दीयन्तां ग्रामा वा नगराणि वा । वसेम सहिता येषु मा च नो भरता नशन् ॥" इति महाभारतोक्तः पञ्चग्रामप्रार्थनरूपः अवरपक्षः सूचितः । सागरान्तां समुद्रसीमाम् । हरिष्यन्ति हि बलाद् ग्रहीष्यन्त्येव ॥ ३४ ॥

कथमित्यादि । कथंशब्दो गर्हायाम् । हरिष्यन्तीत्यत्र काकुः ।

प्रहरतीति । मारुतः वायुदेवः । भीमरूपी भीमसेनरूपवान् सन् । युद्धे अचिरभाविनि रणे । प्रहरति यदि, पुत्रपक्षपातात् प्रहरिष्यति चेदित्यर्थः । वर्तमानसामीप्ये लट् । प्रहरतिरिहाकर्मक आयुधप्रयोगे वर्तते । प्रहरत्वित्यध्याहारः, अनुज्ञायां च लोट्, कामं प्रहरणमभ्यनुजानामि न ह्यहं प्रहरणाद् बिभेमीत्यभिप्रायः । शक्रः इन्द्रः । साक्षात् प्रत्यक्षम् । पार्थरूपेण अर्जुनरूपं धृत्वेत्यर्थः । प्रहरति यदि, प्रहरत्विति पूर्ववत् । हे परुषवचनदक्ष ! निष्ठुरभाषणचतुर ! । पितृभुक्ते मत्पित्रानुभूते । वीर्यगुप्ते मद्वीर्यरक्षिते । स्वराज्ये, तृणमपि परमाल्पमंशमपीत्यर्थः । त्वद्वचोभिः त्वद्वचनानुसारेण । न दास्ये, न वितरिष्यामि ॥ ३५ ॥

वासुदेवः — भोः कुरुकुलकलङ्कभूत! अयशोलुब्ध! वयं किल तृणान्तराभिभाषकाः ।

दुर्योधनः — भो गोपालक! तृणान्तराभिभाष्यो भवान् ।

अवध्यां प्रमदां हत्वा हयं गोवृषमेव च ।
मल्लानपि सुनिर्लज्जो वक्तुमिच्छसि साधुभिः ॥ ३६ ॥

वासुदेवः — भोः सुयोधन! ननु क्षिपसि माम् ।

दुर्योधनः — ननु सत्यमेवैतत् ।

वासुदेवः — गच्छामि तावत् ।

दुर्योधनः — गच्छ गच्छ पशुखुरोद्धतरेणुरूषिताङ्गो व्रजमेव । विफलीकृतः कालः ।

वासुदेवः — एवमेवास्तु । न वयमनुक्तसन्देशा गन्तुमिच्छामः । तदाकर्ण्यतां युधिष्ठिरस्य सन्देशः ।

दुर्योधनः — आः अभाष्यस्त्वम् ।

अहमवधृतपाण्डरातपत्रो द्विजवरहस्तधृताम्बुसिक्तमूर्धा ।
अवनतनृपमण्डलानुयात्रैः सह कथयामि भवद्विधैर्न भाषे ॥ ३७ ॥

---

भो इत्यादि । तृणेन अन्तरं व्यवधानं येषाम् अभिभाष्येण सह ते तृणान्तराः, तृणान्तराः सन्तोऽभिभाषकाः तृणान्तराभिभाषकाः । तृणमन्तरतः कृत्वैव त्वमस्माकमभिभाष्यो न साक्षादित्यभिप्रायः ॥

अवध्यामित्यादि । अवध्यां वधानर्हां । प्रमदां स्त्रियं पूतनां नाम दानवीम् । हयम् अश्वरूपं केशिनामानमसुरम् । गोवृषम् अरिष्टर्षभं दानवम् । मल्लान् चाणूरादीन् मल्लजातिभवान् । व्रात्यपूर्वायां क्षत्रियायां क्षत्रियाज्जाता मल्ला उच्यन्ते, ते च मुष्टियुद्धाद्यभ्यासवृत्तयः । सुनिर्लज्जः सुष्ठु लज्जारहितः । अबलामृगदुर्बलहननं शिष्टगर्हितं कृतवतो हि लज्जोचिता । साधुभिः सद्भिर्मद्विधैः ॥ ३६ ॥

भो इत्यादि । क्षिपसि निन्दसि ॥

गच्छेत्यादि । व्रजमेव । गोपालकस्य गोष्ठगमनं युक्तम् । विफलीकृतः अनभिभाष्याभिभाषणे विनियुक्तत्वात् ॥

अहमित्यादि । सिक्तेति सेचनं राज्याभिषेकः । अवनतनृपमण्डलानुयात्रैः अवनतस्य मदधश्चरस्य नृपमण्डलस्य अनुयात्रैः अनुयायिभिर्भृत्यैरित्यर्थः । कंस-

**वासुदेवः** — न व्याहरति किल मां सुयोधनः । भोः !

शठ ! बान्धवनिःस्नेह ! काक ! केकर ! पिङ्गल ! ।
त्वदर्थात् कुरुवंशोऽयमचिरान्नाशमेष्यति ॥ ३८ ॥

भो भो राजानः ! गच्छामस्तावत् ।

**दुर्योधनः** — कथं यास्यति किल केशवः । दुःशासन ! दुर्मर्षण ! दुर्मुख ! दुर्बुद्धे ! दुष्टेश्वर ! दूतसमुदाचारमतिक्रान्तः केशवो बध्यताम् । कथमशक्ताः । दुःशासन ! न समर्थः खल्वसि ।

करितुरगनिहन्ता कंसहन्ता स कृष्णः
पशुपकुलनिवासादानुजीव्यानभिज्ञः ।
हृतभुजबलवीर्यः पार्थिवानां समक्षं
स्ववचनकृतदोषो बध्यतामेष शीघ्रम् ॥ ३९ ॥

अयमशक्तः । मातुल ! बध्यतामयं केशवः । कथं पराङ्मुखः पतति । भवतु, अहमेव पाशैर्बध्नामि । (पाशमुद्यम्योपसर्पति ।)

---

भृत्य इतिवत् क्षेपोऽयम् । कथयामि प्रतिजाने । कथयतः कथयामीत्युक्तिर्हि विशिष्टे कथने प्रतिज्ञानरूपे पर्यवस्यति । प्रतिज्ञानविषयश्च भवादृशैः साकम् अभाषणम् ॥ ३७ ॥

शठेति । शठ ! वञ्चक ! । काक ! कटुभाषित्वात् काकसदृश ! । केकर ! विकृताक्ष ! । तारकामपाङ्ग आकृष्य वीक्षको हि केकरः । काककेकरेत्येकपदं वा उपमानसमासात् । पिङ्गल ! चपलत्वाद् वानरकल्प ! त्वदर्थात् त्वन्निमित्तात् । अयं, कुरुवंशः, नाशम् अभावम् । एष्यति प्राप्स्यति ॥ ३८ ॥

अथ जिगमिषुं भगवन्तं बन्धुं सुयोधनस्य संरम्भः कथं यास्यतीत्यादिना प्रकाश्यते । दूतसमुदाचारम् अतिक्रान्तः दूतमर्यादामतिक्रम्य स्थितः । अतोऽपराधी बन्धनार्ह इत्यर्थः । न समर्थः अर्थात् केशवं बन्धुम् ।

करीत्यादि । करितुरगनिहन्ता करिणः उत्पलापीडाख्यस्य गजस्य तुरगस्य अश्वासुरस्य च निहन्ता । पशुपकुलनिवासात् गोपालगृहनिवासात् । आनुजीव्यानभिज्ञः आनुजीव्यस्य अनुजीविकर्मणः अनभिज्ञः ॥ ३९ ॥

बन्धुं कृतप्रयत्नस्य दुश्शासनस्याशक्तिमुपलभ्याह — **अयमशक्त** इति । शकुनिं चोदयति — मातुलेत्यादि । कथमित्यादि । पतति, बन्धुं किमपि चेष्टित्वा

वासुदेवः — कथं भवितुकामो मां किल सुयोधनः । भवतु, सुयोधनस्य सामर्थ्यं पश्यामि । ( विश्वरूपमास्थितः । )

दुर्योधनः — भो दूत !

सृजसि यदि समन्ताद् देवमायाः स्वमायाः
प्रहरसि यदि वा त्वं दुर्निवारैः सुरास्त्रैः ।
हयगजवृषभाणां पातनाज्जातदर्पो
नरपतिगणमध्ये वध्यसे त्वं मयाद्य ॥ ४० ॥

आः तिष्ठेदानीम् । कथं न दृष्टः केशवः । अयं केशवः । अहो ह्रस्वत्वं केशवस्य । आः तिष्ठेदानीम् । कथं न दृष्टः केशवः । अयं केशवः । अहो दीर्घत्वं केशवस्य । कथं न दृष्टः केशवः । अयं केशवः । सर्वत्र मन्त्रशालायां केशवा भवन्ति । किमिदानीं करिष्ये । भवतु, दृष्टम् । भो भो राजानः ! एकैकैकः केशवो वध्यताम् । कथं स्वयमेव पाशैर्बद्धाः पतन्ति राजानः । साधु भो जम्भक ! साधु ।

---

परिश्रान्तो भुवि पततीत्यर्थः । भवत्विति निषेधेऽव्ययम् । दुश्शासनादयो मा बध्नन्तु ॥

कथमित्यादि । भवितुकामः भवितुं बन्धुं काम इच्छा यस्य सः । भव बन्धने भ्वादिः । विश्वरूपं विश्वं कृत्स्नं जगत्, तदात्मकं रूपम् अपरिच्छिन्नम् आत्मनः स्वरूपमित्यर्थः । आस्थितः अङ्गीकृतवान् ॥

भगवतो विश्वरूपप्रदर्शनं मोहादिन्द्रजालप्रयोगं मन्यमान आह — सृजसीत्यादि । देवमायाः देवानां मायाः । स्वमायाः आत्मदृष्टा मायाः । सुरास्त्रैः देवास्त्रैः । इह 'सृजसि यदि' इत्यत्र 'सृजे'त्यध्याहारः । यथाकामं मायाः सृज, न मे त्वन्मायासर्गाद् भयमिति भावः । तथा 'प्रहरसि यदि' इत्यत्र 'प्रहरे'त्यध्याहारः' यथाकामं प्रहर, न मे सुरास्त्रप्रहाराद् भयमिति भावः ॥ ४० ॥

अथात्यद्भुतभगवद्विश्वरूपदर्शनोद्भ्रान्तस्य भ्रमविलसितवर्णनायोपक्रमः— आस्तिष्ठेत्यादिना । दृष्टस्य भगवतो झटिति तिरोभावादाह—कथमित्यादि । पुनराविर्भावादाह—अयं केशव इति । एवमुत्तरत्र । नृपान् केशवबन्धनार्थमुद्यम्य पाशैरात्मानमेव बद्ध्वा भूमौ पतितान् दृष्ट्वाह—कथं स्वयमेवेत्यादि । जम्भक ! मायाविन् ! ।

मत्कार्मुकोदरविनिःसृतबाणजालैर्विद्धं क्षरत्क्षतजरञ्जितसर्वगात्रम् ।
पश्यन्तु पाण्डुतनयाः शिबिरोपनीतं त्वां बाष्परुद्धनयनाः परिनिःश्वसन्तः ॥
(निष्क्रान्तः ।)

**वासुदेवः** — भवतु, पाण्डवानां कार्यमहमेव साधयामि । भोः सुदर्शन ! इतस्तावत् ।

(ततः प्रविशति सुदर्शनः ।)

**सुदर्शनः** — एष भोः !

श्रुत्वा गिरं भगवतो विपुलप्रसादान्निर्धावितोऽस्मि परिवारिततोयदौघः ।
कस्मिन् खलु प्रकुपितः कमलायताक्षः कस्याद्य मूर्धनि मया प्रविजृम्भितव्यम् ॥
क्वनुखलु भगवान् नारायणः ।

अव्यक्तादिरचिन्त्यात्मा लोकसंरक्षणोद्यतः ।
एकोऽनेकवपुः श्रीमान् द्विषद्बलनिषूदनः ॥ ४३ ॥

(विलोक्य) अये अयं भगवान् हस्तिनपुरद्वारे दूतसमुदाचारेणोपस्थितः । कुतः खल्वापः कुतः खल्वापः । भगवति ! आकाशगङ्गे ! आपस्तावत् । हन्त स्रवति । (आचम्योपसृत्य) जयतु भगवान् नारायणः । (प्रणमति ।)

---

मदित्यादि । विद्धं विदारितम् । अत एव क्षरत्क्षतजरञ्जितसर्वगात्रं स्रवद्रक्तारुणितसर्वावयवम् ॥ ४१ ॥

भवत्वित्यादि । दुर्योधननिग्रहाय स्वचक्रराजमाह्वयति—भो इत्यादि । आयाहीति शेषः ॥

तत इत्यादि । सुदर्शन इति पुंस्त्वं सुदर्शनाभिमानिदेवाभिप्रायम् ॥

श्रुत्वेत्यादि । भगवतः, ऐश्वर्यवीर्ययशःश्रीज्ञानवैराग्याणि भगाः तद्वतः । निर्धावितः नितरां शीघ्रमागतः । परिवारिततोयदौघः परित उत्सारितमेघबृन्दः । कस्मिन् द्वेष्यजने । प्रविजृम्भितव्यं प्रविजृम्भितुं पराक्रमितुम् अर्हम् ॥ ४२ ॥

अव्यक्तेत्यादि । अव्यक्तादिः अव्यक्तस्य कारणभूतायाः प्रकृतेः आदिः कारणभूतः । अचिन्त्यात्मा इदन्तयाऽऽद्यगित्यप्रतर्क्यस्वरूपः । द्विषद्बलनिषूदनः शत्रुबलनाशकः ॥ ४३ ॥

अये इत्यादि । कुतः खल्वाप इति द्विरुक्तिः संभ्रमात् । स्रवति शौचार्थमर्थितं जलं स्वर्गङ्गा स्यन्दयतीत्यर्थः ॥

वासुदेवः — सुदर्शन! अप्रतिहतपराक्रमो भव ।

सुदर्शनः — अनुगृहीतोऽस्मि ।

वासुदेवः — दिष्ट्या भवान् कर्मकाले प्राप्तः ।

सुदर्शनः — कथं कथं कर्मकाल इति । आज्ञापयतु भगवानाज्ञापयतु ।
किं मेरुमन्दरकुलं परिवर्तयामि संक्षोभयामि सकलं मकरालयं वा ।
नक्षत्रवंशमखिलं भुवि पातयामि नाशक्यमस्ति मम देव! तव प्रसादात् ॥

वासुदेवः — भोः सुदर्शन! इतस्तावत् । भोः सुयोधन!
यदि लवणजलं वा कन्दरं वा गिरीणां ग्रहगणचरितं वा वायुमार्गं प्रयासि ।
मम भुजबलयोगप्राप्तसंजातवेगं भवतु चपल! चक्रं कालचक्रं तवाद्य ॥

सुदर्शनः — भोः सुयोधनहतक! तिष्ठ तिष्ठ । (पुनर्विचार्य) प्रसीदतु भगवान् नारायणः ।

महीभारापनयनं कर्तुं जातस्य भूतले ।
अस्मिन्नेवं गते देव! ननु स्याद् विफलः श्रमः ॥ ४६ ॥

---

दिष्ट्येत्यादि । दिष्ट्येति हर्षेऽव्ययम् । कर्मकाले क्रियाकाले ॥

किमित्यादि । मेरुमन्दरकुलं मेरुमन्दरयोः पर्वतयोः कुलं राजिम् । परिवर्तयामि किं विनिमये किं, मेरुकुलस्थाने मन्दरकुलं तत्स्थाने मेरुकुलं च स्थापयामि किमित्यर्थः । मकरालयं समुद्रम् । नक्षत्रवंशं नक्षत्रमण्डलम् ॥ ४४ ॥

भो इत्यादि । इतस्तावदिति । पश्येति शेषः । सुयोधनावस्थानदेशप्रदर्शनं चेदम् । अस्मिन् प्रदेशे स्थितः सुयोधनस्तव लक्ष्य इति तात्पर्यम् ।

यदीत्यादि । लवणजलं क्षारसागरम् । ग्रहगणचरितं ग्रहगणेन चरितं सञ्चारविषयीकृतम् । वायुमार्गं वायोः परिवहाख्यस्य मार्गम् । प्रयासि यदि गच्छसि चेत् । प्रयाहीत्यध्याहारः । प्राणपरित्राणार्थं यत्र क्वापि गच्छसि चेद् यथेच्छं गच्छेत्यभिप्रायः । तथापि मदीयं चक्रं त्वामद्यैव हनिष्यतीत्यभिप्रायकं ममेत्यादि । भुजबलयोगप्राप्तसञ्जातवेगं भुजबलयोगप्राप्तं बाहुवीर्यसम्बन्धं प्राप्तं, सञ्जातवेगं च । 'द्वितीया श्रितातीते'त्यादिना द्वितीयान्तस्य प्राप्तपदेन समासः । कालचक्रं यमचक्रम् ॥ ४५ ॥

महीति । हे देव!, महीभारापनयनं मह्या भूमेः यो भारो दुर्जनातिवृद्धिजनितः, तस्य अपनयनं दुर्जनक्षपणेन परिहरणम् । कर्तुं भीमार्जुनादिद्वारेण विधातुम् ।

**वासुदेवः** — सुदर्शन ! रोषात् समुदाचारो नावेक्षितः । गम्यतां स्वनिलयमेव ।

**सुदर्शनः** — यदाज्ञापयति भगवान् नारायणः । कथं कथं गोपालक इति । त्रिचरणातिक्रान्तत्रिभुवनो नारायणः खल्वत्रभवान् । शरणं व्रजन्तु भवन्तः । यावद् गच्छामि । अये एतद् भगवदायुधवरं शार्ङ्गं प्राप्तम् ।

तनुमृदुललिताङ्गं स्त्रीस्वभावोपपन्नं हरिकरधृतमध्यं शत्रुसङ्घैककालः ।
कनकखचितपृष्ठं भाति कृष्णस्य पार्श्वे नवसलिलदपार्श्वे चारु विद्युल्लतेव ॥

---

भूतले, जातस्य अवतीर्णस्य अर्थात् तव । श्रमः मनुष्यरूपेणावतरणयत्नः । अस्मिन् दुर्योधने । एवं गते सति इमं प्रकारं प्राप्ते । मया निहते सतीत्यर्थः । विफलो ननु स्यात् निष्फल एव भवेत् । युद्धप्रवर्तकसुयोधनाभावेन युद्धाभावे जनक्षयाभावादिति भावः ॥ ४६ ॥

**सुदर्शने**त्यादि । समुदाचारः तटस्थवृत्तिः स्वकृत्यं वा । स्वनिलयमेव स्वस्यालयमुद्दिश्यैव । गम्यतां, न त्विदानीं सुयोधनो हन्यतामित्यर्थः ॥

**यदि**त्यादि । कथं कथं गोपालक इति । गोपालक इति बुद्धिर्वो गर्हितेत्यर्थः । कथंशब्दो गर्हायाम् । कस्तर्ह्ययं तत्राह — त्रिचरणेत्यादि । त्रिचरणातिक्रान्तत्रिभुवनः त्रिभिश्चरणैः पदन्यासैः अतिक्रान्तं लङ्घितं त्रिभुवनं लोकत्रयं येन सः । त्रिभुवन इत्यस्य स्थाने त्रिलोक इत्यपि पाठः । तदा त्रिचरणातिक्रान्ताः त्र्यवयवा लोका येन स इति विग्रहः । भवन्तः, शरणं व्रजन्तु रक्षकं प्रपद्यन्ताम्, अर्थाद् भगवन्तं । यावद् गच्छामि गमिष्यामि । 'यावत्पुरानिपातयोर्लट्' इति लट् । अथ भगवदनुज्ञया गच्छतः सुदर्शनस्य क्रमेण शार्ङ्गकौमोदकीपाञ्चजन्यनन्दकगरुडैः पथि समागमं, भगवदभिप्रायनिवेदनेन तेषां निवृत्तिं च वक्तुमुपक्रमः — अये एतदित्यादिना । शार्ङ्गं विष्णुचापः ।

**तन्वि**ति । तनुमृदुललिताङ्गं कृशश्लक्ष्णकोमलावयवम् । अत एव स्त्रीस्वभावोपपन्नं स्त्रीस्वभावयुक्तम् । हरिकरधृतमध्यं व्यापारसमयेषु कृष्णपाणिगृहीतमध्यम् । शत्रुसङ्घैककालः शत्रुसमूहस्य मुख्यो मृत्युः । कनकखचितपृष्ठं कनकखचितं स्वर्णसंपृक्तं पृष्ठम् उपरिभागो यस्य तत् । एतेन विद्युल्लतासावर्ण्यं ध्वनितम् । चारु मनोहरम् । प्रकृतं शार्ङ्गं, नवसलिलदपार्श्वे नूतनमेघोपान्ते । विद्युल्लतेव विद्युत् तडित् लतेव वल्लीव दीर्घप्रसृतत्वाद् विद्युल्लता, उपमितसमासः, सेव । कृष्णस्य पार्श्वे भाति कृष्णस्य देहोपान्ते प्रकाशते । अर्थाद् व्यापारसमयेषु ॥ ४७ ॥

भो भोः! शार्ङ्ग! प्रशान्तरोषो भगवान् नारायणः। गम्यतां स्वनिलयमेव। हन्त निवृत्तः। यावद् गच्छामि। अये इयं कौमोदकी प्राप्ता।

मणिकनकविचित्रा चित्रमालोत्तरीया सुररिपुगणगात्रध्वंसने जाततृष्णा।
गिरिवरतटरूपा दुर्निवारातिवीर्या व्रजति नभसि शीघ्रं मेघवृन्दानुयात्रा॥

हे कौमोदकि! प्रशान्तरोषो भगवान् नारायणः। हन्त निवृत्ता। यावद् गच्छामि। अये अयं पाञ्चजन्यः प्राप्तः।

पूर्णेन्दुकुन्दकुमुदोदरहारगौरो नारायणाननसरोजकृतप्रसादः।
यस्य स्वनं प्रलयसागरघोषतुल्यं गर्भा निशम्य निपतन्त्यसुराङ्गनानाम्॥

हे पाञ्चजन्य! प्रशान्तरोषो भगवान्। गम्यतां स्वनिलयमेव। हन्त निवृत्तः। अये नन्दकासिः प्राप्तः।

वनिताविग्रहो युद्धे महासुरभयङ्करः।
प्रयाति गगने शीघ्रं महोल्केव विभात्ययम्॥ ५०॥

हे नन्दक! प्रशान्तरोषो भगवान्। गम्यतां स्वनिलयमेव। हन्त निवृत्तः। यावद् गच्छामि। अये एतानि भगवदायुधवराणि।

---

भो भो इत्यादि। निवृत्तः कृष्णान्तिकगमनोद्यमान्निवृत्य स्थित इत्यर्थः। पुंस्त्वं शार्ङ्गाभिमानिदेवाभिप्रायम्। 'निवृत्तमि'ति वा पाठः।

मणीत्यादि। मणिकनकविचित्रा रत्नैः स्वर्णैश्च अलाङ्कारभूतैश्चित्रवर्णा। चित्रमालोत्तरीया चित्रा माला पुष्पस्रग् उत्तरीयं यस्याः सा। गिरिवरतटरूपा गिरिवरतटस्य पर्वतराजोत्सेधस्येव रूपम् आकृतिर्यस्याः सा। मेघवृन्दानुयात्रा मेघवृन्दम् अनुयात्रम् अनुगं यस्याः सा॥ ४८॥

हे इत्यादि। पाञ्चजन्यः विष्णुशङ्खः।

पूर्णेत्यादि। नारायणाननसरोजकृतप्रसादः श्रीकृष्णमुखपद्माध्मानानुगृहीतः॥ ४९॥

हे पाञ्चजन्येत्यादि। नन्दकासिः नन्दकाख्यः खड्गः।

वनितेत्यादि। वनिताविग्रहः स्त्रीरूपः। महोल्केव महती उल्का प्रज्वलिताग्रं काष्ठम्। तदिव॥ ५०॥

सोऽयं खड्गः खरांशोरपहसिततनुः स्वैः करैर्नन्दकाख्यः
सेयं कौमोदकी या सुररिपुकठिनोरःस्थलक्षोददक्षा ।
सैषा शार्ङ्गाभिधाना प्रलयघनरवज्यारवा चापयष्टिः
सोऽयं गम्भीरघोषः शशिकरविशदः शङ्खराट् पाञ्चजन्यः ॥५१॥

हे शार्ङ्ग ! कौमोदकि ! पाञ्चजन्य ! दैत्यान्तकृन्नन्दक ! शत्रुवह्ने ! ।
प्रशान्तरोषो भगवान् मुरारिः स्वस्थानमेवात्र हि गच्छ तावत् ॥ ५२ ॥

हन्त निवृत्ताः । यावद् गच्छामि । अये अत्युद्धूतो वायुः । अतितपत्यादित्यः । चलिताः पर्वताः । क्षुब्धाः सागराः । पतिता वृक्षाः । भ्रान्ता मेघाः । प्रलीना वासुकिप्रभृतयो भुजङ्गेश्वराः । किन्नुखल्विदम् । अये अयं भगवतो वरवाहनं गरुडः प्राप्तः ।

सुरासुराणां परिखेदलब्धं येनामृतं मातृविमोक्षणार्थम् ।
आच्छिन्नमासीद् द्विषतो मुरारेस्त्वामुद्वहामीति वरोऽपि दत्तः ॥ ५३ ॥

---

एवं निवर्तितानि स्वान्तिके सम्भूय स्थितानि सर्वाणि भगवदायुधान्युद्दिश्याह—सोऽयमित्यादि । स इति प्रसिद्धार्थे । खरांशोः सूर्यस्य । करैः अंशुभिः । चापयष्टिः धनुर्दण्डः । शङ्खराट् शङ्खराजः ॥ ५१ ॥

हे शार्ङ्गेत्यादि । दैत्यान्तकृत ! हे असुरनाशकर ! ॥ ५२ ॥

हन्तेत्यादि । अत्युद्धूतः अत्युत्कम्पितः । इदं वातात्युत्कम्पनसूर्यातितपनादिकम् । किन्नु खलु अज्ञातं, केन निमित्तेन संभूतमिति न ज्ञायत इत्यर्थः । अज्ञातार्थे किंशब्दः। अये इति स्मरणे । तच्च निमित्तविषयम् । प्राप्तः सन्निहितः । एवञ्च भगवत्कैङ्कर्याय सन्निधास्यतो गरुडस्य सकोपगतिवेगो वाय्वतिकम्पादेर्निमित्तमिति फलितम् ।

गरुडस्य प्रभावमाह — सुरेति । येन सुरासुराणां देवदैत्यानाम् । परिखेदलब्धं परिखेदेन समुद्रमथनायासेन लब्धम् । अमृतं, मातृविमोक्षणार्थं मातुः विनतायाः विमोक्षणार्थं सपत्नीमातृकद्रूदास्यान्मोचनाय । द्विषतः शत्रोरिन्द्रात् । आच्छिन्नं बलाद् गृहीतम् । आसीत् । 'त्वाम् उद्वहामि' इति एवंरूपः । वरोऽपि ईप्सितार्थोऽपि । मुरारेः उपेन्द्रस्य । संबन्धसामान्ये षष्ठी । दत्तः, आसीत् । स गरुड इति पूर्वेणान्वयः । अमृतहरणविष्णुवरदानकथा महाभारते आदिपर्वणि त्रयस्त्रिंशाध्यायेऽनुसन्धेया ॥ ५३ ॥

हे काश्यपप्रियसुत ! गरुड ! प्रशान्तरोषो भगवान् देवदेवेशः । गम्यतां स्वनिलयमेव । हन्त निवृत्तः । यावद् गच्छामि ।

एते [ स्थिता वियति किन्नरयक्षसिद्धाः ]
देवाश्च संभ्रमचलन्मकुटोत्तमाङ्गाः ।
दृष्टेऽच्युते विगतकान्तिगुणाः प्रशान्तं
श्रुत्वा श्रयन्ति सदनानि निवृत्ततापाः ॥ ५४ ॥

यावदहमपि कान्तां मेरुगुहामेव यास्यामि । (निष्क्रान्तः ।)

वासुदेवः — यावदहमपि पाण्डवशिबिरमेव यास्यामि ।

(नेपथ्ये)

नखलु नखलु गन्तव्यम् ।

वासुदेवः — अये वृद्धराजस्वर इव । भो राजन् ! एष स्थितोऽस्मि ।

(ततः प्रविशति धृतराष्ट्रः ।)

धृतराष्ट्रः — क्वनुखलु भगवान् नारायणः । क्वनुखलु भगवान् पाण्डवश्रेयस्करः । क्वनुखलु भगवान् विप्रप्रियः । क्वनुखलु भगवान् देवकीनन्दनः ।

---

एत इत्यादि । सम्भ्रमचलन्मकुटोत्तमाङ्गाः सम्भ्रमेण भगवद्रूपदर्शनत्वरया चलन्मकुटानि चलत्किरीटानि उत्तमाङ्गानि शिरांसि येषां ते । विगतकान्तिगुणाः भगवद्रोषभयजनितादन्तस्तापान्निष्प्रभाः । प्रशान्तं विगतरोषम् । श्रुत्वा मद्वाक्यात् शार्ङ्गादीन् प्रति पूर्वं कथिताद् विज्ञायेत्यर्थः । इह प्रथमपादे तृतीयादीनामक्षराणां मातृकयोस्त्रुटितानां द्वादशानां स्थाने 'स्थिता' इत्यादीन्यक्षराण्यर्थानुगुण्यापेक्षयास्माभिः प्रतिनिहितानि ॥ ५४ ॥

यावदित्यादि । कान्तां रम्याम् ॥

अये इत्यादि । वृद्धराजस्वर इव वृद्धो राजा धृतराष्ट्रः तस्य स्वर इव । 'न खल्वि'त्यादिवाक्यं वृद्धराजेन व्याहृतमिति स्वरसंवादात् सम्भावयामीत्यर्थः । स्थितः गमनान्निवृत्तः ॥

क्वनुखल्वित्यादि । विप्रप्रियः ब्राह्मणप्रियः । क्वनुखल्वित्यसकृदुक्त्या भगवत्प्रसादनौत्सुक्यस्य परा काष्ठा व्यज्यते ।

भीमसेनः—भोः! कोनुखल्वेतस्मिन् वनान्तरे मम व्यायामविघ्नमुत्पाद्य मध्यम! मध्यम! इति मां शब्दापयति। भवतु, पश्यामस्तावत्। (परिक्रम्यावलोक्य) अहो! दर्शनीयोऽयं पुरुषः। अयं हि,

सिंहास्यः सिंहदंष्ट्रो मधुनिभनयनः स्निग्धगम्भीरकण्ठो
बभ्रुभ्रूः श्येननासो द्विरदपतिहनुर्दीर्घविश्लिष्टकेशः।
व्यूढोरा वज्रमध्यो गजवृषभगतिर्लम्बपीनांसबाहुः
सुव्यक्तं राक्षसीजो विपुलबलयुतो लोकवीरस्य पुत्रः॥ २६॥

घटोत्कचः—चिरायते खलु ब्राह्मणवटुः। अतिक्रामति मातुराहारकालः। किमिदानीं करिष्ये। भवतु, उच्चैराह्वानं करिष्ये। भो भो मध्यम! शीघ्रमागच्छ।

---

भोः कोन्वित्यादि। दर्शनीयः आकृतिगुणाद् द्रष्टुं योग्यः। अयं हीति श्लोकान्वयि।

आकृतिं वर्णयति—**सिंहास्य** इति। सिंहास्यः सिंहमुखः। सिंहदंष्ट्रः, मधुनिभनयनः मधुनिभे रक्तवर्णत्वान्मधुतुल्ये नयने यस्य स तथाभूतः। स्निग्धगम्भीरकण्ठः स्निग्धो मधुरः गम्भीरश्च कण्ठः कण्ठनादो यस्य स तथाभूतः। बभ्रुभ्रूः बभ्रू पिङ्गले भ्रुवौ यस्य सः। श्येननासः गृध्रनासिकः। द्विरदपतिहनुः द्विरदपतेर्गजराजस्येव हनू यस्य सः। दीर्घविश्लिष्टकेशः दीर्घाः विश्लिष्टाः प्रकीर्णाश्च केशा यस्य सः। व्यूढोराः व्यूढं विस्तीर्णम् उरो वक्षः यस्य सः। वज्रमध्यः वज्रस्येव मध्यः काठिन्यादिना यस्य सः। गजवृषभगतिः गजवृषभस्य गजश्रेष्ठस्येव गजवृषभयोरिव वा गतिर्यस्य सः। लम्बपीनांसबाहुः लम्बौ लम्बमानौ पीनांसौ पृथुस्कन्धौ च बाहू यस्य स तथाभूतः। विपुलबलयुतः, अयं हि राक्षसीजः राक्षस्यां जातः। लोकवीरस्य पुत्रः, भवतीति शेषः। सुव्यक्तं सुस्पष्टम्। कथमन्यथास्यैतादृशाकारानुभावयोग इति भावः। घटोत्कचे 'सोऽयं मम पुत्र' इति प्रत्यभिज्ञानं तु भीमस्य न सञ्जातम्, अतिबाल्यदृष्टचरीं तस्याकृतिमपेक्ष्य साम्प्रतिक्यास्तरुणिमनवनिर्मिताया आकृतेरत्यन्तवैलक्षण्यात्। इह बह्वीनामुपमानां संसृष्टिः स्फुटा। व्यूढोरा इत्यत्र 'उरःप्रभृतिभ्यः कप्' इति कपो नित्यस्याप्यकरणमार्षम्॥ २६॥

उच्चैराह्वानेनाप्यनागते ब्राह्मणवटौ राक्षस आह—**चिरायत** इत्यादि॥

**भीमसेनः**—भोः ! प्राप्तोऽस्मि ।

**घटोत्कचः**--न खल्वयं ब्राह्मणवटुः । अहो दर्शनीयोऽयं पुरुषः । य एषः ,

सिंहाकृतिः कनकतालसमानबाहुर्मध्ये तनुर्गरुडपक्षविलिप्तपक्षः ।
विष्णुर्भवेद् विकसिताम्बुजपत्रनेत्रो नेत्रे ममाहरति बन्धुरिवागतोऽयम् ॥

भो मध्यम ! त्वां खल्वहं शब्दापयामि ।

**भीमसेनः**—अतः खल्वहं प्राप्तः ।

---

**भो** इत्यादि । प्राप्तोऽस्मि आगत एवाहम् । किमिति मामपश्यन् मध्यमेत्युच्चैः पुनः शब्दापयसीत्यर्थः ॥

**न खल्वि**त्यादि । ब्राह्मणमाणवक इति मातृकान्तरे पाठः । तत्र माणवको वटुरेव । यदृच्छादृष्टिपतिताद्भुतभीमसेनरूपाकृष्टचित्तश्चिन्तयति —अहो इत्यादि । य एष इति श्लोकान्वयि ।

**सिंहाकृतिरि**ति । सिंहाकृतिः सिंहस्येवाकृतिः ऊर्जस्वल आकारो यस्य स तथाभूतः । कनकतालसमानबाहुः कनकतालसमानौ स्वर्णतालद्रुमवद् गौरप्रांशू बाहू यस्य स तथाभूतः । कनकस्तालश्च वृक्षविशेषौ तयोः समानौ बाहू यस्य स इति वा । मध्ये अवलग्ने तनुः कृशः गरुडपक्षविलिप्तपक्षः गरुडपक्षाविव विलिप्तौ सम्मृष्टौ अदन्तुरमसृणौ पक्षौ पार्श्वभागौ यस्य स तथाभूतः । विकसिताम्बुजपत्रनेत्रः विकचपद्मदलसदृशलोचनः । य एषः, विष्णुः, भवेत्, आकारानुभावविशेषादच्युत एव भवन् सम्भाव्यत इत्यर्थः । सम्भावनायां हि लिङ् । आगतः आगतमात्रः न तु सम्भाषणादिना परिज्ञातविशेषः । अयं, बन्धुरिव, मम, नेत्रे चक्षुषी । आहरति आकर्षति, मम चक्षूरागं जनयतीत्यर्थः ॥ २७ ॥

स्वप्रस्तुतानुसरणभङ्ग्या प्राप्तस्योत्तरमाह—**भो मध्यमे**त्यादि । मध्यमेति जलाशयगतं प्रति सम्बोधनम् । त्वां खलु मध्यमसंज्ञं भवन्तमेव, न त्वेनमागतम् । एतेन, नामग्राहमप्यन्यस्मिन्नाहूयमाने, अहो तवात्माह्वानभ्रम इत्यागतं पुरुषं प्रत्यर्थादुक्तं भवति । स एव तु साक्षान्नाभिसम्बोधितोऽवज्ञानादिति मन्तव्यम् ॥

स्वनाम्नाह्वानादेवाहं प्राप्त इत्याह—**अत** इत्यादि । अतः खलु मध्यमेत्याह्वानादेव, न पुनरन्यनाम्नाह्वाने आत्माह्वानभ्रमादित्यभिप्रायः ॥

**घटोत्कचः**—किं भवानपि मध्यमः ।

**भीमसेनः**—न तावदपरः ।

मध्यमोऽहमवध्यानामुत्सिक्तानां च मध्यमः ।
मध्यमोऽहं क्षितेर्भद्र ! भ्रातॄणामपि मध्यमः ॥ २८ ॥

**घटोत्कचः**—भवितव्यम् ।

**भीमसेनः**—अपि च,

मध्यमः पञ्चभूतानां पार्थिवानां च मध्यमः ।
भवे च मध्यमो लोके सर्वकार्येषु मध्यमः ॥ २९ ॥

---

**किमि**ति । भवानपि किं मध्यमः । अपिशब्देन मदाह्वानविषयोऽन्यो मध्यमोऽस्तीति सूचयति ॥

**न तावदि**ति । अपरः मदन्यः । न तावत् नैव । मध्यम इति विधेयानुकर्षः । बहुभिः प्रकारैरर्थान्वयाद् मध्यमशब्दस्याहमेव मुख्यं व्यपदेशभाजनं भवामि लोके, न त्वन्य इत्यभिप्रायः ।

तदेव मध्यमत्वं राक्षसदमोपदेशक्षमस्वगतगुणविशेषप्रकाशिकया रीत्या प्रपञ्चयति --**मध्यम** इति । अहं, अवध्यानां शत्रुभिर्हन्तुमशक्यानां पुंसाम् अर्थात् पाण्डवानां मध्ये । मध्यमः तेष्वन्तर्भूत इत्यर्थः । पाण्डवानां ह्यवध्यत्वं प्रसिद्धम् । उत्सिक्तानां च शौर्योद्धतानां च मध्ये । मध्यमः तेष्वन्तर्भूत इत्येव । शौर्योद्धतत्वमपि हि पाण्डवानां प्रसिद्धम् । क्षितेः भूमेर्निमित्तात् । 'क्षितौ' इति मातृकान्तरे पाठः । अहं मध्यमः भूमेर्मध्यमलोकत्वेन तत्सम्बन्धादहं मध्यमो मध्यमलोकभवो मानुष इत्यर्थः । भ्रातॄणामपि मध्ये अहं मध्यमः, पाण्डवेषु पञ्चसु युधिष्ठिरसहदेवौ प्रथमचरमौ विहायान्येषां त्रयाणां साधारणमिदं मध्यमत्वम् । इहावध्यत्वशौर्योद्धतत्वयोराख्यानं राक्षससन्त्रासार्थम् ॥२८॥

**भवितव्यमि**ति । ईदृशं मध्यमत्वं ते भवितुमर्हं, किं तत इत्यवज्ञा भीमसेनोक्तावेतेन सूचिता ॥

भूयोऽपि मध्यमत्वमाह—**अपि च मध्यम** इति । अहमित्यनुवर्तते । पञ्चभूतानां पृथिव्यप्तेजोवाय्वाकाशानां मध्ये । मध्यमः, पञ्चभूतेषु वायोर्मध्यमत्वेन तत्पुत्रोऽहमपि मध्यमः 'आत्मा वै पुत्रनामासि' इति श्रुतेरिति भावः । अनेन

वृद्धः—

मध्यमस्त्विति सम्प्रोक्ते नूनं पाण्डवमध्यमः ।
अस्मान् मोक्तुमिहायातो दर्पान्मृत्योरिवोत्थितः ॥ ३० ॥

---

ध्यमत्वेनार्जुननकुलयोर्व्यावृत्तिः सिद्धा । पार्थिवानां पृथिवीश्वराणां मध्ये मध्यमः भ्रातरो हि पृथिवीश्वरा इति तन्मध्यमभूतोऽहं पृथिवीश्वरमध्यमोऽपि भवामीत्यर्थः । एतच्च उत्पथप्रवृत्तपुरुषदण्डनाधिकृतत्वसूचनार्थम् । अहं, भवे च भवनं भवः मातृकुक्षेर्निर्गमः तस्मिंश्च विषये । मध्यमः, तत्र हि युधिष्ठिरः प्रथमोऽर्जुनश्चरम इति व्यवस्थितं मे मध्यमत्वमिति भावः । 'भ्रातृणामपि मध्यमः' इति भिन्नाभिन्नोदरजभ्रातृसामान्यापेक्षं मध्यमत्वं भीमार्जुननकुलसाधारणं पूर्वमुक्तम् । अभिन्नोदरजन्मापेक्षं तु मध्यमत्वमर्जुननकुलव्यावृत्तमिदानीमुच्यते । सर्वकार्येषु सर्वेषां जनानां कार्येषु निर्णेयवस्तुषु । अहं मध्यमः मध्यस्थः प्राड्विवाकीभूय न्यायनिर्णायक इत्यर्थः । अनेन मध्यमत्वेन त्वदुच्चारितशब्दरौद्रस्वरसूचितादन्याय्याभिनिवेशात् त्वां वारयितुमेवाहमागत इति स्वागमनप्रयोजनं द्योतितम् ।

एवं भीमेनाष्टभिः प्रकारैर्मध्यमत्वकथनभङ्ग्या 'अहमवध्यः, शौर्योद्धतः, मनुष्यः, बहुभ्रातृकः, वायुपुत्रः, पृथिवीपतिः, उभयपुरुषजन्ममध्यकाललब्धस्वजन्मा, सर्वकार्यगतन्यायान्यायविचारयिता च भवामि इति स्वस्याष्टौ विशेषणान्याविष्कृतानि । तेषां समुदितानां भीमसेनादन्यत्रासम्भवाद् 'अहं भीमसेन इति चार्थादुक्तं भवति ॥ २९ ॥

तस्यास्य भीमसेनवाक्कूटस्याभिप्रायं घटोत्कचो बाल्यान्न ज्ञातवान् । वृद्धस्तु व्युत्पन्नत्वाज्जानन्नाह—**मध्यमस्त्विती**ति । 'मध्यमेति तु' इति पाठः, 'भो मध्यमेति' इति वा । मृत्योः दर्पाद् उत्थित इव मृत्युदर्पादुपादानकारणादाविर्भूत इव । अप्रधृष्यत्वसाम्यादियमुत्प्रेक्षा । पाण्डवमध्यमः पाण्डवेषु मध्यमत्वेन प्रसिद्धो भीमसेनः भो मध्यम ! इति एवंरूपे सम्बोधनशब्दे । सम्प्रोक्ते सति सम्यगुच्चैरुच्चारिते सति । इह आयातः आत्माह्वानबुद्ध्या प्राप्तः । नूनं निश्चितम् । किमर्थं प्राप्त इत्यत्राह—अस्मान् मोक्तुं राक्षसभयाद् मोचयितुम् । आयातो ह्ययं शीघ्रमस्मान् राक्षसभयाद् रक्षिष्यतीत्यौत्सुक्यमेतेन व्यज्यते ! इह मध्यमस्त्वितीति प्रथमान्तपाठोऽर्थासामञ्जस्याल्लेखकप्रमादायातो नूनम् । मृत्युरिवेति मातृकान्तरे पाठः ॥ ३० ॥

(प्रविश्य)

**मध्यमः**—

अस्यामाचम्य पद्मिन्यां परलोकेषु दुर्लभम् ।
आत्मनैवात्मनो दत्तं पद्मपत्रोज्ज्वलं जलम् ॥ ३१ ॥

(उपगम्य) भोः पुरुष! प्राप्तोऽस्मि ।

**घटोत्कचः**—प्राप्तवानिदानीं खल्वसि । मध्यम! मध्यम! इत इतः ।

**वृद्धः**—(भीममुपगम्य) भो मध्यम! परित्रायस्व ब्राह्मणकुलम् ।

**भीमसेनः**—न भेतव्यं न भेतव्यम् । मध्यमोऽहमभिवादये ।

**वृद्धः**—वायुरिव दीर्घायुर्भव ।

**भीमसेनः**—अनुगृहीतोऽस्मि । कुतो भयमार्यस्य ।

**वृद्धः**—श्रूयताम् । अहं खलु कुरुराजेन युधिष्ठिरेणाधिष्ठितपूर्वे कुरुजाङ्गले यूपग्रामवास्तव्यो माठरसगोत्रश्च कल्पशाखाध्वर्युः केशवदासो नाम

---

अथ कृतपिपासाप्रतीकारस्य ब्राह्मणमध्यमस्य प्रवेशः **प्रविश्येत्यादि** ॥

**अस्यामित्यादि** । पद्मिन्यां सरसि । दत्तम् अर्पितम् ॥ ३१ ॥

**भो** इत्यादि ॥

**प्राप्तवानिति** । इदानीं खलु अस्मिन् क्षण एव, न त्वितः पूर्वम् । प्राप्तवान् असि । मनागागमनविलम्बस्त्वया कृत इत्यभिप्रायः । मध्यम ! मध्यमेति गमनत्वराकृता द्विरुक्तिः । 'प्राप्तवानिदानीं खल्वसि मध्यमः' इति मातृकान्तरे पाठः ॥

वृद्धो भीमं जानन्नपि मध्यमसंज्ञयैव तत्र प्रसिद्धतरया भीमं सम्बोधयन् अभयं प्रार्थयते—**भो मध्यमेत्यादि** ॥

अभयदानपूर्वं ब्राह्मणोचितं समुदाचरति—**न भेतव्यमित्यादि** ॥

**वायुरिति** । वायुरिव वायुर्हि प्राणाधिष्ठानदेवता आमहाकल्पान्तकालजीवी प्रसिद्धः इत्यौचित्यात् तदौपम्यवचनम् । भीमसेनस्य पितृनामकीर्तनेन प्रीतिजननार्थमपि तद् बोद्धव्यम् ॥

**अन्वित्यादि** ॥

ब्राह्मणः। तस्य ममोत्तरस्यां दिश्युद्यामकग्रामवासी मातुलः कौशिकसगोत्रो यज्ञबन्धुर्नामास्ति। तस्य पुत्रोपनयनानुभवनार्थं सकलत्रोऽस्मि प्रस्थितः।

**भीमसेनः**—अरिष्टोऽस्तु पन्थाः। ततस्ततः।

**वृद्धः**—ततो मामेष हि,

सजलजलदगात्रः पद्मपत्रायताक्षो
मृगपतिगतिलीलो राक्षसः प्रोग्रदंष्ट्रः।
जगति विगतशङ्कस्त्वद्विधानां समक्षं
ससुतपरिजनं भो! हन्तुकामोऽभ्युपैति ॥ ३२ ॥

**भीमसेनः**—एवम्। अनेन ब्राह्मणजनस्य मार्गविघ्नः कृतः। भवतु, निग्रहीष्यामि तावदेनम्। भोः पुरुष! तिष्ठ तिष्ठ।

**घटोत्कचः**—एष स्थितोऽस्मि।

**भीमसेनः**—किमर्थं ब्राह्मणं प(र?रा)स्यसि।

पुत्रनक्षत्रकीर्णस्य पत्नीकान्तप्रभस्य च।
वृद्धस्य विप्रचन्द्रस्य भवान् राहुरिवागतः ॥ ३३ ॥

---

**श्रूयतामित्यादि**। कुरुजाङ्गले देशविशेषे। यूपग्रामवास्तव्यः यूपाख्यग्रामवासी। माठरसगोत्रः माठरेण ऋषिविशेषेण सगोत्रः गोत्रवान्। कल्पशाखाध्वर्युः कल्पो यज्ञविधानं तत्प्रतिपादिका शाखा यजुरशाखा तस्याम् अध्वर्युः तदुक्तप्रयोगानुष्ठाननिपुण इत्यर्थः। मातुलः मातृभ्राता ॥

**अरिष्ट इत्यादि**। अरिष्टः निरुपद्रवः। अस्तु, निरुपद्रवत्वाशंसया 'यदि पथि कश्चिदुपद्रव आपतेत्, तमहं वारयितुं सज्जोऽस्मि' इति सूचयति ॥

**तत इत्यादि**। मामित्यादि श्लोकान्वयि।

**सजलेत्यादि**। मृगपतिगतिलीलः मृगपतेः सिंहस्येव गतिलीला गमनविलासो यस्य स तथाभूतः। बिगतशङ्कः निर्भयः। भो इति विषादे ॥ ३२ ॥

**एवमित्यादि**। एवम् अयं भयहेतुप्रकारः। एनं मार्गविघ्नकारिणं पुरुषम् ॥

**एष इत्यादि** ॥

**किमर्थमित्यादि**। परास्यसि निरस्यसि कदर्थयसि। 'ब्राह्मणमपराध्यसि' इति मातृकान्तरे पाठः। ब्राह्मणमुद्दिश्यापराध्यसीति तदार्थः।

**पुत्रेति**। भवान्, पुत्रनक्षत्रकीर्णस्य पुत्रैर्नक्षत्रैरिव परिगतस्य। पत्नीकान्त-

**घटोत्कचः**—अथकिम् । राहुरेव ।

**भीमसेनः**—आः,

निवृत्तव्यवहारोऽयं सदारस्तनयैः सह ।
सर्वापराधेऽवध्यत्वान्मुच्यतां द्विजसत्तमः ॥ ३४ ॥

**घटोत्कचः**—न मुच्यते ।

**भीमसेनः**—(आत्मगतम्) भोः कस्य पुत्रेणानेन भवितव्यम् ।

भ्रातॄणां मम सर्वेषां कोऽयं भो गुणतस्करः ।
दृष्ट्वैतद्बालशौण्डीर्यं सौभद्रस्य स्मराम्यहम् ॥ ३५ ॥

---

प्रभस्य च पत्नी कान्तप्रभेव मनोहरा ज्योत्स्नेव यस्य तस्य तथाभूतस्य । वृद्धस्य स्थविरस्य । विप्रचन्द्रस्य विप्रश्चन्द्र इव विप्रचन्द्रः तस्य । राहुरिव चन्द्रग्रसनशीलो ग्रह इव । आगतः । सावयवोपमालङ्कारः ॥ ३३ ॥

**अथकिमि**त्यादि । राहुरेवेत्येवकारेण यथाध्यवसायानुष्ठाननिर्बन्धः प्रकाश्यते ॥

**आ** इति कोपे ।

**निवृत्ते**त्यादि । निवृत्तव्यवहारः निवृत्तः करणशक्तिक्षयेण अपगतः व्यवहारः लोकयात्रा यस्मात् स तथाभूतः । सर्वापराधे अवध्यत्वात् सर्वविधापराधयोगेऽपि वधानर्हत्वाद्धेतोः । एतेन निरपराधत्वे वधस्य मनसाप्यचिन्तनीयत्वमुक्तम् । द्विजसत्तमः द्विजेषु विप्रेषु सत्तमः अतिप्रशस्तः ॥ ३४ ॥

**नेत्या**दि ॥

वचनप्रकाशितं पुरुषस्य लोकोत्तरं धीरत्वमनुसन्धाय चिन्तयति—**भो** इत्यादि । **भो** इति वाक्यार्थभूषणं सम्बोधनम् । तद्धि व्यवहर्तारः सम्बोध्यविरहेऽपि विस्मयहर्षविषादादिप्रवृत्ते वाक्यार्थे घटयन्ति । भो इति विस्मये वा । स च पुरुषगतधैर्यविषयः । अनेन कस्य पुत्रेण भवितव्यम् ईदृशधैर्यावष्टम्भादिगुणशालिनः पुत्रस्य जनकस्तादृश एव भवितुं युक्तः । स कोनुखलु स्यादित्यर्थः ।

स्वयूथ्यान्यतमपुत्रत्वशङ्कां मनसि कुर्वन्नित्राह—**भ्रातॄणामि**ति । मम, सर्वेषां भ्रातॄणां युधिष्ठिरादीनाम् । गुणतस्करः गुणचोरः गुणानुकारीत्यर्थः । अयं पुरुषः, कः अज्ञातः । अहम्, एतद्बालशौण्डीर्यम् एतस्य सन्निहितस्य बालस्य शौण्डीर्यं

(प्रकाशम्) भो पुरुष! मुच्यताम्।

**घटोत्कचः**—न मुच्यते।

मुच्यतामिति विस्रब्धं ब्रवीति यदि मे पिता।
न मुच्यते तथाह्येष गृहीतो मातुराज्ञया॥ ३६॥

**भीमसेनः**—(आत्मगतम्) कथं मातुराज्ञेति। अहो गुरुशुश्रूषुः खल्वयं तपस्वी।

माता किल मनुष्याणां दैवतानां च दैवतम्।
मातुराज्ञां पुरस्कृत्य वयमेतां दशां गताः॥ ३७॥

(प्रकाशम्) भोः पुरुष! प्रष्टव्यं खलु तावदस्ति।

**घटोत्कचः**—ब्रूहि ब्रूहि शीघ्रम्।

---

शौर्यगर्वम्। दृष्ट्वा, सौभद्रस्य स्मरामि अभिमन्युं स्मरामि। अभिमन्युसदृशमस्य शौण्डीर्यमिति भावः। सौभद्रस्येति कर्मणः शेषत्वविवक्षया 'अधीगर्थदयेशाम्' इति षष्ठी। इह शौण्डीर्यशब्दो णकारविकल एव मातृकयोः पठ्यते॥ ३५॥

पुनःप्रार्थनामप्यवधीरयति—**न मुच्यत** इति।

**मुच्यतामितीति**। मुच्यतामिति, मे पिता, विस्रब्धं स्निग्धं यथा भवति तथा। ब्रवीति यदि, न मुच्यते, अर्थान्मया द्विजः। तथाविधोऽहं मुच्यतामिति भवता येनकेनाप्यविस्रब्धमुच्यमानः कथं द्विजं मुञ्चेयमिति भावः। मातृनिदेशभङ्ग-भयाच्चायं मे निर्बन्ध इत्यभिप्रायकमाह—तथाहीति हेतौ। **एषः** द्विजः। मातुः आज्ञया, गृहीतः। यद्येष मुच्येत, मातृनिदेशविपरीतं खल्वनुष्ठितं स्यादिति भावः॥ ३६॥

**कथमित्यादि**। मातुराज्ञेति कथं मातुराज्ञेत्येवं किं ब्रवीतीत्यर्थः। अहो इति प्रशंसायाम्। सा च गुरुशुश्रूषुत्वविषया। गुरुशुश्रूषुः मातृपरिचरणपरः। अत एव तपस्वी धार्मिकः। एतेन, अस्य मातृशुश्रूषणधर्मविघातो यथा न भवेत्, तथा द्विजपरित्राणं कर्तव्यमित्येतादृशाभिप्रायाङ्कुरणं भीमस्य सूचितम्।

मातृशुश्रूषणस्य परमधर्मत्वं समर्थयितुं मातुर्महिमानमाह — **मातेत्यादि**। दैवतानां च दैवतं, चशब्दोऽप्यर्थे। दैवतानि हि पूज्यानि। तेषामपि मध्ये पूज्यतरेत्यर्थः। एतां दशां लोकबहुमान्यामवस्थाम्॥ ३७॥

**ब्रूहीत्यादि**॥

**भीमसेनः**——का नाम भवतो माता ।

**घटोत्कचः**— श्रूयताम् । हिडिम्बा नाम राक्षसी ।

कौरव्यकुलदीपेन पाण्डवेन महात्मना ।
सनाथा या महाभागा पूर्णेन द्यौरिवात्मना ॥ ३८ ॥

**भीमसेनः**—(आत्मगतम्) एवं, हिडिम्बायाः पुत्रोऽयम् । सदृशो ह्यस्य गर्वः ।

रूपं सत्त्वं बलं चैव पितृभिः सदृशं बहु ।
प्रजासु वीतकारुण्यं मनश्चैवास्य कीदृशम् ॥ ३९ ॥

(प्रकाशम्) भोः पुरुष! मुच्यताम् ।

**घटोत्कचः**——न मुच्यते ।

---

**का नामे**त्यादि ॥

**श्रूयतामि**त्यादि ॥

**कौरव्येति** । या कौरव्यकुलदीपेन कौरव्याणां कुरुवंश्यानां शन्तनुप्रभृतीनां कुलस्य दीपेन प्रकाशकेन । महात्मना महानुभावेन । पाण्डवेन भीमसेनेन । पूर्णेन, आत्मना चन्द्रेण द्यौरिव नभ इव । सनाथा नाथवती । भवति । सा हिडिम्बेति पूर्वेण सम्बन्धः । 'आत्मार्कचन्द्रवाताग्निजीवेषु परमात्मनि' इति केशवस्वामी ॥ ३८ ॥

**एवमि**त्यादि ।

**रूपमिति** । अस्य, रूपम् आकृतिः । सत्त्वं निर्विकारचित्तत्वं धीरत्वम् । बलं देहसारश्चैव । पितृभिः युधिष्ठिरादिभिः । बहु अत्यर्थं । सदृशम् । प्रजासु, वीतकारुण्यं विगतकृपम् । मनश्चैव मनोमात्रम् । कीदृशं कुत्सितं, न तु पितृसदृशमित्यर्थः ॥ ३९ ॥

'मुच्यतामिति विस्रब्धं ब्रवीति यदि मे पिते'त्याद्युक्तवतो घटोत्कचस्य द्विजाविमोचननिर्बन्धमात्मनः पितृत्वाख्यानेऽप्यनिवार्यं निश्चित्य स्वतत्त्वमप्रकाशयन्नेव भीमसेनो भूयोऽपि मोचनमर्थयते—**भो** इत्यादि । इदमपि पितृत्वगोपनस्य प्रयोजनं, यत् पुत्रेण सह स्वयमेव युद्ध्वा तद्बलपरीक्षणम् । तच्च व्यक्तीभविष्यति ॥

**न मुच्यत** इति । पुनः स्वनिर्बन्धप्रकाशनम् ॥

**भीमसेनः**—भो ब्राह्मण! गृह्यतां तव पुत्रः। वयमेनमनुगमिष्यामः।

**द्वितीयः**—मा मा भवानेवम्।

त्यक्ताः प्रागेव मे प्राणा गुरुप्राणेष्वपेक्षया।
युवा रूपगुणोपेतो भवांस्तिष्ठतु भूतले॥ ४०॥

**भीमसेनः**—आर्य! मा मैवम्। क्षत्रियकुलोत्पन्नोऽहम्। पूज्यतमः खलु ब्राह्मणः। तस्मान्मच्छरीरेण ब्राह्मणशरीरं विनिमातुमिच्छामि।

**घटोत्कचः**—एवं, क्षत्रियोऽयम्। तेन गर्वः। भवतु, इममेव हत्वा नेष्यामि। अथ केनायं वारितः।

**भीमसेनः**—मया।

**घटोत्कचः**—किं त्वया।

**भीमसेनः**—अथकिम्।

**घटोत्कचः**—तेन हि भवानेवागच्छतु।

---

द्विजघटोत्कचोभयाभीष्टासिद्ध्यनुगुणमाह—**भो ब्राह्मणे**त्यादि॥

**मामे**त्यादि। मा मा, वदत्विति शेषः॥

**त्यक्ता** इत्यादि। रूपगुणोपेतः रूपेण सौन्दर्येण गुणेन दयादिना च उपेतो युक्तः॥ ४०॥

तं वारयन्नाह—**आर्ये**त्यादि। विनिमातुं परिवर्तयितुम्॥

'क्षत्रियकुलोत्पन्नोऽहमि'ति तदुक्त्या तत्क्षत्रियत्वं जानन्नाह—**एवमि**त्यादि। अयं द्विजाभयदायी मध्यमः। क्षत्रियः क्षत्रियजातिः। भवतीति शेषः। एतेन भीमसेनवाक्कूटस्य प्रागुक्तस्याभिप्रायो घटोत्कचेन न गृहीत इति गम्यते। इह एवमित्यादेः स्वगतोक्तित्वम् अथेत्यादेः प्रकाशोक्तित्वं च युक्ततरम्॥

**मये**ति॥

**किं त्वये**ति। वारणे सम्भावितमात्मानर्थं विमृश्य वारयितृत्वमङ्गीकुर्वित्याशयः॥

**अथकिमि**ति॥

**तेन ही**त्यादि। भवानेव न तु द्विजमध्यमः, स मया विमुक्तः तत्स्थाने च त्वं गृहीत इत्यभिप्रायः॥

**भीमसेनः**—एवम्, अतिवीर्यबलं नानुगच्छामि । यदि ते शक्तिरस्ति, बलात्कारेण मां नय ।

**घटोत्कचः**—किं मां प्रत्यभिजानीते भवान् ।

**भीमसेनः**—मत्पुत्र इति जाने ।

**घटोत्कचः**—कथं कथं तव पुत्रोऽहम् ।

**भीमसेनः**—कथं रुष्यति, मर्षयतु मर्षयतु भवान् । सर्वाः प्रजाः क्षत्रियाणां पुत्रशब्देनाभिधीयन्ते । अत एव मयाभिहितम् ।

**घटोत्कचः**—भीतानामायुधं गृहीतम् ।

**भीमसेनः**—

शपामि सत्येन भयं न जाने ज्ञातुं तदिच्छामि भवत्समीपे ।
किंरूपमेतद् वद भद्र! तस्य गुणागुणज्ञः सदृशं प्रपत्स्ये ॥ ४१ ॥

---

**एवमि**त्यादि । एवमित्यभ्युपगमे । द्विजप्रतिनिधित्वमात्मनोऽभ्युपगतमित्यर्थः । अतिवीर्यबलम् अतिशयिते वीर्यबले यस्य तं तथाभूतम् । पुरुषम् । नानुगच्छामि, त्वं चात्मानं तथाभूतं मन्यस इत्यार्थम् । अतो, यदि ते शक्तिरस्ति, बलात्कारेण प्रसह्य । मां नय । यदि त्वात्मनोऽशक्तिमङ्गीकरोषि, तदा त्वां स्वयमेवानुगच्छामीत्यर्थः । अनया वचनभङ्ग्या युद्धाय तदाह्वानं सूचितम् । तच्च राक्षसदर्पदमनार्थत्वच्छलेन स्वपुत्रबलपरीक्षणार्थम् ॥

**किमि**त्यादि ॥

तं कोपयितुमाह—**मदि**त्यादि ॥

**कथमि**त्यादि ॥

**कथं रुष्यती**त्यादि । क्षत्रियाणां क्षत्रियैः । सम्बन्धे षष्ठी । पुत्रशब्देन अभिधीयन्ते अभिभाष्यन्ते, पालकानां पाल्येषु पुत्रसमुदाचारौचित्यादिति भावः ॥

**भीतानामि**ति । भीतानाम्, आयुधं, गृहीतं युद्धसाधनत्वेन शास्त्रेषु निर्दिष्टम् । त्वं भीतश्चेद्, आयुधं गृहीत्वा मया सह युद्धमारभस्वेत्यभिप्रायः ॥

**शपामी**त्यादि । सत्येन करणेन । शपामि शपथं करोमि । सत्यदेवसाक्षिकशपथपूर्वं वच्मीत्यर्थः । वक्ष्यमाणोऽर्थः पारमार्थिक इत्यभिप्रायः । तमेवाह—भयं भयपदार्थम् । न जाने । तद् भयम् । भवत्समीपे, ज्ञातुम् इच्छामि । त्वया हि

**घटोत्कचः**——एष ते भयमुपदिशामि, गृह्यतामायुधम् ।

**भीमसेनः**——आयुधमिति । गृहीतमेतत् ।

**घटोत्कचः**——कथमिव ।

**भीमसेनः**——

काञ्चनस्तम्भसदृशो रिपूणां निग्रहे रतः ।
अयं तु दक्षिणो बाहुरायुधं सदृशं मम ॥ ४२ ॥

**घटोत्कचः**——इदमुपपन्नं पितुर्मे भीमसेनस्य ।

**भीमसेनः**——अथ कोऽयं भीमो नाम ।

विश्वकर्ता शिवः कृष्णः शक्रः शक्तिधरो यमः ।
एतेषु कथ्यतां भद्र ! केन ते सदृशः पिता ॥ ४३ ॥

**घटोत्कचः**——सर्वैः ।

---

'भीताना'मिति वदतात्मनो भयज्ञानमङ्गीकृतमिति तदुपदेशाचार्यस्त्वं भवितुमर्हसीत्याशयः । भद्र ! एतद् भयम् । किंरूपं किंलक्षणकम् । वद । तस्य भयस्य । गुणागुणज्ञः गुणदोषाभिज्ञः । भूत्वेति शेषः । सदृशं तदनुरूपम् । प्रपत्स्ये कर्तव्यं निर्णेष्यामि । इयमुपह्वासोक्तिः ॥ ४१ ॥

**एष** इत्यादि ॥

**आयुधमितीति** । आयुधमिति आयुधं ग्राह्यमिति किं ब्रवीषीत्यर्थः ॥

**कथमिवेति** । आयुधमगृहीत्वैव गृहीतं वदतस्तवाभिप्रायो नावगम्यत इत्यर्थः ॥

**काञ्चनेत्यादि** । काञ्चनस्तम्भसदृशः स्वर्णस्तम्भतुल्यः । रतः आसक्तः ॥४२॥

**इदमित्यादि** । इदम् ईदृशं वीरवादरचनम् ॥

**अथेत्यादि** ।

**विश्वेत्यादि** । विश्वकर्ता ब्रह्मा ; शक्तिधरः स्कन्दः । केन, सदृशः समानः । एष्वन्यतमेन सदृशप्रभावो यदि यः कोऽपि स्यात्, तमेवाहं वीरं गणयेयं, न तु ततो हीनगुणमिति स्वप्रभावप्रशंसने प्रश्नस्य पर्यवसानम् । एतच्च पुत्रवाचालनलीलार्थम् ॥ ४३ ॥

**सर्वैरिति** । सर्वैः विश्वकर्त्रादिभिः षड्भिः । इह सदृश इति सम्बध्यते ॥

# FOR SALE.

*With commentary by Mahamahopadhyaya Dr. T. Ganapati Sastri.*

| | Rs. | As. |
|---|---|---|
| **1. Bhasa's** | | |
| Svapnavasavadatta | 1 | 8 |
| *Do. Superior cover* | 1 | 12 |
| Pancharatra | 1 | 0 |
| Madhyamavyayoga | 0 | 8 |
| Dutavakya | 0 | 8 |
| Pratijnayaugandharayana | 1 | 8 |
| Charudatta | 1 | 0 |
| Pratimanataka | 2 | 0 |
| **2. Kautalya's Arthasastra—** | | |
| Part I, *Adhikaranas 1 & 2* | 3 | 12 |
| Part II, *Do. 3, 4, 5, 6 & 7* | 4 | 0 |
| Part III, *Do. 8, 9, 10, 11, 12, 13, 14 & 15.* | 3 | 4 |
| Bhasa's Plays—a critical study | 2 | 0 |
| Bharatanuvarnanam—(A description of India) | 1 | 4 |

*Can be had of:—*

**T. G. Ramasubba Aiyar, B. A.,**

*Trivandrum,—Chalai.*

# THE

# CHÂRUDATTA

## A Misra Prakarana.

OF

# BHÂSA

With commentary

BY

Mahâmahopâdhyâya

**T. GANAPATI SÂSTRÎ,**

Honorary Member of the Royal Asiatic Society of Great Britain and Ireland,

Editor of the Trivandrum Sanskrit Series



**Edited and published by the commentator.**

Trivandrum:

PRINTED AT THE SRIDHARA POWER PRESS.

1922.



[PRICE RE. 1-0-0

॥ श्रीः ॥

# चारुदत्तं

नाम मिश्रप्रकरणम्

महाकविश्रीभासप्रणीतम्

अनन्तशयनसंस्कृतग्रन्थावलिप्रकाशनकार्याध्यक्षेण
महामहोपाध्यायेन

तरुवै. गणपतिशास्त्रिणा

प्रणीतया व्याख्यया

समेतं

तेनैव संशोधितं प्रकाशितं च ।

---

१९२२.



---

मूल्यं रूप्यकमेकम् ।

# PREFACE.

This is a revised edition of the Charudatta. For the use of students, a lucid Sanskrit commentary has now been added. It has already been observed in the introduction of the Svapnavasavadatta, that the play Charudatta forms the nucleus of the famous Mrichchhakatika of Sudraka. As regards the plot, the first Acts of the two plays differ very little except that Vasantasena is pursued by two persons in the Charudatta, while she is pursued in the Mrichchhakatika by three namely Vita, Cheta and Sakara. In the second Act of the Charudatta are not found the characters, Mathura, Dyutakara and Darduraka of the Mrichchhakatika, and the shampooer leaves Vasantasena to turn a *Parivrat* but not a "Sakya Sramanaka" as in the Mrichchhakatika. In the third Act, the plot is the same in both the plays. In the fourth, when Vasantasena has overheard the conversation between Madanika and Sajjalaka, Vidushaka steps in to carry out his mission; and Sajjalaka appears before Vasantasena only after Vidushaka is gone, unlike in the Mrichchhakatika.

It may be noted that no reference to the story of Aryaka and Palaka is found anywhere in Charudatta. The ideas tersely expressed in Charudatta are expanded at greater length by Sudraka. For instance, the Charudatta contains only the three following verses having meaningless repetitions and wrong allusions of Sakara:—

"किं याशि धावशि पचावशि पक्खळन्ती
शाहु प्पशीद ण मळीअशि चिह्र दाव ।
कामेण शम्पदि हि जज्झइ मे शळीळं
अङ्गाळमज्झपडिदे विअ चम्मखण्डे ॥"

"किं वाशुदेवे शवपक्कणेशे कुन्तीशुदे वा जणमेजए वा ।
अहं दुगं गह्णिअ केशहत्थे दुश्शाशळे शीदमिवाहळामि ॥"

"एशा हि वाशू शिळशिग्गहीदा केशेशु वाळेशु शिळोळुहेशु ।
कूजाहि कन्दाहि ळवाहि वात्तं महेश्शळं शक्कळमिश्शळं वा ॥"

Similarly, the description of the mansion of Vasantasena by Vidushaka is couched in the following words in the Charudatta :—

"विदूषकः—(सर्वतो विलोक्य) अहो गणिआवाडस्स सस्सिरीअदा। णाणापट्टणसमागदेहि आआमिएहिं पुत्तआ वाईअन्ति । संओजअन्ति अ आहारप्पआराणि । वीणा वादीअन्ति । सुवण्णआरा अळंकारप्पआराणि आदरेण जोजअन्ति ।"

But Sudraka, it will be seen, has dragged on the above description, to a tedious length in the Mrichchhakatika.

As regards the textual differences in the plays it is found that some the verses occuring in the Charudatta are copied as such in the Mrichchhakatika, some are adapted with a little variation, a few are omited and a good many verses are also newly added by Sudraka.

In the prose passages also of the Mrichchhakatika similar additions and alterations are observable throughout the four Acts.

Both the Manuscripts of the work on which the edition is based are, as they are, incomplete; as the play ends abruptly with Vasantasena's proceeding to meet her lover, though one of them has the colophon अवसितं चारुदत्तम् at the end That the work, as it is available is not a complete one is also shown in the commentary on the verse दारिद्र्यात् पुरुषस्य (I-6) and on the verse नरः प्रत्युपकारार्थी (IV-7) of the text.

TRIVANDRUM. T. GANAPATI SASTRI.

# चारुदत्तकथा ।

प्रकरणेऽस्मिन् नायको धीरललितस्त्रिवर्गतत्परः सार्थवाहपुत्रो विप्रश्चारुदत्त-नामोज्जयनीश्रेष्ठिचत्वरवास्तव्यः। स हि युवा सत्यशौचदयौदार्यशाली परोपकारेषु विषयभोगेषु च प्रसङ्गात् प्रक्षीणेऽतिमहति धनवैभवे कामप्युदाररूपां वेशनाटकन्यां वसन्तसेनां नामाभिललाष। सापि वेश्यासहजस्य धनतर्षस्य प्रकृत्यैवाभूमिरतिदरिद्रमपि तं कामदेवानुयानोत्सवप्रत्यक्षितं लोकोत्तररूपगुणप्रणयाचकमे । जातु सा सायं राजवीथ्यां गच्छन्ती केनचिद् विटेन, वसन्तसेनाकाम्यमानचारुदत्तसामर्षेण च राजस्यालेन शकारेण तत्कामुकाभ्यामनुगम्य कदर्थ्यमाना सर्वतः प्रसृते प्रदोषतिमिरे दैवाद् निवृतद्वारं चारुदत्तस्य गृहं पथि स्थितमुपलभ्य प्रविष्टा; परिचारिकाभ्रान्त्या च चारुदत्तेन पटवासगन्धमनोहरम् उत्तरीयप्रावारमभ्यन्तरचतुःशालप्रवेशनाय स्वकरेऽर्पितं गृहीत्वा किमपि चमत्कृता बभूव; अनुपदं च परिचारिकाविदूषकयोः सन्निधानाद् विदितजनविशेषे चारुदत्ते तद् अभयं ययाचे। विटशकारहरणभयाच्च तस्य हस्ते सा स्वीयं सुवर्णभाण्डं निक्षिप्य तद्वयस्येन विदूषकेण तन्नियुक्तेन परिरक्ष्यमाणा रात्रौ स्वगृहं जगाम ।

अथ द्यूतकरभयशरणागताच्चारुदत्तसंवाहकात्, परिव्राजकहिंसनप्रवृत्तरथ्यागजदमनपरितुष्टचारुदत्तविश्राणितोत्तरीयप्रावारलाभगर्वितात् स्वचेटाच्च बहुशःश्रुततद्गुणविस्तरा सा रणरणकस्य परां काष्ठामधिरुरोह ।

ततो मदनिकाया नाम वसन्तसेनाचेट्याः कम्रः सज्जलकाख्यः कश्चित् तद्दासभावमोचनाय निष्क्रयद्रव्यमर्जिजयिषुः कश्चिद् रात्रौ चारुदत्तगृहे सन्धि छित्वा वसन्तसेनानिक्षिप्तं तत् सुवर्णभाण्डं चोरितवान्। मानभङ्गभयाच्च चारुदत्तः 'चौरापहृतसुवर्णालङ्कारमूल्यतया दीयतामियमि'त्युक्त्वा स्वपत्न्या समर्पितां तच्छतगुणमूल्यां कामपि मुक्तावलीं स्त्रीवित्तसञ्जुगुप्सोऽपि गत्यन्तराभावाद् गृहीत्वा विदूषकद्वारेण वसन्तसेनायै प्राहिणोत्। यत्तत् सुवर्णभाण्डं मुष्टं, तत् तु गृहीत्वा वसन्तसेनाया गृहं प्राप्तस्तस्यां निलीय शृण्वत्यां प्रियायै मदनिकायै सर्वमात्मसाहसरहस्यं निवेदयामास; मदनिका च तत् कर्म निन्दन्ती चोरितं भाण्डं सज्जलको वसन्तसेनायै सद्यो निर्यातयितव्यमुपदिदेश । अस्मिन्नवसरे समागतेन चारुदत्तसन्देशहरेण विदूषकेण 'सुवर्णभाण्डं तद् द्यूतहारितमि'त्यपदिश्य तन्मूल्यत्वेन मुक्तावली सा

वसन्तसेनायै उपनीता। वसन्तसेना तु विदितभाण्डवृत्तान्ततत्त्वापि तां प्रियतमप्रसादबुद्ध्या स्वीचकार। ततस्तत् सुवर्णभाण्डं सज्जलकः स्वामिनीभक्तिवशंवदमदनिकोपदेशानुरोधेन 'आर्यचारुदत्तप्रेषितमिदमि'त्युक्त्वार्पयन् 'चोरितमिदमि'ति वदन्त्या वसन्तसेनया प्रत्याख्यातः। अथाप्यन्ते मदनिकासज्जलकयोः सुवर्णभाण्डसानुतापप्रत्यर्पणसंरम्भोपलब्ध्या प्रीयमाणमानसा वसन्तसेना मदनिकां दासभावाद् मोचयित्वा स्वीयैराभरणैरलङ्कृत्य च सज्जलकाय प्रदाय प्रवहणे तावारोप्य व्यसर्जयत्। स्वयं च वृत्तान्ततत्त्वनिवेदनादिना चारुदत्तस्य समाश्वासनाय तमभिसर्तुमुद्यताभवत्। इति चतुर्थाङ्कान्तग्रन्थकथासंक्षेपः।

---

# पात्राणि।

| | |
|---|---|
| विदूषकः | (मैत्रेयनामा नायकवयस्यः) |
| नायकः | (चारुदत्तः) |
| शकारः | (राजश्यालः मृच्छकटिके संस्थानकः) |
| विटः | (शकारसहचरः) |
| संवाहकः | (नायकोपजीविभूतपूर्वः संवाहनवृत्तिः) |
| चेटः | (कर्णपूराख्यो वसन्तसेनापरिचारकः) |
| सज्जलकः | (चोरः मृच्छकटिके शर्विलकाख्यः) |
| गणिका | (वसन्तसेना नायिका) |
| ब्राह्मणी | (नायकस्य पत्नी मृच्छकटिके वधूः) |
| चेटी | (चारुदत्तपरिचारिका रदनिकाख्या) |
| मदनिका | (वसन्तसेनापरिचारिका) |
| चेटी | (वसन्तसेनापरिचारिका चतुरिकाख्या) |

---

॥ श्रीः ॥

श्रीगणेशाय नमः ।

## महाकविश्रीभासप्रणीतं

# चारुदत्तम्

महामहोपाध्यायगणपतिशास्त्रिप्रणीतया व्याख्यया समेतम् ॥

(नान्द्यन्ते ततः प्रविशति सूत्रधारः ।)

**सूत्रधारः**—(क) किण्णुखु अज्ज पच्चूस एव्व गेहादो णिक्खन्तस्स बुभुक्खाए पुक्खरपत्तपडिदजळविन्दू विअ चञ्चळाअन्ति विअ

---

(क) किन्नुखल्वद्य प्रत्यूष एव गेहान्निष्क्रान्तस्य बुभुक्षया पुष्करप-

---

विघ्नेशं देवतां वाचं प्रणिपत्य गुरूनपि ।
व्याख्यानं चारुदत्ताख्यरूपकस्य विदध्महे ॥

अथ श्रीवाल्मीकिव्यासदेश्यस्तत्रभवान् भासश्चारुदत्ताख्यं रङ्गप्रयोगप्रधानं काव्यं चिकीर्षुरुपक्रम्यमाणप्रयोगस्य कथावस्त्वंशस्य निवेदनं प्रयोगनिर्वाहधूर्वहेण रङ्गे प्रथमसमाचरणीयं पश्यन् सूत्रधारं तावत् प्रवेशयति—नान्द्यन्ते ततः प्रविशति सूत्रधार इति । नान्द्यन्ते नन्दिरानन्दः तत्संबन्धिनी तत्प्रयोजना नान्दी गीतवाद्यवादनादिमङ्गळश्लोकपाठपर्यन्ता देवतापरिषदानन्दार्था क्रिया तस्या अन्ते अवसाने । ततः तदनन्तरं नान्दीपरिसमाप्त्यव्यवहितोत्तरकाल इत्यर्थः । सूत्रधारः सूत्रं प्रयोगानुष्ठानं धारयति निर्वाहयतीति सूत्रधारः । प्रविशति अर्थाद् रङ्गम् ।

प्रविष्टः सूत्रधारः कथावस्त्वंशनिवेदनानुकूलं प्रस्तौति—किण्णुखु इत्यादि । प्रत्यूष एव अहर्मुख एव गेहाद् । निष्क्रान्तस्य निष्क्रम्य कार्यवशात् कुत्रचिद् गत्वा प्रत्यागतस्येत्यर्थः । मे, अक्षिणी नेत्रे, बुभुक्षया क्षुधा । पुष्करपत्रपतितजलबिन्दू इव नलिनीदलगतजलकणाविव । अद्य, किन्नुखलु चञ्चलायेते चञ्चले भवतः । अद्येत्यनेन प्रत्यहक्षुदपेक्षयाद्यतनक्षुधो विशेषो द्योतितः ।

मे अक्खीणि । (परिक्रम्य) जाव गेहं गच्छिअ जाणामि किण्णुहु संविधा विहिदा ण वेत्ति । (परिक्रम्य) एदं अह्माणं गेहं । जाव पविसामि । (प्रविश्यावलोक्य) जह ळोहीपरिवट्टणकाळसारा भूमी, णेउब्भामणसुगन्धो विअ गन्धो, सुणिमित्तं विअ परिब्भमन्तो वडिवस्सअजणो, किण्णुखु संविधा विहिदा । आदु बुभुक्खाए ओदणमअं विअ जीवळोअं पेक्खामि । जाव अय्यं सद्दावेमि । अय्ये ! इदो दाव ।

---

त्रपतितजलबिन्दू इव चञ्चलायेते इव मेऽक्षिणी । यावद् गेहं गत्वा जानामि किन्नुखलु संविधा विहिता न वेति । एतदस्माकं गेहम् । यावत् प्रविशामि । यथा लौहीपरिवर्तनकालसारा भूमिः, स्नेहोद्भावनसुगन्ध इव गन्धः, सुनिमित्तमिव परिभ्रमन् वरिवस्यकजनः, किन्नुखलु संविधा विहिता । अथवा बुभुक्षयौदनमयमिव जीवलोकं पश्यामि । यावदार्यां शब्दापयामि । आर्ये! इतस्तावत् ।

---

लोहितायतिवदिह चञ्चलशब्दात् क्यप् कल्प्यः । जावेति । संविधा भोज्यसंविधानं, किन्नुखलु विहिता कृता, वा अथवा, न विहिता, इति, गेहं गृहं, गत्वा, जानामि यावद् ज्ञास्यामि । 'यावत्पुरानिपातयो'रिति भविष्यति लट् । गेहान्तर्भोज्यसंविधानलिङ्गं दृष्ट्वाह—जहेति । यथा यतः कारणात्, भूमिः गृहतलं, लौहीपरिवर्तनकालसरा लौहीनाम् अयस्ताम्रसीसकादिलोहनिर्मितानां पाकसाधनशरावस्थाल्यादिपात्रीणां परिवर्तनेन शुचीकरणेन अथवा परितो निवेशनेन कालशारा कृष्णरक्तसितवर्णा, वर्तत इति शेषः । एतद् भोज्यविशेषपाकलिङ्गम् । गन्धः, स्नेहोद्भावनसुगन्ध इव स्नेहस्य घृतादेः उद्भावने संस्करणे अथवा नवनीतादुत्पादने यः सुगन्धः स इव, वातीति शेषः । परिभ्रमन् परिक्रामन् वरिवस्यकजनः व्रतानुष्ठापको धार्मिकजनः, सुनिमित्तमिव इष्टलाभसूचकतयाभिनन्द्यत्वाच्छुभशकुनमिव, दृश्यत इति शेषः । इदं भोज्यवैभवस्यावश्यसम्पादनीयत्वे लिङ्गम् । यथेत्युक्त्या तथेत्याक्षेपलभ्यम् । तथा ततः कारणात्, संविधा, किन्नुखल्विति सम्भावनायां किन्नुखलु विहिता नूनं कृता भवेत्, कथमन्यथा विशिष्टभूमिगन्धाद्युपलब्धिरिति भावः । सर्वमिदं लिङ्गदर्शनं बुभुक्षोद्रेकजनिताद् मतिविभ्रमादपि भवतीत्यतः प्रकारान्तरं शङ्कते — आदु इत्यादि । शब्दापयामि आह्वयामि । इतस्तावत् आगच्छेति शेषः ।

(प्रविश्य)

**नटी** — (क) अय्य ! इअह्मि । अय्य! दिट्ठिआ खु सि आअदो।

**सूत्रधारः** — (ख) अय्ये ! किं अत्थि अह्माणं गेहे को वि पादरासो ।

**नटी** — (ग) अत्थि ।

**सूत्रधारः** — (घ) चिरं जीव । एवं सोभणाणि भोअणाणि दत्तिआ होहि ।

**नटी** — (ङ) अय्य ! तुवं एव पडिवाळन्ती चिट्ठामि ।

**सूत्रधारः** — (च) अय्ये ! किं अत्थि अब्भत्थिदं ।

**नटी** — (छ) अत्थि ।

---

(क) आर्य! इयमस्मि । आर्य ! दिष्ट्या खल्वस्यागतः ।

(ख) आर्ये ! किमस्त्यस्माकं गेहे कोऽपि प्रातराशः ।

(ग) अस्ति ।

(घ) चिरं जीव । एवं शोभनानि भोजनानि दात्री भव ।

(ङ) आर्य! त्वामेव प्रतिपालयन्ती तिष्ठामि ।

(च) आर्ये! किमस्त्यभ्यर्थितम् ।

(छ) अस्ति ।

---

अय्येत्यादि । दिष्ट्येति हर्षे निपातः ।

अय्य इत्यादि । प्रातराशः काल्यभोज्यं । किं अस्ति भोक्तुं सज्जं वर्तते किम् ।

अस्तीत्युक्त्या सन्तुष्ट आशिषमाशास्ते — चिरमित्यादि ।

अय्य तुवमित्यादि । प्रतिपालयन्ती प्रतीक्षमाणा ।

परिहासशङ्कया पुनः पृच्छति — अय्य इत्यादि । अभ्यर्थितं प्रातराशलक्षणम् ।

**सूत्रधारः** — (क) एवं देवा तुमं अस्सासअन्तु । अय्ये! किं किं ।

**नटी** — (ख) घिदं गुळं दहिं तण्डुळा अ अत्थि ।

**सूत्रधारः** — (ग) एदं सव्वं अह्माणं गेहे अत्थि ।

**नटी** — (घ) णहि णहि । अन्तळावणे ।

**सूत्रधारः** — (सरोषम्) (ङ) आः अणय्ये! एवं दे आसा छिन्दीअदु । अभावं च गमिस्ससि । अहं चण्डप्पवादळण्डुओ विअ वरण्डी पव्वदादो दूरं आरोविअ पाडिदो ह्मि ।

---

(क) एवं देवास्त्वामाश्वासयन्तु । आर्ये! किं किम् ।

(ख) घृतं गुडो दधि तण्डुलाश्चास्ति ।

(ग) एतत् सर्वमस्माकं गेहेऽस्ति ।

(घ) नहि नहि । अन्तरापणे ।

(ङ) आः अनार्ये! एवं ते आशा छिद्यताम् । अभावं च गमिष्यसि । अहं चण्डप्रवातलण्डित इव वरण्डः पर्वताद् दूरमारोप्य पातितोऽस्मि ।

---

पुनराशिषं प्रयुङ्क्ते — एवमिति । देवाः, एवं त्वाम् आश्वासयन्तु येन प्रकारेण त्वं मां परिसान्त्वयसि अनेन प्रकारेण त्वां परिसान्त्वयन्तु । भोज्यगतं विशेषं पृच्छति — अय्ये! किं किमिति ।

घिदमित्यादि । घृतम् आज्यम् । तण्डुला इत्यनेन अन्नस्यानिष्पन्नत्वमुक्तम् । अन्नस्य सज्जताभ्रमं पूर्वमुपजनय्य अन्ननिष्पादनसाधनमस्तीति सम्प्रति वदन्त्या वाक्येऽनाश्वासात् पुनरपि पृच्छति — एदमित्यादि । इह प्रश्नकाकुः ।

नटी तम् अस्थानरोषोत्पादनेनोपहसितुकामा तदप्यन्ननिष्पत्तिसाधनम् आपण एवास्ति, नास्मद्गृह इत्याह—णहीत्यादि ।

आ इत्यादि । आ इति कोपे । अनार्ये! असाधुशीले! एवम् अनेन प्रकारेण येन प्रकारेण ममाशा छिद्यते तेन प्रकारेणेत्यर्थः । ते आशा, छिद्यतां भज्यताम् । अभावं गमिष्यसि च नङ्क्ष्यसि च । नटीकृतमपराधमाविष्करोति — अहं, चण्डप्रवातलण्डितो वरण्ड इव चण्डमहावातोत्क्षिप्तस्तृणसञ्चय इव, दूरम् आरोप्य दूराधिरूढभोजनमनोरथपरमकाष्ठां नीत्वा, अथ च दूरं पर्वतोर्ध्वदेशं नीत्वा, पर्वतात् अत्युच्चान्मनोरथात् भ्रंशितः अथ च अधः क्षिप्तः, अस्मि ।

**नटी** — (क) मा भाआहि मा भाआहि । मुहुत्तअं पडिवाळेदु अय्यो । सव्वं सज्जं भविस्सदि । ळद्धं णाम एदं । अज्ज मम उववासस्स अय्यो सहायो होदु ।

**सूत्रधारः** — (ख) किण्णामहेओ अय्याए उववासो ।

**नटी** — (ग) अभिरूववदी णाम ।

**सूत्रधारः** — (घ) किं अण्णजादीए ।

**नटी** — (ङ) आम ।

**सूत्रधारः** — (च) सव्वं दाव चिट्ठदु । को णु दाणि अय्याए उववासस्स उवदेसिओ ।

---

(क) मा बिभीहि मा बिभीहि । मुहूर्तकं प्रतिपालयत्वार्यः । सर्वं सज्जं भविष्यति । लब्धं नामैतत् । अद्य ममोपवासस्यार्यः सहायो भवतु ।

(ख) किन्नामधेय आर्याया उपवासः ।

(ग) अभिरूपपतिर्नाम ।

(घ) किमन्यजात्याम् ।

(ङ) आम ।

(च) सर्वं तावत् तिष्ठतु । कोन्विदानीमार्याया उपवासस्योपदेशिकः ।

---

नटी समाश्वासयति — **मा भाआहीत्यादि** । प्रतिपालयतु क्षमताम् । सर्वं तण्डुलादिकं, सज्जं पाकादिना भोजनयोग्यम् । भविष्यति । एतत् तण्डुलादिकं, लब्धं नाम प्रागोवापणात् क्रीतानीतम् । आपणेऽस्तीति तु परिहासाज्जल्पितमिति भावः । अद्येत्यादि । उपवासस्य अनशनप्रधानस्य व्रतविशेषस्य । सहायः सहधर्मचारी ।

**किण्णामेत्यादि** । किं नामधेयं यस्य सः किन्नामधेयः ।

**अभीति** । अभिरूपः प्रशस्तः पतिर्येनानुष्ठितेन लभ्यः सोऽभिरूपपतिः ।

आत्मन एवाभिरूपस्य पत्युरिह जन्मनि सिद्धत्वाद् भाविजन्मपतिलाभोद्देश्यक एवोपवासो भवितुमर्हं इति मत्वाह — **किमित्यादि** । अन्यजात्याम् अन्यस्मिन् जन्मनि ।

**आमेति** । आमशब्दोऽभ्युपगमार्थो निपातः ।

**सव्वमित्यादि** । उपदेशिकः उपदेष्टा ।

**नटी** — (क) इमिणा वडिवस्सएण चुण्णगोट्ठेण ।

**सूत्रधारः** — (ख) साहु चुण्णगोट्ठ ! साहु ।

**नटी** — (ग) जइ अय्यस्य अणुग्गहो, तदो इच्छेअं अह्मारिसजणजोग्गं कञ्चि बह्मणं णिमन्तेदुं ।

**सूत्रधारः** — (घ) धम्मिट्ठो खु णिओओ । तेण पादरासो वि मे भविस्सदि । जइ एव्वं, पविसदु अय्या । अहं वि अह्मारिसजणजोग्गं कञ्चि बह्मणं अण्णेसामि ।

**नटी** — (ङ) जं अय्यो आणवेदि । ( निष्क्रान्ता । )

---

(क) अनेन वरिवस्यकेन चूर्णगोष्ठेन ।

(ख) साधु चूर्णगोष्ठ! साधु ।

(ग) यद्यार्यस्यानुग्रहः, तत इच्छेयमस्मादृशजनयोग्यं कञ्चिद् ब्राह्मणं निमन्त्रयितुम् ।

(घ) धर्मिष्ठः खलु नियोगः । तेन प्रातराशोऽपि मे भविष्यति । यद्येवं, प्रविशत्वार्या । अहमप्यस्मादृशजनयोग्यं कञ्चिद् ब्राह्मणमन्वेषे ।

(ङ) यदार्य आज्ञापयति ।

---

इमिणेति । अनेन वरिवस्यकेन चूर्णगोष्ठेन तदाख्येन, उपदिष्ट उपवास इत्यर्थगम्यम् ।

साहु इत्यादि । साधु यत् त्वयोपवास उपदिष्टस्तच्छ्लाघ्यमित्यर्थः । पुनः साधुवचनमादरातिशयद्योतनार्थम् ।

व्रताङ्गभोजनार्थं ब्राह्मणवरणमर्थयते — जइ इत्यादि । ततः तर्हि । अस्मादृशजनयोग्यम् अस्मद्विधस्य नटजातीयस्य दरिद्रस्य जनस्य वरणार्हं निमन्त्रयितुं वरीतुम् ।

धम्मिट्ठ इत्यादि । धर्मिष्ठः धर्मयुक्तः । नियोगः कार्यं ब्राह्मणनिमन्त्रणलक्षणम् । अन्वेषे विचिनोमि निमन्त्रणार्थम् ।

जमिति । आर्यः, यद् आज्ञापयति तत् करोमीत्यर्थम् ।

**सूत्रधारः** — (क) कहिण्णुखु दरिद्दबह्मणं ळभेअं । (विलोक्य) एसो अय्यचारुदत्तस्स वअस्सो अय्यमेत्तेओ णाम बह्मणो इदो एव्व आअच्छदि । जाव उवणिवन्तेमि । (परिक्रम्य) अय्य ! णिमन्तिदो सि । आमन्तणस्स मा दरिद्द त्ति मं अवमण्णेहि । सम्पण्णं अह्णिदव्वं भविस्सदि । घिदं गुळं दहि तण्डुला अ सव्वं अत्थि । अविअ दक्खिणामासआणि भविस्सन्ति ।

(नेपथ्ये)

(ख) अण्णं अण्णं णिमन्तेदु दाव भवं । अरित्तओ दाव अहं ।

---

(क) कुत्रनुखलु दरिद्रब्राह्मणं लभेय । एष आर्यचारुदत्तस्य वयस्य आर्यमैत्रेयो नाम ब्राह्मण इत एवागच्छति । यावदुपनिमन्त्रयामि । आर्य! निमन्त्रितोऽसि । आमन्त्रणस्य मा दरिद्र इति माम् अवमन्यस्व । सम्पन्नमशितव्यं भविष्यति । घृतं गुडो दधि तण्डुलाश्च सर्वमस्ति । अपिच दक्षिणामाषका भविष्यन्ति ।

(ख) अन्यमन्यं निमन्त्रयतु तावद् भवान् । अरिक्तकस्तावदहम् ।

---

**कहिण्णुखु** इत्यादि । दरिद्रब्राह्मणम् अकिञ्चनं विप्रं स हि अभोज्यान्नदरिद्रशैलूषादिकृतमपि निमन्त्रणं पिण्डार्थित्वादङ्गीकुर्यादिति । आर्यचारुदत्तस्य वयस्य इति, चारुदत्तो नाम कुलीनस्त्यागित्वादिगुणगणसंपन्नो धनिकभूतपूर्वो वेश्यानुरक्तः प्रकृतरूपकनायकः कश्चिद् ब्राह्मणः आर्यस्य पूज्यस्य तस्य वयस्यः विदूषकवृत्तिः सखा । निमन्त्रितः भोजनाय वृतः । प्ररोचनार्थमाह—आमन्त्रणस्येति । सम्बन्धे षष्ठी आमन्त्रणविषये इत्यर्थः । मां, दरिद्र इति मावमन्यस्व दरिद्रोऽयं नटः सम्पन्नं भोज्यं न दास्यतीति मत्वा मावजानीहि । सम्पन्नं समृद्धं विशिष्टं च अशितव्यं भोज्यं, भविष्यति । न केवलं ते भोज्यविशेषलाभः, किन्तु दक्षिणापि लप्स्यत इत्याह — अपिचेत्यादि । दक्षिणामाषका दक्षिणा दानं तद्रूपाः कार्षापणविशेषाः नाणकभेदाः ।

निमन्त्रितस्य रङ्गमप्रविष्टस्य नेपथ्यगतस्योत्तरमाह — अण्णमित्यादि । भवान्, अन्यमन्यं मदतिरिक्तं तं तं ब्राह्मणं । वीप्सयान्यस्य निमन्त्रणयोग्यजनस्य बहुत्वं द्योतितम् । अहम् । अरिक्तकः खलु अदरिद्र एव । आर्यचारुदत्तो दरिद्र इति भ्रान्त्या तदुपजीविनं मां दरिद्रं मत्वा दरिद्रब्राह्मणयोग्येन निमन्त्रणेन मावमंस्था इत्यभिप्रायः । दरिद्रस्यैवेयं धनिकम्मन्यतयोक्तिः ।

**सूत्रधारः** —

(क) विदगुळदहिसुसमिद्धं धूविअसूवोवदंससम्भिण्णं ।
सक्कारदत्तमिट्ठं भुञ्जीअदु भत्तमय्येण ॥ १ ॥

( निष्क्रान्तः । )

## स्थापना ।

---

( ततः प्रविशति विदूषकः । )

**विदूषकः** —(ख) अण्णं अण्णं णिमन्तेदु दाव भवं । अरित्तओ दाव अहं । णं भणामि अहं अरित्तओ त्ति । किं भणासि — सम्पण्णं

---

(क) घृतगुडदधिसुसमृद्धं धूपितसूपोपदंशसम्भिन्नम् ।
सत्कारदत्तमृष्टं भुज्यतां भक्तमार्येण ॥ १ ॥

(ख) अन्यमन्यं निमन्त्रयतु तावद् भवान् । अरिक्तकस्तावदहम् । ननु भणाम्यहमरिक्तक इति । किं भणसि—सम्पन्नमशनमशितव्यं भविष्यतीति ।

---

निमन्त्रणप्रत्याख्यायिनमप्यनुरुन्धान आह—घिदेत्यादि । धूपितसूपोपदंशसम्भिन्नं धूपितेन तापितेन हृद्येन हिङ्ग्वादिवासितेन वा सूपेन व्यञ्जनेन उपदंशेन उपदश्य भक्षणीयेन कन्दमूलादिना च संभिन्नं संयुक्तं, सत्कारदत्तमिष्टं सत्कारेण आदरेण दत्तं मिष्टं मधुरं च, भक्तम् अन्नम्, आर्येण पूज्येन भवता, भुज्यतां नतु प्रत्याख्यायतामित्यर्थः ॥ १ ॥

एवं तावत् सूत्रधारो व्रताङ्गब्राह्मणनिमन्त्रणरूपस्वकार्योपन्यासप्रसङ्गाद् आर्यचारुदत्तनामोल्लेखनेन तच्चरितं रूपकप्रतिपाद्यं द्योतयित्वा तद्वयस्यविदूषकप्रवेशलक्षणं कथावस्त्वंशमुपक्रंस्यमानं सूचितवानिति बोद्धव्यम् ।

निष्क्रान्त इति । निमन्त्र्यमाणमनुरुन्धान एव तदन्तिकमुपसर्तुं रङ्गान्निर्गत इत्यर्थः । स्थापनेति । ईदृशकथावस्त्वंशस्य स्थापनात् स्थापना । स्थापना प्रस्तावनेति पर्यायौ ।

सूचितस्य विदूषकस्य प्रवेशमाह—तत इत्यादि ।

अण्णमित्यादि । ननु भणामीति निर्बध्यमानस्य पुनर्वचनम् । रङ्गबाह्यस्य प्ररोचनोक्तिमनुवदति — किं भणसीत्यादि । अशनम् ओदनादि । पाचा प्रत्या-

असणं अह्णिदव्वं भविस्सदि त्ति । अहं पुण जाणामि । अहिअमहुरस्स अम्बस्स अजोग्गदाए अण्ठी ण भक्खीअदि त्ति । किं दाणि मं उल्लालिअ उल्लालिअ भणासि । भणामि वावुदो त्ति । किं भणासि—दक्खिणमासआणि भविस्सादित्ति ।

एसो वाआ पच्चाचक्खिदो हिअएण अणुबन्धीअमाणो गच्छीअदि । अहो अच्चाहिदं । अहं वि णाम परस्स आमन्तआणि त्ति तक्केमि । जो अहं तत्तहोदो चारुदत्तस्स गेहे अहोरत्तपय्यत्तसिद्धेहि णाणाविधेहि हिङ्गुविद्धेहि ओग्गारणसुगन्धेहि भूक्खेवमत्तपडिच्छिदेहि अन्तरन्तरपाणी-

---

इति । अहं पुनर्जानामि अधिकमधुरस्य आम्रस्य अयोग्यतया अस्थि न भक्ष्यत इति । किमिदानीं मामुल्लाल्योल्लाल्य भणसि । भणामि व्यापृत इति । किं भणसि—दक्षिणामाषका भविष्यन्तीति ।

एष वाचा प्रत्याख्यातो हृदयेनानुबध्यमानो गम्यते । अहो अत्याहितम् । अहमपि नाम परस्यामन्त्रणानीति तर्कयामि । योऽहं तत्रभवतश्चारुदत्तस्य गेहेऽहोरात्रपर्याप्तसिद्धैर्नानाविधैर्हिङ्गुविद्धैरुद्गारणसुगन्धिभिः भ्रूक्षेपमात्रप्रतीष्टैरन्तरा-

---

ध्यायमानस्यापि निमन्त्रणस्याङ्गीकरणचापलं मनोगतं सूचयन्नाह — अहं पुणेति । अहं पुनः, जाने मन्ये, किमिति? अधिकमधुरस्य, आम्रस्य चूतफलस्य, अस्थि बीजकोशः, अयोग्यतया भक्षणानर्हतया, न भक्ष्यत इति । इदानीं, माम्, उल्लाल्योल्लाल्य उपच्छन्द्योपच्छन्द्य; किं भणसि, भण्यमानं नाङ्गीकरोमीत्यर्थः । तत्र कारणमाह — व्यापृत इति भणामि कार्यान्तरव्यग्रोऽहमिति वदामि । अरिक्तकत्वमनङ्गीकारे पूर्वं हेतुरुक्तः, इदानीं व्यापृतत्वं हेतुरुच्यत इत्यव्यवस्थानमिदमङ्गीकारस्पृहां व्यनक्तीत्यवगन्तव्यम् । किं भणसीत्यादि ।

एसो इत्यादि । प्रत्याख्यातः निराकृतः । अनुबध्यमानः अनुक्षियमाणः । अहो कष्टम्, अत्याहितं महाभयस्थानम्, उपस्थितमिति शेषः । तद् दर्शयति — अहमपि नाम आर्यचारुदत्तविभवसंविभागोपभोगनित्यनिर्वृततया प्रसिद्धोऽहमपि, परस्य अन्यस्य, आमन्त्रणानि भुक्त्युपनिमन्त्रणानि, इति तर्कयामि एवंरूपं वस्तु साभिलाषं चिन्तयामि । जो अहमित्यादिना स्वावस्थाख्यानम् । योऽहं, तत्रभवता

एहिं असणप्पआरेहिं चित्तअरो विअ बहुमल्लएहिं परिवुदो आअण्ठमत्तं अह्णिअ चच्चरवुसहो विअ मोदअखज्जएहिं रोमन्थाअमाणो दिवसं खेवेमि, सो एव्व दाणि अहं तत्तहोदो चारुदत्तस्स दरिद्ददाए समं पारावदेहिं साहारणवुत्तिं उवजीवन्तो अण्णहिं चरिअ चरिअ तस्स आवासं एव्व गच्छामि। अण्णं च अच्छरिअं। मम उदरं अवत्थाविसेसं जाणादि। अप्पेणावि तुस्स-

---

न्तरपानीयैरशनप्रकारैश्चित्रकर इव बहुमल्लकैः परिवृत आकण्ठमात्रमशित्वा चत्वरवृषभ इव मोदकखाद्यैः रोमन्थायमानो दिवसं क्षिपामि, स एवेदानीमहं तत्रभवतश्चारुदत्तस्य दरिद्रतया समं पारावतैः साधारणवृत्तिमुपजीवन् अन्यत्र चरित्वा चरित्वा तस्यावासमेव गच्छामि। अन्यच्चाश्चर्यम्। ममोदरमवस्थावि-

---

पूज्यस्य चारुदत्तस्य, गेहे, अहोरात्रपर्याप्तसिद्धैः अहस्सु रात्रिषु च पर्याप्तसिद्धैः यावदीप्सितनिष्पन्नैः, हिङ्गुविद्धैः हिङ्गु रामठाख्यः सुगन्धिर्निर्यासविशेषः तेन विद्धैः संसृष्टैः उद्गारणसुगन्धैः उद्गारणवेलायां शोभनगन्धैः, भ्रूक्षेपशब्दः कारणे कार्योपचारादनादरार्थकः अनादरादेव स्वीकृतैरित्यर्थः, अन्तरान्तरपानीयैः कवलनानाम् अन्तरेऽन्तरे मध्ये मध्ये पानीयं पानकादि येषां तैः, अशनप्रकारैः अन्नविशेषैः, कैः क इव? बहुमल्लकैः बहुभिर्वर्णकपात्रैः, चित्रकर इव आलेख्यशिल्पीव, परिवृतः, आकण्ठमात्रं कण्ठप्रमाणं यावत्, अशित्वा, चत्वरवृषभ इव निर्यन्त्रणोद्देशश्चत्वरं तत्रस्थो वृषभ इव, मोदकखण्डैः भक्ष्यविशेषखण्डैः रोमन्थायमानः सन् रोमन्थं चर्वितचर्वणं वर्तयन् सन्, दिवसं क्षिपामि नीतवान् वर्तमानवद्भावाह्लट्। सो एव्वेत्यादि। इदानीं, स एवाहं, तत्रभवतश्चारुदत्तस्य दरिद्रतया हेतुना, साधारणवृत्तिं प्राकृतजनजीविकाम्, उपजीवन् आश्रयन् सन्, पारावतैः समं गृहकपोतैस्तुल्यं यथा भवति तथा, अन्यत्र चरित्वा भक्षयित्वा अटित्वा च, तस्य चारुदत्तस्य, आवासमेव गृहमेव, आगच्छामि। अण्णमिति। अन्यच्च आश्चर्यं विस्मयस्थानम्। किं तदित्याह—मम उदरम्, अवस्थाविशेषं जानाति साम्प्रतिकदारिद्र्यदशाज्ञानानुगुणं व्यवहरतीत्यर्थः, व्यवहारप्रकाशनाह—अल्पेनापि दत्तेनान्नेन,

दि । बहुअं वि ओदणभरं भरिस्सदि दीअमाण । ण आएदि अदीअमाणं, ण पच्चाचिक्खदि । ण खु अहं एरिसेण ण सन्तुट्ठो ।

ता सट्ठीकिददेवकय्यस्स तत्तहोदो चारुदत्तस्स कारणादो गहीदो सुमणो अन्तळिक्खवासो अ । जाव से पस्सपरिवत्ती होमि । (परिक्रम्यावलोक्य) एसो तत्तभवं चारुदत्तो पभादचन्दो विअ सकरुणप्पिअदंसणो जहाविभवेण गिहदेवदाणि अच्चअन्तो इदो एव्व आअच्छदि । जाव णं उवसप्पामि । (निष्क्रान्तः ।)

(ततः प्रविशति बलिमुपहरन्नायको विदूषकश्चाङ्गेरिकाहस्ता चेटी च ।)

**नायकः**—(दीर्घं निःश्वस्य) भोः! दारिद्र्यं खलु नाम मनस्विनः पुरुषस्य सोच्छ्वासं मरणम् । कुतः,

---

शेषं जानाति । अल्पेनापि तुष्यति । बहुकमप्योदनभरं भरिष्यति दीयमानम् । न याचते अदीयमानं, न प्रत्याचष्टे । न खल्वहमीदृशेन न सन्तुष्टः । तत् षष्ठीकृतदेवकार्यस्य तत्रभवतश्चारुदत्तस्य कारणाद् गृहीतानि सुमनसोऽन्तरीयवासश्च । यावदस्य पार्श्वपरिवर्ती भवामि । एष तत्रभवांश्चारुदत्तः प्रभातचन्द्र इव सकरुणप्रियदर्शनो यथाविभवेन गृहदैवतान्यर्चयन् इत एवागच्छति । यावदेनमुपसर्पामि ।

---

तुष्यति पूर्यते, न चायं तोषो बह्वन्नभरणाक्षमत्वादित्याह—दीयमानं, बहुकमपि, ओदनभरं, भरिष्यति भर्तुं शक्नोतीत्यर्थः । अदीयमानं, न याचते । न प्रत्याचष्टे न निराकरोति, अर्थाद् दीयमानम् । न खल्विति । अहम्, ईदृशेन एवञ्जातीयेनान्नादिलाभेन न खलु न सन्तुष्टः तृप्त एवेत्यर्थः ।

ता इति । तस्मात्, संस्थीकृतदेवकार्यस्य संस्था नाम व्यवस्थितं कर्म संस्थीकृतं व्यवस्थितकर्मतामापादितं देवकार्यं दैनन्दिनदेवपूजा येन तस्य, अथवा षष्ठीकृतदेवकार्यस्येति संस्कृतं षष्ठ्यां तिथिविशेषे कृतदेवकार्यस्येत्यर्थः । तत्रभवतः, चारुदत्तस्य कारणात् चारुदत्तस्यार्थे, सुमनसः पुष्पाणि, अन्तरीयवासश्च परिधानवस्त्रं च गृहीतानि । प्राकृते लिङ्गवचनयोरनियमः, 'गहीदा' इति वा पाठः । अस्य चारुदत्तस्य, पार्श्वपरिवर्ती सहायः, भवामि यावद् भविष्यामि । इह गहीदो सुमणो इति लिङ्गवचनव्यभिचारः प्राकृते द्रष्टव्यः, तदनुसारी वा पाठो मृग्यः ।

यासां बलिर्भवति मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विभक्तपुष्पः ।
तास्वेव पूर्वबलिरूढयवाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ॥ २ ॥

**विदूषकः**—(क) अळं दाणि भवं अदिमत्तं सन्तप्पिदुं । पुरुसजो-

(क) अलमिदानीं भवानतिमात्रं सन्तप्तुम् । पुरुषयौवनानीव गृहयौवनानि

एसो इत्यादि । प्रभातचन्द्र इव उषःकालचन्द्र इव । सकरुणप्रियदर्शनः सकरुणं प्रभानिर्वाणशोचनीयं प्रियं प्रीतिकरं च दर्शनं यस्य सः । यथाविभवेन यथास्थितेन विभवेन, गृहदैवतानि, अर्चयन् पूजयन् ।

तत इत्यादि । बलिं देवतोपहारं । चाङ्गेरिकाहस्ता चाङ्गेरी चुक्रिकाख्या वातपित्तहरा रुच्या काचिदोषधिः तां स्वाम्युपयोगार्थमानीय हस्ते कुर्वतीत्यर्थः ।

नायक इत्यादि । मनस्विनः मानिनः । सोच्छ्वासम् उच्छ्वासयुक्तं मरणं, दारिद्र्यलक्षणस्य मरणस्य प्रसिद्धमरणादुच्छ्वासमात्रकृतो विशेषः, सत्कर्मानारम्भादिकं तूभयोरविशिष्टमित्यभिप्रायः ।

यासामिति । यासां मद्गृहदेहलीनां मद्गृहाङ्गणानां, बलिः यवादिधान्यमयो मद्दत्तो दैवतोपहारः, हंसैश्च, सारसगणैश्च सारसाख्यजलचरपक्षिगणैश्च, विभक्तपुष्पः विभक्तानि पृथक्कृतानि बलिगतधान्यमात्रमुपयुज्यावशेषितानि पुष्पाणि यस्मात् स तथाभूतः, भवति । भूतस्यापि भवनस्य पूर्वं नित्यानुवृत्तत्वं लटा द्योत्यते । पूर्वबलिरूढयवाङ्कुरासु पूर्वदत्तेभ्यो बलिभ्यो बलिगतयवेभ्यो रूढानि यवाङ्कुराणि यासु तथाभूतासु, तास्वेव देहलीषु, बीजाञ्जलिः बीजानाम् अङ्कुरकारणानाम् अर्कधुस्तूरादिसम्बन्धिनाम् अञ्जलिः परिमाणविशेषः अञ्जलिपरिमितानि बीजानीत्यर्थः, पतति । वर्तमाननिर्देशात् सम्प्रति । हंसाद्युत्तमजन्तुभोज्यधान्यमयबलिनिवेशस्थाने पतन् बीजाञ्जलिः कस्य भोज्य इत्याकाङ्क्षायामाह—कीटमुखावलीढः क्षुद्रजन्तुमुखास्वादितः । एवञ्च दरिद्रोऽहमिदानीं समृद्धबलिदानासमर्थत्वाद् मृतप्राय इत्यभिप्रायः ॥ २ ॥

अळमित्यादि । इदानीं भवान्, अतिमात्रम् अत्यर्थं, संतप्तुम्, अलम् इह प्रश्नकाका समर्थः किमित्यर्थः, असमर्थ इति तु तात्पर्यम् । अथवा, अलमिति

ण्णाणि विअ गिहजोण्णाणि खु दसाविसेसं अणुहोन्ति । आसमुद्दआण-विपण्णविभवस्स बहुळपक्खचन्दस्स जोह्णापरिक्खओ विअ भवदो एव्व रमणीओ अअं दरिद्दभावो ।

**नायकः**—न खल्वहं नष्टां श्रियमनुशोचामि । गुणरसज्ञस्य तु पुरुषस्य व्यसनं दारुणतरं मां प्रति भाति । कुतः,

सुखं हि दुःखान्यनुभूय शोभते
यथान्धकारादिव दीपदर्शनम् ।
सुखात्तु यो याति दशां दरिद्रतां
स्थितः शरीरेण मृतः स जीवति ॥ ३ ॥

---

खलु दशाविशेषमनुभवन्ति । आसमुद्रदानविपन्नविभवस्य बहुलपक्षचन्द्रस्य ज्योत्स्नापरिक्षय इव भवत एव रमणीयोऽयं दरिद्रभावः ।

---

वारणार्थे वर्तते, कृतं यथोक्तेन शोकवचनेनेत्यर्थः । भवान् विवेकविज्ञानादिना भासमानस्त्वम्, अतिमात्रं सन्तमुम्, अनर्ह इति पदमिह योग्यतयाध्याहार्यम् । दशाविशेषम् अवस्थान्तरम् । आसमुद्रेति । अयं दरिद्रभावः आसमुद्रदानविपन्न-विभवस्य समुद्रपर्यन्तविशालभूप्रदेशदानविनष्टधनसंपदः, भवत एव रमणीयः भवन्तमासाद्यैव शोभत इत्यर्थः । तत्रोपमामाह—बहुलपक्षचन्द्रस्य ज्योत्स्नापरिक्षय इवेति । बहुलपक्षः कृष्णपक्षः ।

**न खल्वित्यादि** । गुणरसज्ञस्य अनुभूतविभवफलसारस्य पुरुषस्य तु, व्यसनं दारिद्र्यं, दारुणतरं नित्याभ्यस्तार्थसाध्यसत्कर्मानुष्ठानत्याजकतयातिशयेनासह्यं, मां प्रति भाति मां लक्षीकृत्य भाति ।

**सुखमिति** । दुःखानि अनुभूय दुःखानुभवानन्तरं, सुखं सुखक्रिया सुखा-नुभव इत्यर्थः, शोभते रोचते, हीति प्रसिद्धौ । तत्रोपमामाह—अन्धकाराद् दीप-दर्शनं यथा अन्धकारं प्राप्य दीपदर्शनमिव । यस्तु, सुखाद् दरिद्रतां दशां याति सुखप्राप्त्यनन्तरं दारिद्र्यावस्थां प्राप्नोति, सः, मृतः धनसाध्यसर्वसत्कर्मपरिलोपेन व्यर्थजीवितत्वान्मृतकल्पः, शरीरेण स्थितः, जीवति श्वसिति । इह यथेति सिद्धौ वाक्यभूषणमिवशब्दः, समुदितौ वायथेवशब्दावुपमार्थौ । 'घनान्धकारेष्विव' इति तु मृच्छकटिके पाठः ॥ ३ ॥

विदूषकः—(क) भो वअस्स! समुद्दपट्टणसारभूदो तादिसो अत्थसञ्चओ कहिं गओ।

नायकः—(निःश्वस्य) वयस्य! यत्र गतानि मे भागधेयानि। पश्य,

क्षीणा ममार्थाः प्रणयिक्रियासु
विमानितं नैव परं स्मरामि।
एतत्तु मे प्रत्ययदत्तमूल्यं
सत्त्वं सखे! न क्षयमभ्युपैति॥ ४॥

(चिन्तां नाटयति।)

विदूषकः—(ख) किं भवं अत्थविभवं चिन्तेदि।

नायकः—

सत्यं न मे धनविनाशगता विचिन्ता
भाग्यक्रमेण हि धनानि पुनर्भवन्ति।

---

(क) भो वयस्य! समुद्रपत्तनसारभूतस्तादृशोऽर्थसञ्चयः क्व गतः।
(ख) किं भवानर्थविभवं चिन्तयति।

---

भो वअस्सेत्यादि। समुद्रपत्तनसारभूतः रत्नाकरसारभूतः महानगरसारभूतश्च। अर्थसञ्चयः मणिमौक्तिकसुवर्णाद्यर्थनिचयः।

वयस्येत्यादि। यत्र गतानीति, तत्र गत इत्यार्थम्।

क्षीणा इति। मम अर्थाः, प्रणयिक्रियासु प्रणयः स्नेहः प्रार्थना वा स्निग्धजनकार्येषु प्रार्थयितृजनकार्येषु वेत्यर्थः। क्षीणाः व्ययिताः। परम् अन्यमर्थिजनं, विमानितम् अकृतार्थितं, न स्मरामि। अननुभूतत्वादेव। इत्थमर्थक्षयलक्षणां विपदमुपगतस्यापि मम धैर्यं न क्षीयत इतीमं विशेषमुत्तरार्धेनाह—एतत्त्वित्यादि। प्रत्ययदत्तमूल्यं प्रत्ययेन विश्वासेन धैर्यमेव विपन्निस्तारहेतुरित्येवंरूपेण दत्तमूल्यं क्रीतं स्वायत्तीकृतमित्यर्थः। सत्त्वं धैर्यम्॥ ४॥

किमित्यादि। चिन्तयति नष्टमनुध्यायति।

सत्यमित्यादि। विचिन्ता चिन्तामूलः सन्तापः। भाग्यक्रमेण भाग्यपर्यायेण।

एतत्तु मां दहति नष्टधनाश्रियो मे
यत् सौहृदानि सुजने शिथिलीभवन्ति ॥ ५ ॥

अपिच,

दारिद्र्यात् पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते
सत्त्वं ह्रास्यमुपैति शीलशशिनः कान्तिः परिम्लायते ।
निर्वैरा विमुखीभवन्ति सुहृदः स्फीता भवन्त्यापदः
पापं कर्म च यत् परैरपि कृतं तत्तस्य सम्भाव्यते ॥ ६ ॥

**विदूषकः** — (क) एदे दाणि दासीएवुत्ता अत्थवावारा गोवदारआ विअ मसअभीदा गिहादो णिग्गच्छन्ति । धणविणासदुःखस्स उण चिन्तिअमाणस्स वसन्ते बुड्ढस्स सरत्थम्बस्स विअ अङ्कुरङ्कुरा उब्भमन्ति । ता अळं भवदो सन्दावेण ।

---

(क) एत इदानीं दास्याःपुत्रा अर्थव्यापारा गोपदारका इव मशकभीता गृहाद् निर्गच्छन्ति । धनविनाशदुःखस्य पुनश्चिन्त्यमानस्य वसन्ते वृद्धस्य शरस्तम्बस्येवाङ्कुराङ्कुरा उद्भ्रमन्ति । तदलं भवतः सन्तापेन ।

---

पुनर्भवन्ति पुनरुत्पद्यन्ते । दहति सन्तापयति । नैर्धन्यदोषेणात्मनः सुजनविषयः सुहृद्भावोऽपि तद्वैमुख्यात् शिथिलतां यातीत्येतदेव दुःखकरमित्याह — एतत्त्वित्यादि ॥ ५ ॥

दारिद्र्यादित्यादि । वाक्ये न सन्तिष्ठते वचनं नाद्रियते । 'समवप्रविभ्यः स्थ' इति तङ् । सत्त्वं ह्रास्यमुपैति धैर्यावष्टम्भः उपहासं प्राप्नोति । शीलशशिनः चन्द्रवदाह्लादकारिणः सद्वृत्तस्य । परिम्लायते क्षीयते । निर्वैराः सन्तः वैरं विनैवेत्यर्थः । स्फीताः प्रवृद्धाः । यत् पापं कर्म चौर्यनरवधादिकं परैः कृतं, तदपि तस्य दरिद्रपुरुषस्य, सम्भाव्यते शङ्क्यते तत्कृतमेवेति शङ्क्यते इत्यर्थः । एतेन चारुदत्तेऽर्पितस्यालङ्कारन्यासस्य चौर्यमन्यकृतं चारुदत्तकृतमिति शङ्कया प्रवृत्तोऽनर्थहेतुरभियोग इतिवृत्तगतः सूच्यते । इह म्लैधातौ पदव्यत्ययोऽपाणिनीयः । म्लायतीति वा पठनीयम् ॥ ६ ॥

एदे इत्यादि । दास्याःपुत्राः इह 'षष्ठ्या आक्रोशे' इत्यलुक् । अर्थव्यापाराः धनसाध्यानि कर्माणि । अङ्कुराङ्कुरा अङ्कुरसन्तानाः । उद्भ्रमन्ति उद्भूय चलन्ति ।

नायकः—वयस्य ! किमर्थं सन्तापं करिष्ये । किञ्चाहं दरिद्रः, यस्य मम,

विभवानुवशा भार्या समदुःखसुखो भवान् ।
सत्त्वं च न परिभ्रष्टं यद् दरिद्रेषु दुर्लभम् ॥ ७ ॥

(ततः प्रविशति गणिका सम्भ्रान्ता विटेन शकारेण चानुगम्यमाना ।)

शकारः—(क) चिट्ठ चिट्ठ वशन्तशेणिए ! चिट्ठ,

किं याशि धावाशि पधावशि पक्खळन्ती
शाहु प्पशीद ण मळीअशि चिट्ठ दाव ।

---

(क) तिष्ठ तिष्ठ वसन्तसेने ! तिष्ठ,

किं यासि धावसि प्रधावसि प्रस्खलन्ती
साधु प्रसीद न मार्यसे तिष्ठ तावत् ।

---

वयस्येति । अहं दरिद्रः किं दरिद्रव्यपदेशार्हो न भवामीत्यर्थः ।

कुत इत्याकाङ्क्षायामात्मनो दरिद्रदुर्लभमहार्घवस्तुत्रयसंपन्नत्वादित्यभिप्रायेणाह—यस्य मम विभवेति । यस्य मम, विभवानुवशा विभवानुविधायिनी विभवमतिक्रम्याविचेष्टमाना, भार्या, अस्ति, समदुःखसुखः मित्रं भवान् अस्ति, सत्त्वं च धैर्यं च, न परिभ्रष्टं न विनष्टं, सोऽहं किं दरिद्र इति पूर्वेण सम्बन्धः । भार्या-मित्र-सत्त्वानि विशिनष्टि—यद् यानि विभवानुवशभार्यां समदुःखसुखं मित्रम् अपरिभ्रष्टं सत्त्वमित्येतानि, दरिद्रेषु विषये, दुर्लभं दुर्लभानि धनहीनोऽपि धनक्षयकालदुर्लभेन विशिष्टभार्यादित्रिकेण युक्तो धनिकसाधारणस्य सौख्यस्य भाजनं भवत्येवेति भावः । इह या च यश्च यच्च यदिति 'नपुंसकमनपुंसकेने' ति नपुंसकैकशेषः पाक्षिकमेकवत्त्वं च द्रष्टव्यम् । एवं दुर्लभमित्यत्रापि ॥ ७ ॥

अथ 'स्फीता भवन्त्यापद' इत्युक्त्या नायकविपत्तिनिमित्तभूतशकारदुश्चेष्टितसूचनात् शकारं तदनुबन्धिजनं च प्रवेशयति—ततः प्रविशतीत्यादि । गणिका वसन्तसेना नाम नायकानुरक्ता । सम्भ्रान्ता विटशकारानुगमनभयोद्विग्ना । शकारो नाम 'मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्तः । सोऽयमनूढाभ्राता राज्ञः स्यालः शकार इत्युक्तः ॥', इत्येवंलक्षणः ।

चिट्ठेत्यादि ।

किं याशीत्यादि । इह यासीति स्वाभाविकं गमनं, ततो धावसीत्यनुगन्तु-

कामेण शम्पदि हि जज्झइ मे शळीळं
अङ्गाळमज्झपडिदे विअ चम्मखण्डे ॥ ८ ॥

**विटः** — वसन्तसेने !

किं त्वं भयेन परिवर्तितसौकुमार्या
नृत्तोपदेशविशदौ चरणौ क्षिपन्ती ।
उद्विग्नचञ्चलकटाक्षनिविष्टदृष्टि-
र्व्याघ्रानुसारचकिता हरिणीव यासि ॥ ९ ॥

**शकारः** — (क) भावे ! एशा गच्छइ वशन्तशेणिआ,
दुवेहि अह्मेहि अणुबन्धअन्ती जहा शिगाळी विअ कुकुळेहि ।
शणूपुळा मेहळणादहाशा शवेट्टणं मे हळअं हळन्ती ॥ १० ॥

---

कामेन सम्प्रति हि दह्यते मे शरीर-
मङ्गारमध्यपतितमिव चर्मखण्डम् ॥ ८ ॥

(क) भाव ! एषा गच्छति वसन्तसेना,
द्वाभ्यामावाभ्यामनुबध्यमाना यथा सृगालीव कुक्कुराभ्याम् ।
सनूपुरा मेखलानादहासा सवेष्टनं मे हृदयं हरन्ती ॥ १० ॥

---

सन्निकर्षप्राप्तिं परिजिहीर्षन्त्याः सवेगगमनं, ततः प्रधावसीत्यनुगन्तृसन्निकर्षप्राप्तिं ज्ञात्वा भीतायाः अतिवेगगमनं चोक्तम् ॥ ८ ॥

किं त्वमित्यादि । त्वं भयेन निमित्तेन, परिवर्तितसौकुमार्या परिवर्तितं विषमचङ्क्रमणलक्षणकठिनकर्मस्वीकारेण विनिमितं सौकुमार्यं सुकुमारकर्म यया सा, नृत्तोपदेशविशदौ नृत्तशिक्षणचतुरौ, चरणौ, क्षिपन्ती, उद्विग्नचञ्चलकटाक्षनिविष्टदृष्टिः उद्विग्ना उद्भ्रान्ता चञ्चला चपला कटाक्षनिविष्टा अनुगन्तृलक्षीकरणवशान्नेत्रान्तनिविष्टा च दृष्टिर्यस्याः सा तथाभूता च सती, व्याघ्रानुसारचकिता हरिणीव व्याघ्रानुगमनभीता मृगीव, किं यासि ॥ ९ ॥

भावे इत्यादि । भाव ! विद्वन् ! (नाट्योक्तौ) 'भावो विद्वान्' इत्यमरः ।

दुवेहीत्यादि । कुक्कुराभ्यामिव श्वभ्यामिव । सृगाली यथा जम्बुकीव । मेखलानादहासा काञ्चीरणितहासा । सवेष्टनं मे हृदयं हरन्ती कर्णशष्कुलीसहितं मे मनो रमयन्ती । इह 'अह्मेह्मणुबन्धअन्ती'ति सन्धिकरणेन वृत्तोपपत्तिः ॥ १० ॥

**विटः** — वसन्तसेने !

किं त्वं पदात् पदशतानि निवेशयन्ती
नागीव यासि पतगेन्द्रभयाभिभूता ।
वेगादहं प्रचलितः पवनोपमेयः
किं त्वां ग्रहीतुमथवा न हि मेऽस्ति शक्तिः ॥ ११ ॥

**गणिका** — (समन्तादवलोक्य) (क) पळ्ळवअ ! पळ्ळवअ ! परहुदिए ! परहुदिए ! महुअरअ ! महुअरअ ! सारिए ! सारिए ! । हद्धि, णट्ठो मे परिजणो । एत्थ सअं एव अप्पा रक्खिदव्वो ।

**शकारः** — (ख) विळव विळव णाए ! विळव पळ्ळवं वा, परहुदिअं वा, महुअरं वा, शालि(शि?)अं वा, शव्वं वशन्तमाशं वा । के के तुमं परित्तआशि ।

---

(क) पल्लवक ! पल्लवक ! परभृतिके ! परभृतिके ! मधुकरक ! मधुकरक ! शारिके ! शारिके ! । हा धिक्, नष्टो मे परिजनः । अत्र स्वयमेवात्मा रक्षितव्यः ।

(ख) विलप विलप नार्ये ! विलप पल्लवं वा, परभृतिकां वा, मधुकरं वा, शारिकां वा, सर्वं वसन्तमासं वा । कस्कस्त्वां परित्रास्यते ।

---

किं त्वमिति । त्वं, पदात् पदशतानि निवेशयन्ती एकं पदन्यासं कृत्वा द्वितीयं पदन्यासं पदशतावकाशलङ्घनेन कुर्वती सती, पतगेन्द्रभयाभिभूता नागीव गरुडभयोद्विग्ना भुजङ्गीव, किं यासि, स्थित्वा मां सम्भावयेत्यभिप्रायः । अथवेत्युक्तनिरासे, त्वां प्रति याननिवृत्तिं नार्थय इत्यर्थः । कुतः? पवनोपमेयः वायुतुल्यः अहं, वेगात् प्रचलितः । वेगप्रचलनेन किं भवतीत्याह—त्वां धावन्तीमपि, ग्रहीतुं, मे, शक्तिः, न ह्यस्ति किम्, अस्त्येव ॥ ११ ॥

पळ्ळवअ इत्यादि । पळ्ळवकपरभृतकादिशब्दाः परिजनसंज्ञाविशेषाः । नष्टः अदृष्टः । स्वयमेव आत्मनैव ।

विळवेत्यादि । ज्ञाते ! सगोत्रे ! इति सोपहासमामन्त्रणम् । नार्ये ! इति वा सम्बोधनम्, अनार्ये इत्यर्थः । पल्लवादिवसन्तविभूत्यामन्त्रणप्रसक्त्या वसन्तस्याप्यामन्त्रणं चोदयति—सर्वं वसन्तमासं वेति । कः कः वासुदेवादिषु वक्ष्यमाणेषु कतमः कतमः, त्वां, परित्रास्यते रक्षिष्यति ।

किं वाशुजेवे शवपट्टणेशे
कुन्तीशुदे वा जणमेजए वा ।
अहं तुमं गह्णिअ केशहत्थे
दुःशाशळे शीदमिवाहुळामि ॥ १२ ॥

**विटः** — वसन्तसेने ! सर्वत्र भयानभि(ज्ञ?ज्ञं) हृद(यं?ये) मां कुरु । पश्य,

परिचिततिमिरा मे शीलदोषेण रात्रि०
बहुलतिमिरकालास्तीर्णपूर्वा विघट्टाः ।
युवतिजनसमक्षं काममेतन्न वाच्यं
विपणिषु हतशेषा रक्षिणः साक्षिणो मे ॥ १३ ॥

---

किं वासुदेवः शवपत्तनेशः कुन्तीसुतो वा जनमेजयो वा ।
अहं त्वां गृहीत्वा केशहस्ते दुःशासनः सीतामिवाहरामि ॥ १२ ॥

---

किमित्यादि । वासुदेवः परित्रास्यते किं न परित्रास्यत इत्यर्थः । शवपत्तनेशः यमः । केशहस्ते केशपाशे । रावणः सीतामिवेति वक्तव्ये दुःशासनः सीतामिवेतीतिहासविरुद्धाभिधानं शकारस्य मौर्ख्योक्तिः । एवमसम्बद्धोक्तिषु ज्ञेयम् ॥ १२ ॥

**वसन्तसेने** इति । मां, सर्वत्र स्तेयादिवधपर्यन्ते सर्वविधेऽपि साहसे, भयानभिज्ञं शङ्काविहीनं, हृदये कुरु जानीहि । अतश्च, यदि वचसि मे न तिष्ठसि, त्वां साहसेन वशयेयमित्याशयः ।

विभीषिकार्थमात्मशौर्यमाह — **परिचितेति** । मे मया, निपातोऽयम् । शीलदोषेण स्तेयादिवृत्तदोषेण, परिचिततिमिरा परिशीलितान्धकारचर्या । बहुलतिमिरकालाः कृष्णपक्षान्धकारकृष्णाः, विघट्टाः विमार्गाः, तीर्णपूर्वाः पूर्वं तीर्णाः सुखलङ्घिताः । एतद् अभिधास्यमानं क्रूरकर्म, युवतिजनसमक्षं युवतिजनस्य मार्दवावर्जनीयस्याग्रे, कामं न वाच्यं यद्यपि न कथनीयम्, अथापि किञ्चित् सूचयामीति गम्यम् । विपणिषु पण्यवीथीषु, मे मया, हतशेषाः मारितावशिष्टाः, रक्षिणः नगररक्षाधिकृता राजपुरुषाः, साक्षिणः मच्चौर्यसाक्षाद्द्रष्टारः । अतस्तान् पृष्ट्वा मच्चौर्यतत्त्वं बुध्यस्वेति भावः । एतेन रक्षिपुरुषपरिकीर्णे राजमार्गेऽप्यात्मीयसाहसवृत्तेर्निरङ्कुशत्वमुक्तम् ॥ १३ ॥

**गणिका** —(क) हं इदाणिं संसइदा संवुत्ता, जो अप्पगुणाणि सअं एव्व मन्तेदि । कहं एदे अकय्यं ण करिस्सन्दि ।

**विटः** —भवति! क्रियतामस्माकमनुनयप्रग्रहः । पश्य,

जनयति खलु रोषं प्रश्रयो भिद्यमानः
किमिव च रुषितानां दुष्करं मद्विधानाम् ।
अनुनयति समर्थः खड्गदीर्घः करोऽयं
युवतिवधघृणाया मां शरीरं च रक्ष ॥ १४ ॥

**गणिका** —(ख) अणुणओ वि खु से भाएदि ।

**शकारः** —(ग) वशन्तशेणिए! शुट्ठु भावे भणाशि । बहुमण्णिअदि खु दाव बलिअजणदुल्लहे अणुणए । पेक्ख वाशु!

---

(क) अहम् इदानीं संशयिता संवृत्ता, य आत्मगुणान् स्वयमेव मन्त्रयते। कथमेतेऽकार्यं न करिष्यन्ति ।

(ख) अनुनयोऽपि खल्वस्य भाययति ।

(ग) वसन्तसेने! सुष्ठु भावो भणति । बहुमान्यते खलु तावद् बलवज्जनदुर्लभोऽनुनयः । पश्य वासु!

---

हमिति । हंशब्दोऽनिष्टे । 'हउं दाणिं' इति वा पाठः, अहमिदानीमिति संस्कृतम् । संशयिता संवृत्ता प्राणसंशये स्थापिता जाता, अर्थादहमनेन । इमं विशिनष्टि—य इत्यादि । कथं न करिष्यन्ति मुक्तसंशयं करिष्यन्त्येव ।

**भवतीत्यादि** । अनुनयप्रग्रहः सान्त्ववाक्यानुरोधः ।

**जनयतीत्यादि** । प्रश्रयः अनुनयः, भिद्यमानः प्रत्याख्यायमानःसन् । खड्गदीर्घः खड्गेन सन्निहितेन दीर्घः । अनुनयति मत्कृतानुनयप्रतीक्षया खड्गं न व्यापारयति, अनुनयानारम्भे तु खड्गं प्रागेव त्वयि प्रयोक्ष्यतेत्यभिप्रायः । अनुनयप्रयोगे च युवतिवधजुगुप्सा कारणं, तामप्यनुनयाननुरोधे जह्यामित्यभिप्रायमाविष्कुर्वन्नर्थयते—युवतिजनेत्यादिना । युवतिजनघृणाया इत्यत्र 'भीत्रार्थानामि'त्यपादानत्वे पञ्चमी ॥ १४ ॥

**अणुणओ इत्यादि** । भाययति भयं जनयति ।

**वशन्तेत्यादि** । बलवज्जनदुर्लभः प्रबलजनसकाशाल्लब्धुमशक्यः ।

अशि क्खु तीक्खे शिहिग्गीवमेअए
खिवेमि शीशं सव माळए हवा ।
अळं तु अह्माळिशकाणि ळोशिअ
मडे खु जो होइ ण णाम जीवइ ॥ १५ ॥

**गणिका** — (क) अय्य ! कुळउत्तजणस्स सीळपरितोसोवजीविणी गणिआ खु अहं ।

**विटः** — अतः खलु प्रार्थ्यसे ।

**गणिका** — (ख) अय्य ! इमादो जणादो किं इच्छीअदि सरीरं वा आदु अळङ्कारो वा ।

**विटः** — न पुष्पमोक्षणमर्हति लता । कृतमलङ्कारेण ।

---

असिः खलु तीक्ष्णः शिखिग्रीवामेचकः क्षिपामि शीर्षं तव मारयेऽथवा ।
अलं त्वस्मादृशकान् रोषयित्वा मृतः खलु यो भवति न नाम जीवति ॥ १५ ॥
(क) आर्य ! कुलपुत्रजनस्य शीलपरितोषोपजीविनी गणिका खल्वहम् ।
(ख) आर्य ! अस्माज्जनात् किमिष्यते शरीरं वाथवालङ्कारो वा ।

---

अशीत्यादि । शिखिग्रीवामेचकः मयूरकण्ठश्यामः । तव शीर्षे क्षिपामि, अर्थाद् असिम् । रोषयित्वालं मा रोषय, 'अलंखल्वोरि'ति क्त्वाप्रत्ययः । न नाम जीवति नैव जीवति, अर्थात् सः । मृतस्य चाजीवित्वकथनं मौर्ख्यंकृतम् ॥ १५ ॥

अय्येत्यादि । आर्य ! कुलपुत्रजनस्य कुलीनजनस्य, शीलपरितोषोपजीविनी गणिका खलु शीलं सद्वृत्तं परितोषं परितृप्तिं च उपजीवितुं शीलमस्या इति तथाभूता, वेश्या खलु । न तु पुरुषसामान्योपजीविनी वेश्येत्यर्थः । त्वं पुनर्दुःशीलत्वान्न काम्य इत्यभिप्रायः ।

विटः सुशीलमात्मानं मन्यमान आह—अत इत्यादि ।

अय्येत्यादि । अस्माज्जनात् मत्सकाशात् । कितववृत्तेर्देवनार्थद्रव्यापेक्षित्वं मत्वालङ्कारप्रश्नः ।

न पुष्पेति । लता, पुष्पमोक्षणं पुष्पसंयोगशोभिनी लता पुष्पवियोजनं नार्हतीत्यनेन लतावृत्तान्तेन अलङ्कारसंयोगशोभिनी त्वमलङ्कारवियोजनं नार्हसीति प्रकृतवृत्तान्तः सारूप्याद् गम्यः । कृतम् अलङ्कारेण अलङ्कारं न कामये शरीरमेव कामये इत्यभिप्रायः ।

**गणिका**—(क) अहं खु दाणि अत्ताणं ण सन्दावेअं।

**शकारः**—(ख) वशन्तशेणिए! अहं भट्टिपुत्ते कामइदव्वे।

**गणिका**—(ग) सन्तो सि।

**शकारः**—(घ) शुणाहि भावे! शुणाहि। एशा वशन्तशेणिआ मं शन्तो शि त्ति भणादि।

**विटः**—(आत्मगतम्) आक्रुष्टमात्मानं न जानाति मूर्खः। ध्वंस इत्युक्ते श्रान्त इत्यवगच्छति। अपिच,

अभिनयति वचांसि सर्वगात्रैः
किमपि किमप्यनवेक्षितार्थमाह।
अनुचितगतिरप्रगल्भवाक्यः
पुरुषमयस्य पशोर्नवावतारः॥ १६॥

---

(क) अहं खल्विदानीमात्मानं न सन्तापयेयम्।
(ख) वसन्तसेने! अहं भर्तृपुत्रः कामयितव्यः।
(ग) शान्तोऽसि।
(घ) शृणु भाव! शृणु। एषा वसन्तसेना मां श्रान्तोऽसीति भणति।

---

अहं खु इत्यादि। अहम्, इदानीम् अप्रतिविधेयानिष्टजनसान्निध्यसमापत्तिवेलायामस्याम्, आत्मानं न सन्तापयेयम् यद्यपि त्वद्वाक्यमनिष्टशंसित्वान्मम सन्तापहेतुः, तथाप्यात्मानं सन्तापवैक्लब्येन न योजयेयं, किन्तु धैर्यमवलम्ब्य त्वदविनयादात्मानं कथमपि रक्षेयमित्याशयः।

वशन्तेत्यादि। भर्तृपुत्र इति राजबन्धुत्वाविष्करणम्।

सन्तो इति। शान्तः असि निर्वाणो मृतो भविष्यसीत्यर्थः। क्रुद्धायाः शापोक्तिरियम्।

श्रान्तोऽसीत्येवं वचनार्थं मत्वा हृष्यन्नाह—शुणाहीत्यादि।

आक्रुष्टमित्यादि। आक्रुष्टं निन्दितम्।

मूर्खस्य चेष्टां प्रपञ्चयति—अभिनयतीत्यादि। सर्वगात्रैरभिनयति सर्वाङ्गाभिनयनपूर्वं वक्ति। अनवेक्षितार्थम् अनालोचिताभिधेयम्। अनुचितगतिः असभ्याचारः पुरुषमयस्य पशोर्नवावतारः मनुष्यरूपः पशुरेवायं नूतन आविर्भूत इत्यर्थः॥

(प्रकाशम्) वसन्तसेने ! किमिदं मत्सन्निधौ वेशवासविरुद्धमभिहितम् । पश्य,

तरुणजनसहायश्चिन्त्यतां वेशवासो
विगणय गणिका त्वं मार्गजाता लतेव ।
वहसि हि धनहार्यं पण्यभूतं शरीरं
सममुपचर भद्रे ! सुप्रियं चाप्रियं च ॥ १७ ॥

**गणिका** — (क) एसो मे अभिणिवेसो अभिजणेण तुळीअदि ।

**शकारः** — (ख) भावे ! एशा अन्धआळपूळिशगम्भीळा ळच्छा दीशइ । मा खु णाए एत्थ भंशइदव्वा । आ कामदेवाणुआणप्पहुदि

---

(क) एष मेऽभिनिवेशोऽभिजनेन तोल्यते ।

(ख) भाव ! एषान्धकारपूरितगम्भीरा रथ्या दृश्यते । मा खलु नार्या अत्र भ्रंशयितव्या । आ कामदेवानुयानात् प्रभृति नयनमात्रसंस्थुलं दरिद्रसार्थवाह-

---

वसन्तेत्यादि । वेशवासविरुद्धं वेश्याजनविपरीतम् ।

तरुणेत्यादि । तरुणजनसहाय इति मादृशयुवजनावधीरणायां वेशवाटो निस्सहायः स्यादित्यभिप्रायः । विगणय विचिन्तय, अर्थाद् वक्ष्यमाणम् मार्गजाता लतेव उपबुभुक्षुमात्रसाधारणीत्यर्थः । धनहार्यं धनेन मूल्येन आयत्तीकर्तुं शक्यम्, अत एव पण्यभूतं क्रय्यवस्तुतुल्यं, भूतशब्द इहोपमार्थे । समम् उपचर अविशेषेण सेवस्व ॥ १७ ॥

एसो इति । एष मे अभिनिवेशः कुलपुत्रशीलपरितोषोपजीविन्येव भवेयमित्येवमात्मको निर्बन्धः अभिजनेन कुलेन मातृमातामह्यादिना मद्वंश्यजनेन, तुल्यते तुलया परीक्ष्यते यथावदस्ति नवेति, अथवा तुलया ध्रियते तुलया परिच्छिद्योपादीयते, । एवञ्च मत्कुलधर्मभूतं यथोक्तमभिनिवेशं नाहं जह्यामित्युक्तं भवति ।

भावे इत्यादि । अन्धकारपूरितगम्भीरा तिमिरसान्द्रा अत एव गम्भीरा स्वप्रविष्टजनादर्शनकारिणी । अनया रथ्यया करणेन । अत्र अस्मिन् प्रदेशविशेषे । मा खलु भ्रंशमितव्या भ्रंशं न प्रापयितव्या । आ इति स्मरणे, तच्च वक्ष्यमाणस्थलविशेषविषयम् । कामदेवानुयानात् प्रभृति कामदेवस्य तदुत्सवप्रसङ्गे रथ्यायां यात्र-

णअणमत्तशत्थुळं दलिद्दशत्थवाहवुत्तं चालुदत्तवड्डुअं कामेदि एशा। इदं तश्श गेहश्श पक्खदुवाळं।

**गणिका** — (सहर्षमात्मगतम्) (क) एदं तस्स गेहं। दिट्ठिआ दाणिं अमित्तजणणिरोहेण पिअजणसमीवं उवणीदह्मि। भोदु, एवं दाव करिस्सं (अपसरति।)

**शकारः** — (विलोक्य) (ख) भावे! णट्ठा णाए णट्ठा।

**विटः** — कथं नष्टा। अन्विष्यतामन्विष्यताम्।

**शकारः** — (ग) भावे! ण दिश्शदि।

**विटः** — हन्त वञ्चिताः स्मः। वसन्तसेने! उपलब्धेदानीमसि।

---

पुत्रं चारुदत्तवटुकं कामयत एषा। इदं तस्य गृहस्य पक्षद्वारम्।

(क) एतत् तस्य गेहम्। दिष्ट्येदानीममित्रजननिरोधेन प्रियजनसमीपमुपनीतास्मि। भवतु, एवं तावत् करिष्यामि।

(ख) भाव! नष्टा नार्या नष्टा।

(ग) भाव! न दृश्यते।

---

मानस्य यदनुयानम् अनुगमनं तत आरभ्य। नयनमात्रसंस्थुलं चक्षुर्मात्ररम्यं न तु विभवादिगुणान्तरयुक्तं दरिद्रसार्थवाहपुत्रं निर्धनं वणिक्पुत्रं। चारुदत्तवटुकमिति वटुत्ववचनमादरार्थम्। पक्षद्वारं पार्श्वद्वारम्।

एदमित्यादि। अमित्रजननिरोधेन शत्रुजनकृतेन गतिप्रतिरोधेन। उपनीता प्रापिता। बुद्धिस्थप्रकारेण करणमाह—अपसरतीति मार्गादपसृत्य चारुदत्तगृहपक्षद्वारोपान्ते तिष्ठतीत्यर्थः।

भावे णट्ठेत्यादि। अनया रथ्यया निमित्तेन। नष्टा अदर्शनं गता।

कथमित्यादि। अन्विष्यताम् मृग्यताम्। सम्भ्रमाद् द्विरुक्तिः।

भावे इत्यादि। न दृश्यते अन्विष्टापि नोपलभ्यते।

हन्तेत्यादि। हन्तशब्दो विषादे। इदानीं विना विलम्बम्। उपलब्धासि उपलब्धा भविष्यसीत्यर्थः।

कामं प्रदोषतिमिरेण न दृश्यसे त्वं
सौदामनीव जलदोदरसन्निरुद्धा ।
त्वां सूचयिष्यति हि वायुवशोपनीतो
गन्धश्च शब्दमुखराणि च भूषणानि ॥ १८ ॥

(गणिका मालामपनीय भूषणानि चोत्सारयति ।)

**विटः** — अहो बलवांश्चायमन्धकारः । सम्प्रति हि,

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ १९ ॥

अपिच,

सुलभशरणमाश्रयो भयानां वनगहनं तिमिरं च तुल्यमेव ।
उभयमपि हि रक्षतेऽन्धकारो जनयति यश्च भयानि यश्च भीतः ॥

---

उपलम्भकसामग्रीसमवधानमाह — काममित्यादि । कामं न दृश्यसे यद्यपि नोपलभ्यसे । प्रदोषतिमिरेण निशामुखप्रसृतेन तमसा । जलदोदरसन्निरुद्धा सौदामनीव मेघगर्भगुप्ता विद्युदिव । त्वां सूचयिष्यति 'इयममुकप्रदेशे तिष्ठती'ति ज्ञापयिष्यति । हिशब्दस्तुशब्दस्यार्थे तथापीत्येतस्मिन् वर्तते । वायुवशोपनीतो गन्धश्च वातानुसारोपगतः पुष्पामोदश्च । शब्दमुखराणि शिञ्जितवाचालानि ॥ १८ ॥

आत्मनो ज्ञप्तिर्मा भूदिति ज्ञापकानि गणिका परिहरतीत्याह—गणिकेत्यादि । अपनीय दूरे निरस्य । भूषणानि उत्सारयति तत्तदङ्गेभ्योऽवतारयति ।

अहो इत्यादि ।

लिम्पतीवेति । तमः तिमिरम् अङ्गानि लिम्पतीव । नभः गगनम्, अञ्जनं वर्षतीव । इह तमःकर्तृके व्यापने तथाविधाङ्गकर्मकलेपनक्रियातादात्म्यं, नभः-कर्तृकाञ्जनवर्षणतादात्म्यं चोत्प्रेक्ष्यते । तमोव्यापनस्य कार्यमाह—दृष्टिः चक्षुः, असत्पुरुषसेवेव दुर्जनाश्रयणमिव, निष्फलतां, गता प्राप्ता ॥ १९ ॥

सुलभेति । भयानां सुलभशरणं चोरादिभयवताम् अनायासलभ्यं रक्षकम् अभयस्थानं, निलीयावस्थानेन चोरादेः परिहर्तुं शक्यत्वात्, भयानाम् आश्रयः भयोत्पादकानां वासस्थानं चोरादिभिर्जनवासयोग्यत्वात्, वनगहनं वनगह्वरं तिमिरं

तथाहि —

आलोकविशाला मे सहसा तिमिरप्रवेशसञ्छन्ना ।
उन्मीलितापि दृष्टिर्निमीलितेवान्धकारेण ॥ २१ ॥

गणिका — (क) अम्महे भित्तिपरिणामसूइदं पक्खदुवाळं । असम्भोअमळिणदाए इह अहिअं अन्धआरो । ता इह एव्व चिट्ठिस्सं । (स्थिता।)

नायकः — मैत्रेय ! गच्छ, चतुष्पथे बलिमुपहर मातृभ्यः ।

विदूषकः — (ख) ण मे सद्धा, अण्णो गच्छदु ।

नायकः — किमर्थम् ।

---

(क) अहो भित्तिपरिणामसूचितं पक्षद्वारम् । असम्भोगमलिनतयेहाधिकमन्धकारः । तद् इहैव स्थास्यामि ।

(ख) न मे श्रद्धा, अन्यो गच्छतु ।

---

च, तुल्यमेव यथोक्तधर्मद्वययोगात् परस्परसदृशमेव । परस्परसादृश्येन च तृतीयसदृशव्यवच्छेदः फलति । तत्राप्रकृते वनगहने धर्मद्वययोगं सुप्रतीतं मत्वा प्रकृते तं वैशद्यार्थमुपपादयति—यश्च चोरादिः, भयानि, जनयति यश्च भीतः चोरादिभ्यः, उभयमपि तद् द्वयमपि तातुभावपीत्यर्थः । अन्धकारः रक्षते परदृष्ट्यगोचरतामापाद्य पालयति । इहात्मनेपदमपाणिनीयम् । उपमेयोपमालङ्कारः ॥ २० ॥

दृष्टिप्रतिरोधमेवाह—आलोकेति । आलोकविशाला पूर्वं प्रकाशसाह्येन दूरविषयग्राहिणी, सहसा सद्यः, तिमिरप्रवेशसञ्छन्ना, मे दृष्टिः, उन्मीलितापि, अन्धकारेण हेतुना, निमीलितेव निमीलितसमानफला, जातेति शेषः ॥ २१ ॥

अम्महे इत्यादि । अम्महे इति सन्तोषे । भित्तिपरिणामसूचितं कुड्यान्यथाभावव्यञ्जितम् । असम्भोगमलिनतया असम्भोगेन अनुपभोगेन या मलिनता सुधालेपादिसंस्कारविरहप्रयुक्ता तया ।

मैत्रेयेत्यादि । चतुष्पथे शृङ्गाटके । मातृभ्यः ब्राह्मीमाहेश्वरीकौमारीवैष्णवीवाराहीमाहेन्द्रीचामुण्डाभ्यः सप्तभ्यो देवीभ्यः ।

णेत्यादि । श्रद्धा आस्था ।

किमिति । किमर्थं केन कारणेन ।

विदूषकः—(क) मम बुद्धी आदंसमण्डळगआ विअ छाआ वामेसु दक्खिणा दक्खिणेसु वामा होइ ।

नायकः—मूर्ख ! यथाविभवेनाच्र्यताम् । भक्त्या तुष्यन्ति दैवतानि । तद् गम्यताम् ।

विदूषकः—(ख) एआई अहं कहं गमिस्सं ।

नायकः—रदनिके ! अनुगच्छात्रभवन्तम् ।

रदनिका—(ग) जं भट्टा आणवेदि ।

विदूषकः—(घ) भोदि ! दीवं अहं णइस्सं ।

नायकः—यथा भवान् मन्यते, तथास्तु ।

विदूषकः—(दीपं गृहीत्वा) (ङ) भो रदणिए ! अवावुद पक्खदुवाळं ।

रदनिका—(च) तह । (नाट्येन द्वारमपावृणोति ।)

---

(क) मम बुद्धिरादर्शमण्डलगतेवच्छाया वामेषु दक्षिणा दक्षिणेषु वामा भवति ।

(ख) एकाक्यहं कथं गमिष्यामि ।

(ग) यद् भर्ताज्ञापयति ।

(घ) भवति ! दीपमहं नेष्यामि ।

(ङ) भो रदनिके ! अपावृणु पक्षद्वारम् ।

(च) तथा ।

---

स्वबुद्धेः स्वाभाविकी विपरीतवृत्तितैव कारणमित्याह—ममेत्यादि । आदर्शमण्डलगता दर्पणप्रतिफलिता ।

बुद्धिवैपरीत्यं विभवक्षयमन्युकृतं मत्वा तत्प्रशमानुकूलमुपदिशति—मूर्खेत्यादि । यथाविभवेनार्च्यतां महता स्वल्पेन वा यथास्थितेन विभवेन देवतार्चनं न्याय्यमित्यर्थः । भक्त्या भक्तिः परमानुरक्तिः तया, न तु विभवेन ।

एआई इत्यादि । एकाकी असहायः ।

रदनिक इत्यादयश्चत्वारः संवादाः ।

भो इत्यादि । अपावृणु विघटय ।

तहेत्यादयस्त्रयः संवादाः ।

( गणिका वस्त्रान्तेन दीपं निर्वापयति । )

**विदूषकः**—(क) अविहा अविहा ।

**नायकः**—वयस्स ! किमेतत् ।

**विदूषकः**—(ख) अवावुदपक्खदुवारपिण्डीकिदप्पविट्ठेण राअमग्गसङ्किण्णेण वादेण सहसा णिग्गच्छन्तस्स मम हत्थे णिवावुदो दीवो ।

**नायकः**—मूर्ख ! धिक् त्वाम् ।

**विदूषकः**—(ग) अप्पं खु मे अवरद्धं । रदणिए ! गच्छ, चउप्पहे मं पडिवालेहि । जाव अहं वि अब्भन्तरचउस्सालादो दीवं गह्णिअ आअच्छामि । ( निष्क्रान्तः । )

**चेटी**—(घ) अय्य ! तह । ( परिक्रामति । )

---

(क) अविहाविहा ।

(ख) अपावृतपक्षद्वारपिण्डीकृतप्रविष्टेन राजमार्गसङ्कीर्णेन वातेन सहसा निर्गच्छतो मम हस्ते निर्वापितो दीपः ।

(ग) अल्पं खलु मेऽपराद्धम् । रदनिके ! गच्छ, चतुष्पथे मां प्रतिपालय । यावदहमप्यभ्यन्तरचतुश्शालाद् दीपं गृहीत्वागच्छामि ।

(घ) आर्य ! तथा ।

---

गणिकावस्त्रान्तचलनवातकृतं दीपनिर्वापणं पक्षद्वारसान्द्रप्रविष्टराजमार्गवातकृतं मत्वाह—अवावुदेति । सहसा अनवधानेन ।

मूर्खेत्यादि । त्वां धिक् त्वं गर्हितः । 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु' इत्यादिना धिग्योगे द्वितीया ।

अप्पमित्यादि । चतुष्पथे मां प्रतिपालय चतुष्पथं गत्वा तत्र स्थिता मदागमनं प्रतीक्षस्व । आगच्छामि, अर्थाच्चतुष्पथम् ।

अय्येति । तथा, करोमीति शेषः ।

**गणिका**—(क) दिट्ठिआ मम प्पवेसणिमित्तं अवावुदं पक्खदुवाळं । अळं चारित्तभएण । जाव पविसामि । (अभ्यन्तरं प्रविश्य तिष्ठति ।)

**विटः**—(विलोक्यात्मगतम्) भवनान्निर्गत्य काचिदियमागच्छति । भवतु, अनया वराकं वञ्चयामि । (प्रकाशम्) सुरभिस्नानधूपानुविद्ध इव गन्धः ।

**शकारः**—(ख) आम भावे ! शुणाम्हि गन्धं शवणेहिं । अन्धआळ-पूळिदेहिं णाशापुडेहिं शुट्ठु ण पेक्खामि ।

**विटः**—तिष्ठ तिष्ठ । क्व यास्यसि । (चेटीं गृह्णाति ।)

(चेटी सभयं भूमौ पतिता ।)

**शकारः**—(ग) गह्ण भावे ! गह्ण ।

---

(क) दिष्ट्या मम प्रवेशनिमित्तमपावृतं पक्षद्वारम् । अलं चारित्रभयेन । यावत् प्रविशामि ।

(ख) आम भाव ! शृणोमि गन्धं श्रवणाभ्याम् । अन्धकारपूरिताभ्यां नासा-पुटाभ्यां सुष्ठु न पश्यामि ।

(ग) गृहाण भाव ! गृहाण ।

---

दिट्ठिआ इत्यादि । दिष्ट्येति हर्षे । प्रवेशनिमित्तं प्रवेशार्थम् । चारित्रभयेन अलम् अकाण्डे परगृहप्रवेशसम्भावितं शीलभ्रंशापवादं प्रति भयं मे नास्तीत्यर्थः ।

गणिकाभ्यन्तरप्रवेशानन्तरं चारुदत्तचेटीं विदूषकवचनानुसारेण गृहान्निर्गत्य बहिरागच्छन्तीं दृष्ट्वा मनसि चिन्तयति—भवनादित्यादि । वराकं भग्नाशं । वञ्चयामि गणिकाभ्रममुत्पाद्य प्रतारयामि । सुरभिस्नानधूपानुविद्ध इव सुरभिः सुगन्धिर्यः स्नानधूपः स्नानानन्तरकेशधूपनार्थो गन्धवासितो धूमः तेन अनुविद्ध इव तद्गन्धसंसृष्ट इव । अनुभूयत इति शेषः ।

आमेत्यादि । शृणोमीत्यादिरसम्बद्धप्रलापो मूर्खस्य ।

तिष्ठेत्यादि ।

गह्णेत्यादि ।

विटः —

एषा हि वयसो दर्पात् कुलपुत्रावमानिनी ।
केशेषु कुसुमन्यासैः सेवितव्येषु धर्षिता ॥ २२ ॥

शकारः —(क) भावे ! किं गहीदा ।

विटः — अथकिम् । एषा गन्धानुसारेण गृहीता ।

शकारः —(ख) दाशीएपुत्तीए शीशं दाव छिन्दिअ पच्चा माळइश्शं ।

विटः — गृह्यतां तावत् ।

शकारः —( चेटीं गृहीत्वा )

(ग) एशा हि वाशू शिळशि ग्गहीदा केशेशु वाळेशु शिळोलुहेशु ।
कूजाहि कन्दाहि ळवाहि वात्तं महेश्शळं शङ्कळमिश्शळं वा ॥

( चेटीं बलादाकर्षति । )

---

(क) भाव ! किं गृहीता ।

(ख) दास्याःपुत्र्याः शीर्षं तावच्छित्त्वा पश्चान्मारयिष्यामि ।

(ग) एषा हि वासूः शिरसि गृहीता केशेषु वालेषु शिरोरुहेषु ।
कूज क्रन्द लप वातं महेश्वरं शङ्करमीश्वरं वा ॥

---

एषेत्यादि । वयसो दर्पात् तारुण्यगर्वात् । कुलपुत्रावमानिनी अस्मद्विधान् कुलीनपुरुषान् अवमन्तुं शीलमस्या इति तथा । कुसुमन्यासैः सेवितव्येषु पुष्पनिवेशेरुपचरणीयेषु । धर्षिता गृहीता ॥ २२ ॥

भावे इत्यादि ।

अथकिमित्यादि । गन्धानुसारेण गृहीता गन्धतस्तदवस्थानदेशं विदित्वा गृहीता ।

दाशीए इत्यादि ।

गृह्यतामित्यादि ।

एशाहीत्यादि । वासूः बाला । श्लोकस्य विभिर्वचनं मौर्ख्यकृतम् ॥ २३ ॥

**चेटी** —(क) किं अय्यमिस्सेहि ववसिदं ।

**शकारः** —(ख) भावे! जाणामि शळयोगेण ण होइ वशन्तशेणिआ।

**विटः** —न मोक्तव्या । वसन्तसेनैवैषा ।

एषा रङ्गप्रवेशेन कलानां चैव शिक्षया ।
स्वरान्तरेण दक्षा हि व्याहर्तुं तन्न मुच्यताम् ॥ २४ ॥

(प्रविश्य)

**विदूषकः** —(दीपं गृहीत्वा) (ग) राअमग्गसङ्किण्णेण सीअसुउमारेण वादेण पदे पदे विक्खोहिअमाणजणिअतरङ्गतेल्लपुण्णभाअणं दीवं कहं वि रक्खिअ गह्णिअ आअदो ह्मि ।

**चेटी** —(शकारं पादेन ताडयन्ती रुदित्वा) (घ) अय्य! मेत्तेअ! अयं परिभवो आदु अवळेवो ।

---

(क) किमार्यमिश्रैर्व्यवसितम् ।

(ख) भाव! जानामि स्वरयोगेन न भवति वसन्तसेना ।

(ग) राजमार्गसङ्कीर्णेन शीतसुकुमारेण वातेन पदे पदे विक्षोभ्यमाणजनिततरङ्गतैलपूर्णभाजनं दीपं कथमपि रक्षित्वा गृहीत्वागतोऽस्मि ।

(घ) आर्य! मैत्रेय! अयं परिभवोऽथवावलेपः ।

---

किमित्यादि ।

भावे इत्यादि । स्वरयोगेन जानामि वसन्तसेनास्वरविलक्षणस्वरसम्बन्धेनानुमिनोमि ।

नेत्यादि ।

एषेत्यादि । रङ्गप्रवेशेन रङ्गो नाट्यं परावस्थानुकरणं तत्परिचयेन । कलानां शिक्षया चैव छलितकप्रयोगादीनां परव्यामोहनविद्यानामभ्यासेन च । स्वरान्तरेण स्वरभेदेन । तत् तस्मात् ॥ २४ ॥

चेटीं चतुष्पथगमनायादिश्य दीपानयनार्थं निष्क्रान्तस्य विदूषकस्य गृहीतदीपस्य प्रवेशमाह—प्रविश्येति ।

राअमग्गेत्यादि । राजमार्गसंकीर्णेन राजमार्गविक्षिप्तेन । शीतसुकुमारेण शीतलानुकूलेन । पदे पदे प्रतिपदन्यासं । विक्षोभ्यमाणजनिततरङ्गतैलपूर्णभाजनं

**विदूषकः**——(क) मा दाव मा दाव । (सखड्गं विटं शकारं च दृष्ट्वा शङ्कितस्तिष्ठति ।)

**विटः**——अये आर्यचारुदत्तस्य वयस्यो मैत्रेयः खल्वयम् । नेयमपि वसन्तसेना । महाब्राह्मण ! अन्यशङ्कया खल्विदमस्माभिरनुष्ठितं, न दर्पात् । पश्यतु भवान्,

अकामा ह्रियतेऽस्माभिः काचित् स्वाधीनयौवना ।
सा भ्रष्टा शङ्कया तस्याः प्राप्तेयं शीलवञ्चना ॥ २५ ॥

**शकारः**——(ख) अविहा दळिद्दशत्थवाहपुत्तश्श चालुदत्तवडुअश्श चेडी खु इअं, ण होइ वशन्तशेणिआ । शाहु, वशन्चशेणिए ! शाहु ।

---

(क) मा तावद् मा तावत् ।

(ख) अविहा दरिद्रसार्थवाहपुत्रस्य चारुदत्तवटुकस्य चेटी खल्वियं, न

---

विचाल्यमानेन अत एव जनितवीचिकेन तैलेन पूर्णं भाजनं स्नेहाधारो यस्य तं । वातवशेन तज्जनिततैलवीचिवशेन च दूरक्षत्वादाह——कथमपीति । महता श्रमेणेत्यर्थः ।

अग्र्येत्यादि । परिभवो मदवमानना । अवलेपः गर्वः । इह प्रश्नकाकुर्बोध्या ।

मा दावेत्यादि । मा तावत् बलाकर्षणं मा कुर्वित्यर्थः ।

अये इत्यादि । अयेशब्दः संभ्रमे । अन्यशङ्कया इतरजनभ्रान्त्या । इदं चेटीग्रहणाकर्षणादिकं । पश्यतु भवान् जानीहि वक्ष्यमाणम् ।

अकामेति । अस्माभिः, अकामा अस्मासु निरभिलाषा, काचित्, स्वाधीनयौवना स्वाधीनं युवजनसामान्ये यथेच्छविनियोज्यं न तु प्रतिनियतभर्त्रधीनं यस्याः सा तथाभूता, गणिकेत्यर्थः, अस्माभिः ह्रियते बलान्नीयते । ह्रियमाणा सा, भ्रष्टा तमःप्रसरेण हेतुना मध्येऽस्मद्गोचराच्च्युता । तस्याः शङ्कया सैवेयमिति भ्रान्त्या आकृतिविशेषाविभावननिमित्तया, इयं शीलवञ्चना वृत्तस्खलितं, प्राप्ता ॥ २५ ॥

अविहेति । अविहेति खेदे । साधु विपरीतलक्षणया असाधु त्वया कृत-

अन्धआलं कळिअ अन्तळा वञ्चिदे भावे, अहके दाव वञ्चिदे कूडकाव-डशीळए । शौवहा दुक्खडे कडे ।

**विदूषकः** — (क) मा दाव । ण जुत्तमिदं ।

**विटः** — भो महाब्राह्मण ! अयमनुनयसर्वस्वमञ्जलिः ।

**विदूषकः** — (ख) भोदु भोदु । अणवरद्धो भवं । अणुणीदो अहं एव्व एत्थ अवरद्धो ।

**शकारः** — (ग) भावे ! दिढं खु भाआशि तं दळिद्दशत्थवाहपुत्तं चाळुदत्तवडुअं ।

**विटः** — सत्यं भीतोऽस्मि ।

**शकारः** — (घ) किश्श भावे ! किश्श ।

**विटः** — तस्य गुणेभ्यः । पश्यतु भवान्,

---

भवति वसन्तसेना । साधु वसन्तसेने ! साधु । अन्धकारं कृत्वान्तरा वञ्चितो भावः । अहं तावद् वञ्चितः कूटकपटशीलया । सर्वथा दुष्करं कृतम् ।

(क) मा तावत् । न युक्तमिदम् ।

(ख) भवतु भवतु । अनपराद्धो भवान् । अनुनीतोऽहमेवात्रापराद्धः ।

(ग) भाव ! दृढं खलु बिभेषि तं दरिद्रसार्थवाहपुत्रं चारुदत्तवटुकम् ।

(घ) कस्माद् भाव ! कस्मात् ।

---

मित्यर्थः । कृत्वा आश्रित्य । अन्तरा मध्ये । कूटकपटशीलया कूटो माया कपटो वञ्चना तत्प्रधानं शीलं यस्यास्तया, अर्थात् त्वया । दुष्करम् अकार्यम् ।

मा दावेत्यादि । इदं चेटीग्रहणम् ।

भो इत्यादि । अनुनयसर्वस्वं परमं परिसान्त्वनम् ।

अनुनयपरितृप्त आह — भोदु इत्यादि ।

भावे इत्यादि । तं चारुदत्तवटुकम्, उद्दिश्येति शेषः ।

सत्यमित्यादि ।

किश्शेत्यादि ।

तस्येत्यादि ।

स मद्विधानां प्रणयैः कृशीकृतो
न तस्य कश्चिद् विभवैरमण्डितः ।
निदाघसंशुष्क इव ह्रदो महान्
नृणां तु तृष्णामपनीय शुष्यति ॥ २६ ॥

महाब्राह्मण ! अयमर्थः सार्थवाहपुत्रस्य न कथयितव्यः ।

( निष्क्रान्तो विटः । )

**शकारः** —(क) माळिश ! वडुअ ! माळिश ! भणेहि तं दळिद्दशत्थवाहपुत्तं चाळुदत्तवडुअं मम वअणेण —ळाअशाळे शण्ठाणे शवट्टेण शीशेण अणुवन्धिय भणादि—णाडअइत्थिआ वशन्तशेणिआ णाम गणिकादारिआ शुवण्णवण्णा दुवेहि अम्मेहि वळक्कारेण णीअमाणा महन्तेण शुवण्णाळङ्कारेण तव गेहं पविट्ठा। शा शुवे णिय्याअइदव्वा। मा दाव तव अ मम अ दाळुणो खोहो होदि त्ति। वडुअ ! माळिश ! इदं च भणाहि—मा दाशीएपुत्त !

---

(क) मारिष ! वटुक ! मारिष ! भण तं दरिद्रसार्थवाहपुत्रं चारुदत्तवटुकं मम वचनेन —राजस्यालः संस्थानकः सपट्टेन शीर्षेणानुवन्ध्य भणति—नाटकस्त्री वसन्तसेना नाम गणिकादारिका सुवर्णवर्णा द्वाभ्यामावाभ्यां बलात्कारेण नीयमाना महता सुवर्णालङ्कारेण तव गेहं प्रविष्टा। सा श्वो निर्यातयितव्या । मा तावत् तव च मम च दारुणः क्षोभो भवतीति । वटुक !

---

गुणान् विवृणोति —स इति । सः चारुदत्तः, मद्विधानां प्रणयैः प्रार्थनैः प्रार्थितार्थदानैरित्यर्थः । कृशीकृतः निर्धनीकृतः । तस्य । विभवैः समृद्धिभिः, अमण्डितः अनलङ्कृतः समृद्धिमप्रापित इत्यर्थः, कश्चित् पुरुषः, नास्ति , सर्वजनभोग्यवैभव इत्यर्थः । तु किन्तु, स इत्यनुवर्तते । निदाघसंशुष्कः ग्रीष्मे सम्यक् शोषं प्राप्तः, महान् ह्रद इव जलाशय इव, नृणां जनानां, तृष्णाम् आशां पिपासां च, अपनीय शमयित्वा, शुष्यति वीतधनो भवति अथच निर्जलो भवति ॥ २६ ॥

महेत्यादि । अयमर्थः चेटीग्रहणवृत्तान्तः ।

माळिशेत्यादि । मारिष ! आर्य ! संस्थानः तदाख्यः । सपट्टेन सशिरस्त्रपट्टवस्त्रेण । नाटकस्त्री नटनवृत्तिः स्त्री । गणिकादारिका बालगणिका । महता प्रभूतेन । निर्यातयितव्या प्रत्यर्पणीया, अर्पयितव्या । दारुणः परमानर्थपर्यवसायी । क्षोभः

वारावदगळप्पविट्टं विअ मूळकन्दं शीशकवाळं मडमडाइश्शं । मा खु कवाडशम्पुडप्पविट्ठं विअ पक्ककवित्थं शीशं दे चुण्णचुण्णं मडमडाइश्शं ति।

**विदूषकः**—(क) भो ! तह । (शकारं दीपेनोद्वेजयति ।)

**शकारः**—(सर्वतो विलोक्य) (ख) कहिं भावे । गदे भावे । अविहा भावे ! ।

(निष्क्रान्तः शकारः ।)

**विदूषकः**—(ग) किदं देवकय्यं त्ति तत्तहोदो णिवेदइस्सामो । भोदि ! अवणीअदु दे हिअअमण्णू । अअं वुत्तन्तो अब्भन्तरं ण पेसिदव्वो ।

**चेटी**—(घ) अय्य ! रदणिआ खु अहं ।

---

मारिष ! इदं च भण—मा दास्याःपुत्र ! पारावतगलप्रविष्टमिव मूलकन्दं शीर्षकपालं मडमडाययिष्यामि । मा खलु कवाटसम्पुटप्रविष्टमिव पक्ककपित्थं शीर्षं ते चूर्णचूर्णं मडमडाययिष्यामि इति ।

(क) भोः ! तथा ।

(ख) क्व भावः । गतो भावः । अविहा भाव ! ।

(ग) कृतं देवकार्यमिति तत्रभवतो निवेदयिष्यावः । भवति ! अपनीयतां ते हृदयमन्युः । अयं वृत्तान्तोऽभ्यन्तरं न प्रेषयितव्यः ।

(घ) आर्ये ! रदनिका खल्वहम् ।

---

चित्तव्यथा । मूलकन्दं मूलसस्यं । मडमडाययिष्यामि मडमडेति खण्डनध्वन्यनुकरणम् मडमडध्वनिं कुर्वत् प्रयोजयिष्यामीत्यर्थः । पक्ककपित्थमिव पक्कं मदनफलमिव । चूर्णचूर्णम् अत्यन्तचूर्णम् ।

भो तहेत्यादि ।

कहिंमित्यादि । भावः विटः ।

किदमित्यादि । तत्रभवतः चारुदत्तस्य । हृदयमन्युः विटशकारपरिभवशोकः । अयं वृत्तान्तः शकारावलेपवार्ता । अभ्यन्तरं न प्रेषयितव्यः आर्यचारुदत्तस्य पत्न्यै न निवेदनीय इत्यर्थः ।

अय्येत्यादि । इह रदनिका खल्वित्यात्मनो रदनिकात्वविधानं 'गोपनीयार्थगोपनपङ्कत्वलक्षणे वैशिष्ट्ये पर्यवस्यति ।

**विदूषकः** — (क) एहि गच्छामो ।

(उभौ परिक्रामतः ।)

**नायकः** — भद्रे ! कृतं देवकार्यम् ।

**गणिका** — (आत्मगतम्) (ख) परिजणत्ति मं सद्दावेदि । भोदु, रक्खिदाह्मि ।

**नायकः** — मारुताभिलाषी प्रदोषः । तद् गृह्यतां प्रावारकम् ।

**गणिका** — (प्रावारकं गृहीत्वा सहर्षम्) (ग) अणुदासीणं जोवणं से पडवासगन्धो सूएदि ।

**नायकः** — रदनिके ! प्रवेश्यतामभ्यन्तरचतुःशालम् ।

**गणिका** — (आत्मगतम्) (घ) अभाइणी अहं अब्भन्तरप्पवेसस्स ।

---

(क) एहि गच्छावः ।

(ख) परिजन इति मां शब्दापयति । भवतु, रक्षितास्मि ।

(ग) अनुदासीनं यौवनमस्य पटवासगन्धः सूचयति ।

(घ) अभागिन्यहमभ्यन्तरप्रवेशस्य ।

---

एहीत्यादि ।

कृतदेवकार्यप्रविष्टचेटीभ्रान्त्या पृच्छति — भद्रे इति । देवकार्यं चतुष्पथबल्युपहरणरूपम् ।

परीति । परिजन इति मत्वेति शेषः । शब्दापयति व्याहरति । भवतु रक्षितास्मीति, मां यथाकथं वा शब्दापयतु, रक्षणं तु मे संसिद्धमित्यर्थः ।

मारुतेति । प्रदोषः निशारम्भसमयः, मारुताभिलाषी मारुतसेवनापेक्षी न तु प्रावारकधारणापेक्षी । प्रावारकम् उत्तरासङ्गः ।

प्रावारकं गृहीत्वेति । ग्रहणोक्त्या नायककृतं स्वदेहोत्तारितप्रावारकार्पणं गम्यम् । अनुदासीनमित्यादि । स्वानुरूपभोग्योपभोगविमुखमुदासीनं तन्न भवतीत्यनुदासीनं । पटवासगन्धः पटवासः वस्त्रवासनद्रव्यं पिष्टाताख्यं तद्गन्धः ।

रदनिक इत्यादि । अभ्यन्तरचतुःशालम् अन्तःसञ्जवनम् । प्रवेश्यतां नीयताम् । अर्थात् प्रावारकम् ।

अभाइणीत्यादि । अभागिनी अनधिकारिणी गणिकात्वादित्यभिप्रायः ।

**नायकः** — किमिदानीं न प्रविशसि ।

**गणिका** — (क) इदाणिं अहं किं भणिस्सं ।

**नायकः** — रदनिके ! किं विलम्बसे ।

(रदनिकाविदूषकावुपसृत्य)

**चेटी** — (ख) भट्टिदारअ ! इअ म्हि ।

**नायकः** — इयमिदानीं का,

अविज्ञातप्रयुक्तेन धर्षिता मम वाससा ।
संवृता शरदभ्रेण चन्द्रलेखेव शोभते ॥ २७ ॥

**गणिका** — (आत्मगतम्) (ग) दीवाळोअसूइदरूवो सो एव्व दाणि एसो, जस्स किदे अहं णिस्सासमत्तळक्खिदं सरीरं उव्वहामि ।

---

(क) इदानीमहं किं भणिष्यामि ।

(ख) भर्तृदारक ! इयमस्मि ।

(ग) दीपालोकसूचितरूपः स एवेदानीमेषः, यस्य कृतेऽहं निःश्वासमात्ररक्षितं शरीरमुद्वहामि ।

---

किमित्यादि ।

इदाणीमित्यादि । अहं किं भणिष्यामि । अचेटी सती किमुत्तरं दास्यामीत्यर्थः ।

अगच्छन्तीं पुनः पृच्छति — रदनिक इत्यादि ।

नायकवाक्यमाकर्ण्याह — भट्टीत्यादि ।

इयमित्यादि श्लोकान्वयि ।

अविज्ञातेति । अविज्ञातप्रयुक्तेन अविज्ञातम् अचेटीयमिति ज्ञानरहितं यथा भवति तथा क्षिप्तेन, मम वाससा, धर्षिता संयोजिता, केयं, शरदभ्रेण शरन्मेघेन, संवृता छन्ना, चन्द्रलेखेव, शोभते । इह धर्मकक्ष्यायां वाससशरदभ्रयोर्बिम्बप्रतिबिम्बभावाद् बिम्बप्रतिबिम्बभावोपमालङ्कारः ॥ २७ ॥

दीवेत्यादि । दीपालोकसूचितः दीपप्रकाशाभिव्यक्तः । यस्य कृते यस्यार्थे यत्संप्रयोगलाभप्रत्याशयेत्यभिप्रायः । निश्वासमात्ररक्षितं निश्वासेनैव केवलेन रक्षितं, न तु रणरणकवशात् पोषणसंस्कारादिना संभावितम् ।

**विदूषकः**—(क) भो चारुदत्त! राअसाळो सण्ठाणो सवट्टेण सीसेण अणुवन्दिअ विण्णवेदि—णाडअइत्थिआ वसन्तसेणिआ णाम गणिआदारिआ अह्मेहि बळक्कारेण णीअमाणा महन्तेण सुवण्णाळङ्कारेण तुह्माणं गेहं पविट्ठा। सा सुवे णिय्याअइदव्वत्ति।

**गणिका**—(ख) हं बळक्कारेण णीअमाणत्ति णं भणादि। भोदु, अअं पत्तकाळो। (प्रकाशम्) अय्य! सूरणागदह्मि।

**नायकः**—न भेतव्यं न भेतव्यम्। किं वसन्तसेनैषा।

**विदूषकः**—(ग) अविहा वसन्तसेणा। (क इव?)। (अपवार्य) भो चारुदत्त! वसन्तसेणा खु इअं, जा भवदा कामदेवाणुआणप्पहुदि णअणमत्तसंत्थुदा सण्णिहिदमणोभवेण हिअएण उव्वहीअदि। ता पेक्खदु इअं।

**नायकः**—वयस्य! पश्याम्येनां,

---

(क) भोः चारुदत्त! राजस्यालः संस्थानः सपट्टेन शीर्षेणानुवन्द्य विज्ञापयति—नाटकस्त्री वसन्तसेना नाम गणिकादारिकास्माभिर्बलात्कारेण नीयमाना महता सुवर्णालङ्कारेण युष्माकं गेहं प्रविष्टा। सा श्वो निर्यातयितव्येति।

(ख) हं बलात्कारेण नीयमानेति ननु भणति। भवतु, अयं प्राप्तकालः। आर्य! शरणागतास्मि।

(ग) अविहा वसन्तसेना। भोः चारुदत्त! वसन्तसेना खल्वियं, या भवता कामदेवानुयानप्रभृति नयनमात्रसंस्तुता सन्निहितमनोभवेन हृदयेनोदुह्यते। तत् पश्यत्विमाम्।

---

शकारसन्देशं निवेदयति—भो इत्यादि।

गणिका मनसि चिन्तयति—हमित्यादि। हंशब्दोऽसम्मतौ। शरणागता शरणं प्राप्ता।

अभयदानेन संभावयति—नेत्यादि।

अविहेत्यादि। अविहाशब्दः खेदे। स च वसन्तसेनाप्रार्थिसंस्थानप्रकोपनशङ्कानिमित्तः। अपवार्य वसन्तसेनायाः परावृत्य, रहसि चारुदत्तं वक्तीत्यर्थः।

अपवार्यैवाह—वयस्येत्यादि। श्लोकान्वयि।

यत्र मे पतितः कामः क्षीणे विभवसञ्चये ।
रोषः कुपुरुषस्येव स्वाङ्गेष्वेवावसीदति ॥ २८ ॥

**गणिका** — (क) अदिण्णभूमिप्पवेसपधरिसणेण अवरद्धा अहं अय्यं सीसेण पसादेमि ।

**नायकः** — यद्येवमहमपि तावदविज्ञातप्रयुक्तेन प्रेष्यसमुदाचारेण सापराधो भवतीं प्रसादयामि ।

**विदूषकः** — (ख) भो ! विंवहन्ता इव सअडिअं दुव्विणीदबळीवद्दा अण्णोण्णं सङ्किळेसन्ति । अहं दाणि कं पसादेमि । भोदु, दाणि रदणिअं पसादेमि । रदणिए ! पसीददु पसीददु होदी ।

**नायकः** — भवति ! परवानस्मि । किमनुतिष्ठति स्नेहः ।

---

(क) अदत्तभूमिप्रवेशप्रधर्षणेनापराद्धाहमार्यं शीर्षेण प्रसादयामि ।

(ख) भोः ! विवहन्ताविव शकटिकां दुर्विनीतबलीवर्दावन्योन्यं क्लेशयतः । अहमिदानीं कं प्रसादयामि । भवतु, इदानीं रदनिकां प्रसादयामि । रदनिके ! प्रसीदतु प्रसीदतु भवती ।

---

एनां विशिनष्टि — यत्रेत्यादि । विभवसञ्चयोपचरणीयायां यस्यां विषये विभवक्षयानन्तरमुत्पन्नो मम कामः शक्तिहीनपुरुषकोप इव स्वाङ्गेष्वेव जीर्यति, न तु बहिराविर्भूय फलं प्राप्नोतीति श्लोकार्थः । विभवविस्तर इति पाठे विभवकथाप्रथन इत्यर्थः ॥ २८ ॥

अदिण्णेत्यादि । अदत्तभूमिप्रवेशधर्षणेनापराद्धा अननुज्ञातप्रवेशायां भूमौ भवद्गृहाभ्यन्तरप्रदेशे यः प्रवेशस्तद्रूपेण धर्षणेन समुदाचारव्यतिक्रमेण हेतुना अपराद्धा सापराधा । शीर्षेण प्रसादयामि शिरसा प्रणम्य क्षमापयामि ।

यदीत्यादि । एवं यदि त्वं चेदात्मानमपराधिनं समर्थयन्ती मां प्रसादयसि । प्रेष्यसमुदाचारेण प्रेष्यजनोचितेन प्रावारकनयनचोदनालक्षणेन कर्मणा ।

गणिकानायकयोः परस्परप्रसादनस्पर्धामुपलभ्य हास्यवचनमाह — भो इत्यादि । शकटिकाम् अल्पं शकटम् । विवहन्तौ कर्षन्तौ । दुर्विनीतबलीवर्दाविव अदान्तवृषभाविव । अन्योन्यं संक्लेशयतः संघर्षयतः, अर्थाद् भवन्तौ ।

भवतीत्यादि । परवान् पराधीनः त्वदधीन इत्यर्थः । स्नेहः त्वद्विषयो मद्गतः, किम् अनुतिष्ठति अनुष्ठास्यति । यदनुष्ठेयमादेक्ष्यसि तदनुष्ठास्यतीत्यर्थः ।

**गणिका** — (आत्मगतम्) (क) महुरं खु इच्छिदव्वं । अदक्खिणं खु पठमदंसणे जइच्छागदाए इह वसिदुं । ता एवं करिस्सं । (प्रकाशम्) जइ मे अय्यो पसण्णो, अअं मे अळङ्कारो इह एव्व चिट्ठदु । अळङ्कारणिमित्तं पावा मं अणुसरन्ति । अहं पि अय्येण रक्खिदा गेहं गन्तुमिच्छामि ।

**नायकः** — अन्वर्थमुपदिशति । मैत्रेय ! गृह्यताम् ।

**विदूषकः** — (ख) ण मे स्रद्धा ।

**नायकः** — मूर्ख ! गृह्यताम् ।

**विदूषकः** — (ग) जं भवं आणवेदि । आणेदु भोदी ।

(गणिका विमुच्यालङ्कारं प्रयच्छति । )

---

(क) मधुरं खल्वेष्टव्यम् । अदक्षिणं खलु प्रथमदर्शने यदृच्छागतयेह वस्तुम् । तदेवं करिष्यामि । यदि मे आर्यः प्रसन्नः, अयं मेऽलङ्कार इहैव तिष्ठतु । अलङ्कारनिमित्तं पापा मामनुसरन्ति । अहमप्यार्येण रक्षिता गेहं गन्तुमिच्छामि ।

(ख) न मे श्रद्धा ।

(ग) यद् भवानाज्ञापयति । आनयतु भवती ।

---

महुरमिति । मधुरं खलु प्रियं वस्तु खलु दयितपरिष्वङ्गादिरूपम्, एष्टव्यं संप्रति एषितुं योग्यम् । तथापि नेदानीं तदिष्यत इत्याह — यदृच्छागतया अर्थान्मया, प्रथमदर्शने, इह वस्तुं चारुदत्तगृहे रात्रिं नेतुम्, अदक्षिणं खलु अविदग्धमेव, अयुक्तमेव । द्वितीयदर्शने तु पूर्वरूढपरिचयावष्टम्भेन वस्तुं युक्तमित्यभिप्रायः । तस्मात्, एवं वक्ष्यमाणरीत्या, करिष्यामि । जइ इत्यादि । पापौ विटशकारौ । आर्येण रक्षिता गेहं गन्तुमिच्छामि स्वगृहं गच्छन्त्या मम सहायः कश्चिद् भवता प्रेषणीय इत्यर्थः ।

अन्वर्थमित्यादि । अन्वर्थम् उपदिशति न्याय्यं बोधयति । गृह्यताम्, अर्थादलङ्कारः ।

णेत्यादयस्त्रयः संवादाः ।

विदूषकः — (गृहीत्वा) (क) रदणिए! गह्ण एदं सुवण्णालङ्कारं तुवं। सट्ठीए सत्तमीए अ धारेहि। अहं अट्ठमीए अणद्धाए धारइस्सं।

चेटी — (विहस्य) (ख) सत्थं वक्खाणअन्तस्स भट्टिपुत्तस्स तदाणिं अवसरो होदि। आणेदु अय्यो। (गृहीत्वा निष्क्रान्ता।)

नायकः — कोऽत्र भो!। दीपिका तावत्।

विदूषकः — (ग) भोः! दीविआ गणिका विअ णिस्सिणेहा संवुत्ता।

नायकः — कृतं दीपिकया। (विलोक्य) उदितो भगवान् सर्वजनसामान्यप्रदीपश्चन्द्रः। अतः खलु,

उदयति हि शशाङ्कः क्लिन्नखर्जूरपाण्डु-
युवतिजनसहायो राजमार्गप्रदीपः।

---

(क) रदनिके! गृहाणैतं सुवर्णालङ्कारं त्वम्। षष्ठ्यां सप्तम्यां च धारय। अहमष्टम्यामनध्याये धारयिष्यामि।

(ख) शास्त्रं व्याचक्षाणस्य भर्तृपुत्रस्य तदानीमवसरो भवति। आनयत्वार्यः।

(ग) भोः! दीपिका गणिकेव निःस्नेहा संवृत्ता।

---

रदणिए इत्यादि। षष्ठ्यां सप्तम्यां च तिथौ, धारय स्ववशे निधाय रक्ष। अष्टम्यामनध्याये अष्टमीरूपेऽनध्यायदिवसे।

स्वाध्यायतिथ्योरलङ्काररक्षणानवसरमनध्यायतिथौ तदवसरं चात्मनोऽनूचानस्येव सूचयन्तमुपहसन्ती वक्ति — सत्थमित्यादि।

क इत्यादि। दीपिका तावत्, आनीयतामिति शेषः।

भो इत्यादि। निःस्नेहा निस्तैला निरनुरागा च।

कृतमित्यादि। अतः खलु अत्र खलु।

उदयतीत्यादि। क्लिन्नखर्जूरपाण्डुः क्लिन्नं क्लेदयुक्तं यत् खर्जूरं पाण्डुसंज्ञद्रुमफलं तद्वत् पाण्डुः धवलः। युवतिजनसहायः युवतिजनस्य प्रियमभिसरतः सहायो

तिमिरनिचयमध्ये रश्मयो यस्य गौरा
हृतजल इव पङ्के क्षीरधाराः पतन्ति ॥ २९ ॥

भवति ! राजमार्गे निष्क्रमणः क्रियताम् । सखे ! अनुगच्छात्रभवतीम् ।

**विदूषकः** — (क) जं भवं आणवेदि । एदु एदु भोदी ।

(निष्क्रान्ताः सर्वे ।)

प्रथमोऽङ्कः ।

---

## अथ द्वितीयोऽङ्कः ।

(ततः प्रविशति गणिका चेटी च ।)

**गणिका** — (ख) तदो तदो ।

---

(क) यद् भवानाज्ञापयति । एत्वेतु भवती ।
(ख) ततस्ततः ।

---

मार्गप्रकाशनात् । तिमिरनिचयमध्ये घनीभूतान्धकारमध्ये । हृतजले पङ्के निस्सारितजले कर्दमे ॥ २९ ॥

भवतीत्यादि । निष्क्रमणः निर्गमनम् । इह पुस्त्वं 'कोऽसावनुमानः', 'इतिकरणः क्रियते' इति महाभाष्यप्रयोगवत् । निष्क्रमणमिति वा पाठः कल्प्यः ।

जमित्यादि ।

निष्क्रान्ताः सर्वे इति प्रथमाङ्कपरिसमाप्तिः ॥

इति प्रथमोऽङ्कः ॥

---

## अथ द्वितीयोऽङ्कः ॥

पूर्वाङ्कान्ते वसन्तसेनाया नायकगृहात् स्वगृहं प्रति प्रस्थानमुक्तम् । तदर्थविच्छेदेन द्वितीयाङ्कादौ तां गृहं प्राप्तां कामयमानावस्थां चेटीसहितां प्रवेशयति—तत इत्यादि ।

अप्रस्तुतायामेव कथायां प्रस्तुतकथाशेषशुश्रूषुरिव चारुदत्तचिन्ताप्रमुषितहृदयतया पृच्छति — तदो तदो इति । उक्त[illegible] ब्रूहीत्यर्थः ।

चेटी — (क) अम्महे ण किञ्चि मए भणिदं । किं तदो तदो त्ति ।

गणिका — (ख) हञ्जे ! किं मए मन्तिदं ।

चेटी — (ग) अज्जुए ! सिणेहो पुच्छदि, ण पुरोभा(अ?इ)दाए । किं चिन्तीअदि ।

गणिका — (घ) हञ्जे ! तुमं दाव किं त्ति तक्केसि ।

चेटी — (ङ) अप्पओअणदाए गणिआभावस्स अज्जुआ कं पि कामेदि त्ति तक्केमि ।

---

(क) अम्महे न किञ्चिन्मया भणितम् । किं ततस्तत इति ।

(ख) हञ्जे ! किं मया मन्त्रितम् ।

(ग) अज्जुके ! स्नेहः पृच्छति, न पुरोभागितया । किं चिन्त्यते ।

(घ) हञ्जे ! त्वं तावत् किमिति तर्कयसि ।

(ङ) अप्रयोजनतया गणिकाभावस्याज्जुका कमपि कामयत इति तर्कयामि ।

---

अम्महे इत्यादि । भणितं कथयितुमारब्धम् । ततस्तत इति किं ततस्तत इति केन कारणेन ब्रूष इत्यर्थः ।

हञ्जे इत्यादि । हञ्जे इति चेटीं प्रति आमन्त्रणसमुदाचारः । मन्त्रितं भणितम् ।

अज्जुए इत्यादि । अज्जुकेति नाट्योक्तौ गणिकोच्यते । स्नेहः पृच्छतीति प्रक्रियायां स्नेहस्य स्वातन्त्र्यविवक्षणमतिशयद्योतनार्थम् । पुरोभागितया न दोषैकदृक्तया न, पृच्छामीत्यर्थगम्यम् । पुरोभाइदेति वा पाठः । किं चिन्त्यते चिन्ताविषयं ब्रूहीत्यर्थः ।

मया चिन्त्यमानं वस्तु कीदृशमिति त्वं मदीयाकारेङ्गितदर्शनेनाभ्यूहस इत्याह — हञ्जे तुममित्यादि ।

गणिकात्वप्रयोजनभूतमर्थार्जनमगणयित्वा कमपि कमनीयं युवानं कामयस इति तर्कयामीत्याह — अप्पओअणदाए इत्यादि । गणिकाभावस्य अप्रयोजनतया गणिकात्वस्य सम्बन्धि यत् प्रयोजनं वित्तार्जनलक्षणं तन्न विद्यतेऽपेक्षणीयतया यस्याः सा अप्रयोजना तस्या भावस्तत्ता तया ।

**गणिका** — (क) सुट्ठु तुए किदं। अवञ्चिदा दे दिट्ठी। ईदिसवण्णएव्येव।

**चेटी** — (ख) अणळंकिदं पि अज्जुअं मण्डिदं विअ पेक्खामि। कामो हि भअवं अणवगीदो ऊसुवो तरुणजणस्स।

**गणिका** — (ग) हदासे! उक्कण्ठिदव्वे का दे रदी।

**चेटी** — (घ) अज्जुए! इच्छामि पुच्छिदुं बहुमाणो विअ रमणीओ कोच्चि राअकुमारो।

**गणिका** — (ङ) रमिदुं इच्छामि, ण सेविदुं।

**चेटी** — (च) किण्णुखु विज्जाविसेसरमणीओ को(च्चि) बह्मणदारओ।

---

(क) सुष्ठु त्वया कृतम्। अवञ्चिता ते दृष्टिः। ईदृशवर्णैव।

(ख) अनलङ्कृतामप्यज्जुकां मण्डितामिव पश्यामि। कामो हि भगवाननवगीत उत्सवस्तरुणजनस्य।

(ग) हताशे! उत्कण्ठितव्ये का ते रतिः।

(घ) अज्जुके! इच्छामि प्रष्टुं बहुमान इव रमणीयः कश्चिद् राजकुमारः।

(ङ) रन्तुमिच्छामि, न सेवितुम्।

(च) किन्नुखलु विद्याविशेषरमणीयः कश्चिद् ब्राह्मणदारकः।

---

सुट्ठु इत्यादि। किदमित्यस्य स्थाने तक्किदमिति पाठः स्यात्। अवञ्चिता अविसंवादिनी। दृष्टिः आकारेक्षिका अभ्यूहो वा। ईदृशवर्णैव एवम्प्रकारैव अर्थादहम्।

अणळंकिदमित्यादि। अनलंकृतामित्यलङ्काराणां विटशकारभयाच्चारुदत्तगृहे निक्षेपाद् वर्जनमुक्तम्। कामः चित्तमाविष्टो मन्मथः। अनवगीतः अनिन्दितः। उत्सवः शोभाहेतुः।

हदासे इत्यादि। हताशे! वराके!, उत्कण्ठितव्ये प्राप्तव्ये इष्टवस्तुन्यप्राप्ते, ते का रतिः तव कः सन्तोषः, प्राप्ते हि तस्मिन् स युक्त इत्यभिप्रायः।

अज्जुए इत्यादि। बहुमान इव रमणीयः पूजाविशेष इव रतिकरः, कश्चिद्, राजकुमारः राजपुत्रः किं, काम्यत इति शेषः। इह प्रश्नकाकुः।

रमिदुमित्यादि। न सेवितुमिच्छामि रमणयोग्यो ममेप्सितो न तु सेवनयोग्यो राजकुमारः इत्यभिप्रायः।

किण्णुखु इत्यादि। ब्राह्मणदारकः ब्राह्मणपुत्रः।

गणिका— (क) अत्थि अदिबहुमदो विस्संभो । पूअणीओ खु सो जणो ।
चेटी — (ख) किण्णुहु वणिजदारओ कोच्चि आगन्तुओ ।
गणिका — (ग) उम्मत्तिए ! आसाच्छेदं उक्कण्ठन्ता का सहेदि ।
चेटी — (घ) किं ण सक्कं सोदुं । को अह्माणं मणोरहाउत्तो ।
गणिका — (ङ) किं तुवं कामदेवाणुयाणे ण आअदा सि ।
चेटी — (च) णं आअदह्मि ।

---

(क) अस्त्यतिबहुमतो विस्रम्भः । पूजनीयः खलु स जनः ।
(ख) किन्नुखलु वणिग्दारकः कश्चिदागन्तुकः ।
(ग) उन्मत्तिके ! आशाच्छेदमुत्कण्ठमाना का सहते ।
(घ) किं न शक्यं श्रोतुम् । कोऽस्माकं मनोरथावुत्तः ।
(ङ) किं त्वं कामदेवानुयाने नागतासि ।
(च) नन्वागतास्मि ।

---

अत्थीत्यादि । स जनः पूजनीयः खलु ब्राह्मणदारकः कामकलास्वविदग्धः पूजार्ह एव न तु रमणार्ह इत्यर्थः ।

किण्णुखु इत्यादि । आगन्तुकः वाणिज्यार्थं विदेशादागतः ।

उम्मत्तिए इत्यादि । उत्कण्ठमाना का आशाच्छेदं सहते, निरन्तरप्रियसंभोगकामा का नाम युवतिः वाणिज्यार्थविदेशचर्याभिरतवणिक्पुत्रपरिग्रहसुलभं पौनःपुनिकं [illegible] विच्छेदं मर्षयतीत्यर्थः । अत उत्कण्ठमानां मां प्रति वणिक्पुत्रस्य कामनाविषयत्वं यत् तर्कयसि सोऽयं ते चित्तविभ्रम इत्यभिप्रायेण संबोधयति— उन्मत्तिके इति ।

किंणेति । श्रोतुं न शक्यं किम् अमुको युवा कामनाविषय इत्ययमर्थो मया त्वन्मुखात् श्रुत्वावगन्तुं न शक्यः किं, यदि शक्यः कथ्यताम् । अस्माकं मनोरथावुत्तः मनोरथसिद्धो भगिनीपतिः, कः ।

किमित्यादि । कामदेवानुयाने कामदेवोत्सवानुयात्रायाम् । नागतासि किम् आगतया तु तात्कालिकमदीयदृष्टिरागाद्युपलम्भवशान्मनोरथावुत्तो विदितोऽभविष्यदित्यभिप्रायः ।

णमित्यादि । ननुशब्दः पृष्टप्रतिवचने ।

**गणिका** — (क) केण उदासीणं मन्तेसि ।

**चेटी** — (ख) भणादु भणादु अज्जुआ भणादु ।

**गणिका** — (ग) हञ्जे ! सुणाहि दाव । अत्थि सत्थवाहपुत्तो चारुदत्तो णाम ।

**चेटी** — (घ) जेण सरणागदा तुवं रक्खिदा ।

**गणिका** — (ङ) सो एव्व ।

**चेटी** — (च) हद्धि, दरिद्दो खु सो ।

**गणिका** (छ) अदो खु कामीअदि । अदिदरिद्दपुरुससत्ता गणिआ अवअणीआ होइ ।

---

(क) केनोदासीनं मन्त्रयसे ।

(ख) भणतु भणत्वज्जुका भणतु ।

(ग) हञ्जे ! शृणु तावत् । अस्ति सार्थवाहपुत्रश्चारुदत्तो नाम ।

(घ) येन शरणागता त्वं रक्षिता ।

(ङ) स एव ।

(च) हा धिक्, दरिद्रः खलु सः ।

(छ) अतः खलु काम्यते । अतिदरिद्रपुरुषसक्ता गणिका अवचनीया भवति ।

---

केणेति । केन उदासीनं मन्त्रयसे कस्मात् कारणादनागतासदृशं कथयसि मनोरथावृत्तः क इति ।

अन्यमनस्कया मया तत्कालसन्निहितयुवविशेषविषयत्वदीयदृष्टिचेष्टाद्यनभिलक्षणात् स न ज्ञात एवेत्यभिप्रायेणाह — **भणादु** इत्यादि ।

हञ्जे इत्यादयश्चत्वारः संवादाः ।

अदोखु इत्यादि । अतः खलु काम्यते दरिद्र इत्येतस्मात् कारणादेव मया सोऽभिलष्यते । अवचनीया भवति वचनीयं धनावेक्षिणीत्यपवादः तद्रहिता भवति । अर्थात् पुरुषपरिग्रहे केवलगुणसम्पदवेक्षिणीत्येवं श्लाघाभाजनं भवतीत्यभिप्रायः ।

**चेटी** — (क) अज्जुए ! उद्धूदपुप्फं सहआरं महुअराओ उवासन्ति ।

**गणिका** — (ख) हञ्जे ! एवं, उवासन्ति । दे महुअरा त्ति पुच्छीअन्ति ।

**चेटी** — (ग) किं, विहवमन्ददाए वेसवासप्पसङ्गकादरो दुक्खं त्ति जइ ण आअच्छे ।

**गणिका** — (घ) णं अहं तं कामेमि ।

**चेटी** — (ङ) जइ एत्तओ बहुमाणो, किं णाभिसरीअदि ।

---

(क) अज्जुके ! उद्धूतपुष्पं सहकारं मधुकरा उपासते ।

(ख) हञ्जे ! एवम्, उपासते । ते मधुकरा इति पृच्छयन्ते ।

(ग) किं, विभवमन्दतया वेशवासप्रसङ्गकातरो दुःखमिति यदि नागच्छेत् ।

(घ) नन्वहं तं कामये ।

(ङ) यद्येतावान् बहुमानः, किं नाभिस्रियते ।

---

गणिकाजनविरुद्धमाचरसीति द्योतयितुं गणिकाजनस्वभावमाह — अज्जुए इत्यादि । उद्धूतपुष्पम् उच्चलितकुसुमम् । इह भ्रमरवृत्तान्तस्य पुष्पवत्सहकारोपासनरूपस्योक्त्या तत्सरूपो धनवत्पुरुषाश्रयणलक्षणो गणिकाजनवृत्तान्तः प्रत्यायितः ।

हञ्जे इत्यादि । एवम् उपासते, उपासत इति त्वयोच्यमानमङ्गीकरोमीत्यर्थः । ते एवमुपासीना भ्रमराः, मधुकरा इति पृच्छयन्ते मधुहरणशीला इति पर्यनुयुज्यन्ते उपालभ्यन्त इति यावत् । धनहरणशीला इत्युपालभ्यन्त इति तु प्रकृतोऽर्थः प्रत्येतव्यः ।

किं विहवेति । विभवमन्दतया धनकृशतया हेतुना, वेशवासप्रसङ्गकातरः सन् वेश्यागृहवासप्रसक्तिभीतः सन्, दुःखमिति वेशवासो दुःखहेतुरिति मत्वा, यदि नागच्छेत्, अर्थाच्चारुदत्तः कर्ता, किं, करिष्यसीति शेषः ।

विभवमन्दतादुःखस्य स यथा न विषयो भवेत्, तथा तं कर्तुं शक्ष्यामीत्यभिप्रायेणाह—णमित्यादि । अहं, तं ननु कामये कामयमाना च कामसिद्ध्यनुकूलं कथं नाचरेयमिति वाक्यशेषः ।

जइ इत्यादि ।

**गणिका** — (क) ण हु ण गच्छामि । किन्तु सहसा अभिसरिदो पच्चुअआरदुल्ळभदाए पुणो मे दुल्ळभो भवे त्ति विळम्बेमि ।

**चेटी** — (ख) हं, किं एतण्णिमित्तं तहिं एव्व सो अळङ्कारो ट्ठाविदो।

**गणिका** — (ग) ईदिसं एव्व ।

(ततः प्रविशत्यपटाक्षेपेण संवाहकः ।)

**संवाहकः** — (घ) अय्ये ! सरणागदो ह्मि ।

**गणिका** — (ङ) अळं अय्यस्स सम्भमेण ।

**चेटी** — (च) हं, को दाणि एसो ।

---

(क) न खलु न गच्छामि । किन्तु सहसाभिसृतः प्रत्युपकारदुर्लभतया पुनर्मे दुर्लभो भवेदिति विलम्बे ।

(ख) हं, किमेतन्निमित्तं तत्रैव सोऽलङ्कारः स्थापितः ।

(ग) ईदृशमेव ।

(घ) आर्ये ! शरणागतोऽस्मि ।

(ङ) अलमार्यस्य सम्भ्रमेण ।

(च) हं, क इदानीमेषः ।

---

णहु इत्यादि । सहसा रभसेन पुनःसौलभ्यानुकूलसंविधानाकरणेनेत्यर्थः ।

हं किमित्यादि । एदण्णिमित्तम् एतदर्थं । तत्रैव चारुदत्त एव ।

तदुक्तमङ्गीकरोति — ईदृशमेवेति ।

तत इत्यादि । अस्मिन्नवसरे कस्यचिदसूचितस्यैव पात्रस्यात्ययिकस्वकार्यवशादकस्मात् प्रवेशमाह — तत इत्यादि । अपटाक्षेपेण अपटस्य काण्डपटस्य आक्षेपेण स्वयमेव नोदनेन । संवाहकः अङ्गमर्दनकलाजीवी ।

अय्ये इत्यादि । शरणागतः त्वमेव शरणमिति बुद्ध्या प्राप्तः ।

अळमित्यादि । सम्भ्रमेण आवेगेन ।

हमित्यादि । हंशब्दोऽसम्मतौ ।

गणिका — (क) उम्मत्तिए ! किं सरणाअदो पुच्छीअदि ।

चेटी — (ख) अविणाम साहसिओ भवे ।

गणिका — (ग) उम्मत्तिए ! गुणवन्तो रक्खिदव्वो होदि ।

संवाहकः — (घ) अय्ये ! णं भएण उवआरो विस्सारिदो, ण परिभवेण । पेक्खदु अय्या, भीदाह वा पधरिसिदाह वा आवण्णाह वा सुलभचारित्तवञ्चणाह वा अवराहेदुं समत्था होन्ति ।

गणिका — (ङ) भोदु भोदु । विस्सत्थो भोदु अय्यो । गणिआ खु अहं ।

---

(क) उन्मत्तिके ! किं शरणागतः पृच्छयते ।

(ख) अपिनाम साहसिको भवेत् ।

(ग) उन्मत्तिके ! गुणवान् रक्षितव्यो भवति ।

(घ) आर्ये ! ननु भयेनोपचारो विस्मृतः, न परिभवेन । पश्यत्वार्या, भीता वा प्रधर्षिता वा आपन्ना वा सुलभचारित्रवञ्चना वा अपराधयितुं समर्था भवन्ति ।

(ङ) भवतु भवतु । विश्वस्तो भवत्वार्यः । गणिका खल्वहम् ।

---

उम्मत्तिए इत्यादि । उन्मत्तिके इति सम्बोधनकुत्सा समुदाचारविपर्ययाचरणात् । शरणागतः किं पृच्छयते यो वा को वा भवतु शरणागतः, स न प्रष्टव्य इत्यर्थः ।

अवीत्यादि । साहसिकः चौर्यादिवृत्तिः ।

उम्मत्तिए इत्यादि । गुणवान् रक्षितव्यो भवति, अयं साहसिको नवेति परीक्षणेन गुणमविज्ञाय नाहमेनं रक्षेयमित्यभिप्रायः ।

अय्ये इत्यादि । उपचारः स्वस्तिवचनादिः समुदाचारः । परिभवेन अवज्ञया । प्रधर्षिता अभिभूताः । आपन्ना आपदं प्राप्ताः । सुलभचारित्रवञ्चनाः सुलभशीलभ्रंशाः, प्रलोभनादिरूपेणाल्पेनापि कारणेन ये शीलाद् भ्रश्यन्ति त इत्यर्थः । समर्थाः अर्हाः ।

भोदु इत्यादि । विश्वस्तः मयि शङ्कारहितः, शङ्का च उपचाराकरणप्रयुक्तवैमनस्यविषया । कुलवधूं प्रत्यनुपचारोऽपराधाय, न तु गणिकां मां प्रतीत्यभिप्रेत्याह — अहं गणिका खल्विति ।

**संवाहकः** —(क) अभिजणेण, ण सीळेण।
**गणिका** —(ख) हञ्जे! एवं विअ।
**चेटी** —(ग) अज्जुआ अय्यं पुच्छदि, कुदो अय्यस्स भअं ति।
**संवाहकः** —(घ) अय्ये! धणिआदो।
**गणिका** —(ङ) जइ एवं, आसणं देदु अय्यस्स।
**चेटी** —(च) तह। (आसनं ददाति।)
**गणिका** —(छ) उवविसदु अय्यो।
**संवाहकः** —(ज) (स्वगतम्) पूआविसेसेण जाणामि कय्यं ति। (उपविशति।)

---

(क) अभिजनेन, न शीलेन।
(ख) हञ्जे! एवमिव।
(ग) अज्जुकार्यं पृच्छति, कुत आर्यस्य भयमिति।
(घ) आर्ये! धनिकात्।
(ङ) यद्येवम्, आसनं दीयतामार्यस्य।
(च) तथा।
(छ) उपविशत्वार्यः।
(ज) पूजाविशेषेण जानामि कार्यमिति।

---

अभिजणेणेति। अभिजनेन जन्मना, गणिका, शीलेन सद्वृत्तेन न गणिका।

अनेन प्रकारेण पृच्छेति चेटीं नियुङ्क्ते—हञ्जे इत्यादि। कुतः कस्य सकाशात्।

अय्ये इत्यादि। धनिकाद् धनिको द्यूतविजयी तत्सकाशाद्, भयं मां जितधनानर्पयितारं रोत्स्यतीति भीतिः।

जइ इत्यादयस्त्रयः संवादाः।

पूआ इत्यादि। पूजाविशेषेण आसनदानरूपेण हेतुना, कार्यमिति जानामि धनिकोपद्रवपरिहारलक्षणं मदीप्सितमनया सम्पादयितुं शक्यमित्यनुमिनोमीत्यर्थः।

**गणिका** — (क) हञ्जे ! एव्वं विअ ।

**चेटी** — (ख) अज्जुए ! तह । अय्य ! राअमग्गे विस्सत्थसम्पादं अय्यं कादुं इच्छदि अज्जुआ । कस्स किं कत्तव्वं ।

**संवाहकः** — (ग) सुणादु अय्या ।

**गणिका** — (घ) अवहिदह्मि ।

**संवाहकः** — (ङ) पाडळिपुत्तं मे जम्मभूमी । पकिदीए वणिजओ अहं । तदो भाअधेअपरिवुत्तदाए दसाए संवाहअवुत्तिं उवजीवामि ।

**गणिका** — (च) संवाहओ अय्यो । सुउमारा कळा सिक्खिदा अय्येण ।

**संवाहकः** — (छ) कळेत्ति सिक्खिदा । आजीविअं दाणि संवुत्तम् ।

---

(क) हञ्जे ! एवमिव ।

(ख) अज्जुके ! तथा । आर्य ! राजमार्गे विश्वस्तसम्पातमार्यं कर्तुमिच्छत्यज्जुका । कस्य किं कर्तव्यम् ।

(ग) शृणोत्वार्या ।

(घ) अवहितास्मि ।

(ङ) पाटलिपुत्रं मे जन्मभूमिः । प्रकृत्या वणिगहम् । ततो भागधेयपरिवृत्ततया दशया संवाहकवृत्तिमुपजीवामि ।

(च) संवाहक आर्यः । सुकुमारा कला शिक्षितार्येण ।

(छ) कलेति शिक्षिता । आजीवितमिदानीं संवृत्तम् ।

---

पुनः प्रष्टुं नियुङ्क्ते — हञ्जे इत्यादि ।

अज्जुए इत्यादि । तथा तेन प्रकारेण, पृच्छामीति शेषः । विश्वस्तसम्पातं निश्शङ्कगतागतम् ।

सुणादु इत्यादी द्वौ संवादौ ।

पाडळीत्यादि । पाटलीपुत्रं मगधेषु नगरविशेषः । भागधेयपरिवृत्ततया भाग्यव्यत्ययेन ।

संवाहओ इत्यादि ।

कळेत्तीत्यादि । कलेति शिक्षिता चतुष्षष्टिकलान्तर्गतत्वात् कापि विदग्धप्रियेति बुद्ध्याभ्यस्ता । आजीवितं जीवनसाधनम् ।

**गणिका** —(क) णिव्वेदसूअअं विअ वअणं अय्यस्स । तदो तदो ।

**संवाहकः** —(ख) अज्जुए ! सो दाणि अहं आअन्तुआणं सुणिअ पुरुसविसेसकोदूहळेण आअदो ह्मि इमं उज्जअणिं ।

**गणिका** —(ग) तदो तदो ।

**संवाहकः** —(घ) तदो इह आअदमत्त एव्व कोच्चि सत्थवाहपुत्तो समासादिदो ।

**गणिका** —(ङ) केरिसो ?

**संवाहकः** —(च) आइदिमन्तो आवब्भमन्तो अणुच्छित्तो ळळिदो ळळिददाए अविह्मओ चउरो महुरो दक्खो सदक्खिण्णो अभिमदो आइदो

---

(क) निर्वेदसूचकमिव वचनमार्यस्य । ततस्ततः ।

(ख) अज्जुके ! स इदानीमहमागन्तुकानां श्रुत्वा पुरुषविशेषकौतूहलेनागतोऽस्मीमामुज्जयनीम् ।

(ग) ततस्ततः ।

(घ) तत इहागतमात्र एव कश्चित् सार्थवाहपुत्रः समासादितः ।

(ङ) कीदृशः ।

(च) आकृतिमान् अविभ्रमन् अनुत्सिक्तो ललितो ललिततयाविस्मयश्चतुरो मधुरो दक्षः सदाक्षिण्योऽभिमत आचितस्तुष्टो भवति । दत्त्वा न विकत्थते ।

---

णिव्वेदेत्यादि । निर्वेदसूचकमिव निर्वेदः खेदः आत्मावमाननं वा तत्सूचकमिव ।

अज्जुए इत्यादि । आगन्तुकानां श्रुत्वा संवाहनवृत्त्युपजीव्याः पुरुषविशेषा उज्जयिन्यां सुलभा इत्यागन्तुकमुखाद् विज्ञाय । संबन्धे षष्ठी । पुरुषविशेषकौतूहलेन सेव्यपुरुषविशेषलिप्सया ।

तदो तदो इत्यादि ।

तदो इहेत्यादि । इह उज्जयिन्याम् । आगतमात्र एव केवल एवागमने कृते, अकृतेऽपि यत्ने इत्यर्थः ।

केरिसो इति ।

आइदिमन्तो इत्यादि । आकृतिमान् प्रशस्ताकारः । अविभ्रमन् वस्तुयाथात्म्याभिज्ञः । अनुत्सिक्तः मर्यादानतिवर्ती । ललितः विलासी । आविस्मयः

तुट्टो होदि । दय्य ण विकत्थेदि । अप्पं वि (सुमरिदुं?) सुमरदि, बहुअं पि अवइदं विसुमरदि । अज्जुए! किं बहुणा, तस्स कुळवुत्तस्स गुणाणं चउब्भाअं पि सुदिग्घेण वि गिह्मदिअहेण वण्णिदुं ण सक्कं । किं बहुणा, दक्खिण्णदाए परकेरअं विअ अत्तणो सरीरं धारेदि ।

**गणिका** — (क) (अपवार्य) हञ्जे! कोणुखु सो अय्यचारुदत्तस्स गुणाणं अणुकरेदि ।

**चेटी** — (ख) मम वि कोदूहळं सोदुं । कोणुहु उज्जअणिं अत्तणो गुणेहि मण्डेदि ।

**गणिका** — (ग) तदो तदो ।

---

अल्पमपि (सुमरिदुं?) स्मरति, बहुकमप्यपकृतं विस्मरति । अज्जुके! किं बहुना, तस्य कुलपुत्रस्य गुणानां चतुर्भागमपि सुदीर्घेणापि ग्रीष्मदिवसेन वर्णयितुं न शक्यम् । किं बहुना, दक्षिणतया परकीयमिवात्मनः शरीरं धारयति ।

(क) हञ्जे! कोनुखलु स आर्यचारुदत्तस्य गुणानामनुकरोति ।

(ख) ममापि कौतूहलं श्रोतुम् । कोनुखलूज्जयनीमात्मनो गुणैर्मण्डयति ।

(ग) ततस्ततः ।

---

विगर्वः । चतुरः धीमान् । मधुरः सुन्दरः । दक्षः शिक्षितः । सदाक्षिण्यः दाक्षिण्यं परच्छन्दानुवर्तित्वं तद्युक्तः । अभिमतः सर्वप्रियः । आचितः छन्नः गूढगुणः । तुष्टः तृप्तः । न विकत्थते नात्मानं श्लाघते । अल्पमपि स्मरति अर्थादुपकृतम् । बह्वपि अपकृतम् अपकारं, विस्मरति । गुणानां चतुर्भागमपि चतुर्थांशमपि । दक्षिणतया परच्छन्दानुवर्तितया । परकीयमिव अन्यजनयथेच्छोपयोगप्रवणतयान्यसम्बन्धीव ।

अपवार्याह — हञ्जे कोणुखु इत्यादि । गुणानामिति सम्बन्धसामान्ये षष्ठी, गुणानित्यर्थः ।

मम वीत्यादि । मण्डयति भूषयति ।

तदो इति ।

संवाहकः—(क) तदो तस्स गुणविक्किणिदसरीरो विस्सरिदकळत्तो उवजीविओ संवुत्तो ।

गणिका—(ख) किं सो दरिद्दो ।

संवाहकः—(ग) कहं अणाचिक्खिदे अय्या जाणादि ।

गणिका—(घ) एअस्सिं दुळ्ळहो गुणविभवो त्ति । तदो तदो ।

चेटी—(ङ) को णाम सो अय्यो ।

संवाहकः—(च) अय्यचारुदत्तो णाम ।

गणिका—(छ) जुज्जइ । तदो तदो ।

संवाहकः—(ज) तदो सो विभवमन्ददाए अस्साहीणपरिजणो विसज्जिअकुडुम्बभरणो चारित्तमत्तावसेसो सत्थवाहकुळे पडिवसदि । अहं

---

(क) ततस्तस्य गुणविक्रीतशरीरो विस्मृतकलत्र उपजीवी संवृत्तः ।

(ख) किं स दरिद्रः ।

(ग) कथमनाख्यात आर्या जानाति ।

(घ) एकस्मिन् दुर्लभो गुणविभव इति । ततस्ततः ।

(ङ) को नाम स आर्यः ।

(च) आर्यचारुदत्तो नाम ।

(छ) युज्यते । ततस्ततः ।

(ज) ततः स विभवमन्दतयास्वाधीनपरिजनो विसर्जितकुडुम्बभरणश्चारित्र-

---

तदोतस्स इत्यादि । गुणविक्रीतशरीरः गुणैस्तदीयैर्विक्रीतं तदायत्तीकृतं शरीरं यस्य तथाभूतः । उपजीवी भृत्यः ।

किमित्यादि ।

कहमित्यादि । अनाख्याते स दरिद्र इत्यकथितेऽपीत्यर्थः । आर्या कथं जानाति स दरिद्र इति कथं बुध्यते ।

एकस्मिन् पुरुषे सर्वगुणसम्पद् दुर्लभेत्यनेन कारणेन धनहीनता तस्योत्प्रेक्षितेत्याह—एकस्मिन्नित्यादि ।

को णामेत्यादयस्त्रयः संवादाः ।

तदो सो इत्यादि । विभवमन्दतया विभवाल्पतया । चारित्रमात्रावशेषः स्व-

वि तेण अय्येण अब्भणुञ्ञादो—अण्णं उवचिट्ठदु त्ति । कहं अण्णं एरिसं मणुस्सरअणं लभेअन्ति, कहं च तस्स कोमळललिदमहुरसरीरप्परिसकिदत्थं मे हत्थं साहारणसरीरसम्मद्देण सोअणीअं करिस्सं ति जादणिव्वेदो दड्ढ-सरीररक्खणत्थं जूदोवजीवी संवुत्तो ।

(गणिका सहर्षबाष्पं चेटीमवलोकयति ।)

**चेटी** — (क) तदो तदो ।

**संवाहकः** — (ख) तदो बहूणि दिणाणि मए पराइदेण पुरुसेण कदाइ अहं पि दहसु सुवण्णेसु पराइदो ह्मि ।

---

मात्रावशेषः सार्थवाहकुले प्रतिवसति । अहमपि तेनार्येणाभ्युनुज्ञातोऽन्यमुपति-ष्ठतामिति । कथमन्यमीदृशं मनुष्यरत्नं लभेयेति, कथं च तस्य कोमलललित-मधुरशरीरस्पर्शकृतार्थं मे हस्तं साधारणशरीरसंमर्देन शोचनीयं करिष्यामीति जातनिर्वेदो दग्धशरीररक्षणार्थं द्यूतोपजीवी संवृत्तः ।

(क) ततस्ततः ।

(ख) ततो बहूनि दिनानि मया पराजितेन पुरुषेण कदाचिदहमपि दशसु सुवर्णेषु पराजितोऽस्मि ।

---

शीलैकशेषः । सार्थवाहकुले वणिग्गृहे । अन्यम् उपतिष्ठतामित्यभ्यनुज्ञातः पुरुषम-परं सेव्यत्वेन भवान् वृणीतामिति विसृष्टः । शोचनीयं करिष्यामि अधन्यमापाद-यिष्यामि । दग्धशरीररक्षणार्थं दग्धस्य उत्तमपुरुषदेहस्पर्शभाग्यक्षयेऽप्यपतितत्वात् कुत्सितस्य शरीरस्य रक्षणार्थम् । द्यूतोपजीवी अक्षदेवनवृत्तिः ।

गणिकेत्यादि । गुणश्लाघनीये हि स्थाने मम कामः पतित इति स्वाकूतं चेट्यवलोकनेन सूचितम् ।

तदो तदो इति ।

तदो इत्यादि । दिनानीत्यत्यन्तसंयोगे द्वितीया । स च पराजयक्रियाया बहुषु दिवसेष्वविच्छेदेनावृत्तिः । कदाचित् एकस्मिन् समये । दशसु सुवर्णेषु पराजि-तोऽस्मि दशसु स्वर्णकर्षेषु नाणकविशेषेषु पराजयं प्राप्तोऽस्मि । अतस्तस्मै दश सुवर्णान्यहं धारये इत्यभिप्रायः ।

**गणिका** — (क) तदो तदो ।

**संवाहकः** — (ख) तदो अज्ज वेसमग्गे जइच्छोवणदो समासादिदो ह्मि । तस्स भएण इह पविट्ठो । एवं अय्या जाणादु ।

**गणिका** — (आत्मगतम्) (ग) अहो अच्चाहिदं । एवं खु मण्णे वासपादपविणासेण पक्खिणो आहिण्डन्ति त्ति । (प्रकाशम्) एवं गदे अत्तकेरओ अय्यो । हळा ! एहि तं जणं विसज्जेहि ।

**चेटी** — (घ) तह । (निष्क्रान्ता ।)

**गणिका** — (ङ) ण खु अय्येण अत्थणिमित्ता चिन्ता कादव्वा । अय्यचारुदत्तो एव देदि त्ति अय्यो जाणादु ।

---

(क) ततस्ततः ।

(ख) ततोऽद्य वेशमार्गे यदृच्छोपनतः समासादितोऽस्मि । तस्य भयेनेह प्रविष्टः । एवमार्या जानातु ।

(ग) अहो अत्याहितम् । एवं खलु मन्ये वासपादपविनाशेन पक्षिण आहिण्डन्त इति । एवं गत आत्मीय आर्यः । हला ! एहि तं जनं विसर्जय ।

(घ) तथा ।

(ङ) न खल्वार्येणार्थनिमित्ता चिन्ता कर्तव्या । आर्यचारुदत्त एव ददातीत्यार्यो जानातु ।

---

तदो तदो इति ।

तदो अज्जेत्यादि । वेशमार्गे गणिकावाटवीथ्यां । यदृच्छोपनतः दैवादागतः । समासादितः अर्थाद् धनिकेन । तस्य धनिकस्य ।

अहो इत्यादि । अत्याहितं महाशोकस्थानम् । तद् विवृणोति — एवमित्यादिना । उपजीव्यचारुदत्तव्यसनेन तदुपजीविनो निराश्रया इत्थं पर्यटन्तीत्यस्मिन्नर्थे प्रस्तुते तत्सरूपोऽप्रस्तुतोऽर्थ इह वर्ण्यते । इत्थं भवद्वृत्तान्तावगमे सति, भवान् आत्मीयत्वेन मया गणित इत्याह — एवं गत इत्यादि । तं जनं संवाहकप्रतीक्षिणं वेशमार्गस्थितं धनिकं । विसर्जय संवाहकधार्यमाणधनार्पणेनापसारय ।

तहेति ।

णखु इत्यादि । अर्थनिमित्ता मद्दीयमानधनप्रत्यर्पणविषया । यदहं त्वदर्थे ददामि तत्र भवत्स्वामी चारुदत्त एव ददातीति मन्यस्वेत्याह — अय्येत्यादि ।

(प्रविश्य)

चेटी — (क) अज्जुए! विसज्जिदो सो जणो, परितुट्ठो गदो अ।

संवाहकः — (ख) अणुग्गहिदो ह्मि।

गणिका — (ग) गच्छदु अय्यो सुहिज्जणदंसणेण पीदिं णिव्वत्तेदुं।

संवाहकः — (घ) अज्ज एव कदाइ णिव्वेदेण पव्वजेअं। जइ इअं परिअणे सङ्क्रन्ता कळा भवे, तदो अय्याए अणुग्गहिदो भवेअं।

गणिका — (ङ) जस्स किदे इअं कळा सिक्खिदा, सो एव्व अय्येण उवचिट्ठिदव्वो भविस्सदि।

संवाहकः — (स्वगतम्) (च) णिउणं खु पच्चाचक्खिदो ह्मि। को हि णाम अप्पणा किदं पच्चुअआरेण विणासेदि। (प्रकाशम्) अय्ये!

---

(क) अज्जुके! विसर्जितः स जनः, परितुष्टो गतश्च।

(ख) अनुगृहीतोऽस्मि।

(ग) गच्छत्वार्यः सुहृज्जनदर्शनेन प्रीतिं निर्वर्तयितुम्।

(घ) अद्यैव कदाचिन्निर्वेदेन प्रव्रजेयम्। यदीयं परिजने सङ्क्रान्ता कला भवेत्, तत आर्ययानुगृहीतो भवेयम्।

(ङ) यस्य कृते इयं कला शिक्षिता, स एवार्येणोपस्थातव्यो भविष्यति।

(च) निपुणं खलु प्रत्याख्यातोऽस्मि। को हि नामात्मना कृतं प्रत्युपका-

---

अज्जुए इत्यादयस्त्रयः संवादाः।

अज्जेत्यादि। प्रव्रजेयं संन्यस्तो भवेयम्। संन्यासाङ्गीकारे सति स्वीयकलाया अपुनरुपादेयत्वेन वैयर्थ्यमाशङ्कमानो गणिकापरिजने तां सङ्क्रामयितुमनुज्ञानमर्थयते—जइ इत्यादि। सङ्क्रान्ता मत्सकाशात् प्रतिबिम्बिता। आर्यया, अनुगृहीतः स्वाभ्यस्तकलासार्थक्यसिद्ध्या कृतार्थितः।

संवाहकनिर्वेदकारणं प्रतिक्षिपन्ती वक्ति — जस्सेत्यादि। स एव आर्यचारुदत्त एव। उपस्थातव्यः पुनस्सेवनीयः।

णिउणमित्यादि। निपुणं यथा भवति तथा विदग्धवृत्त्येत्यर्थः। यदिदं स्वपरिजने

गच्छामि दाव अहं ।

**गणिका** —(क) गच्छदु अय्यो पुणो दंसणाअ ।

**संवाहकः** —(ख) अय्ये ! तह । (निष्क्रान्तः ।)

**गणिका** —(ग) हं, सद्दो विअ ।

(प्रविश्य)

**चेटः** —(घ) विच्छित्तिए ! विच्छित्तिए ! कहिं कहिं अज्जुआ ।

**गणिका** —(ङ) हञ्जे ! किं एदं ।

---

रेण विनाशयति । आर्ये ! गच्छामि तावदहम् ।

(क) गच्छत्वार्यः पुनर्दर्शनाय ।

(ख) आर्ये ! तथा ।

(ग) हं, शब्द इव ।

(घ) विच्छित्तिके ! विच्छित्तिके ! कुत्र कुत्राज्जुका ।

(ङ) हञ्जे ! किमेतत् ।

---

कलासङ्क्रान्तेर्मत्प्रार्थितायाः प्रत्याख्यानं तत् प्रत्युपकाररूपया तया स्वकृतोपकारस्य विनाशो मा भूदित्येतदर्थमित्याशयेनाह —कोहीत्यादि ।

**गच्छदु** इत्यादि ।

**अय्ये तहेति निष्क्रान्त** इति । एतावता संवाहकसंवादेन नायकनिष्ठकाम्यतानुकूलगुणगणप्रकाशनद्वारेण गणिकागता नायकविषया रतिः परिपोषिता वेदितव्या ।

अथ कविर्भूयोऽपि तत्परिपोषाय नायकगतयोर्गुणपक्षपातौदार्ययोरुदाहरणस्य विरहिणीजनकाम्यस्य नायकभोग्यवस्त्वधिगमस्य च सम्पत्त्यनुकूलं चेटसंवादं घटयिष्यन् चेटप्रवेशसूचनार्थं चेटवृत्तान्तसम्बद्धं कमपि शब्दं श्रूयमाणतयोपक्षेपयति—हामित्यादि । शब्दः गजग्रहीतपरिव्राजकवधाशङ्किजनहाहाकारध्वनिर्वक्ष्यमाणः ।

**विच्छित्तिए** इत्यादि ।

**हञ्जे** इत्यादि ।

चेटः — (क) हं, विप्पलद्धो ह्मि, वादाअणणिक्खामिदपुव्वकाआए ओणमिअपओहराए कण्णऊरस्स परिप्फन्दो अज्जुआए जेण ण दिट्ठो ।

गणिका — (ख) लहुजणस्स सुलहो विह्मओ । किं दे उस्सेअस्स कारणम् ।

चेटः — (ग) सुणादु अज्जुआ — एसो उग्गवेगेण ओगाहणणिव्वत्तिदेण पस्सुदमदगन्धं राअमग्गं करन्तेण मङ्गलहत्थिणा भद्दकपोदएण अणेअपुरुससङ्कुलेसु राअमग्गेसु उत्तरिअपडविराअदाए अहिअलक्खणीओ कोच्चि प्पव्वइदो समासादिदो ।

---

(क) हं, विप्रलब्धोऽस्मि, वातायननिष्क्रामितपूर्वकायययावनमितपयोधरया कर्णपूरस्य परिस्पन्दोऽज्जुकया येन न दृष्टः ।

(ख) लघुजनस्य सुलभो विस्मयः । किं ते उत्सेकस्य कारणम् ।

(ग) शृणोत्वज्जुका — एष उग्रवेगेनावगाहननिवर्तितेन प्रस्नुतमदगन्धं राजमार्गं कुर्वता मङ्गलहस्तिना भद्रकपोतकेनानेकपुरुषसङ्कुलेषु राजमार्गेषूत्तरीयपटविरागतयाधिकलक्षणीयः कश्चित् प्रव्रजितः समासादितः ।

---

हमित्यादि । विप्रलब्धः वञ्चितः अकृतार्थ इत्यर्थः । वातायननिष्क्रामितपूर्वकायया गवाक्षनिर्गमितदेहपूर्वार्धया । अवनमितपयोधरया प्रह्वीकृतकुचया । कर्णपूरस्येति स्वनामग्रहणं गर्वकृतम् । परिस्पन्दः कर्म, तच्च मत्तगजदन्तान्तरात् परिव्राजकस्य मोचनं वक्ष्यमाणं । येन कारणेन, तेन कारणेन विप्रलब्ध इति पूर्वेण सम्बन्धः ।

लहुइत्यादि । लघुजनस्य अल्पजनस्य । विस्मयो गर्वः । उत्सेकस्य गर्वस्य ।

सुणादु इत्यादि । एषः समीपवर्ती । उग्रवेगेन असह्यरंहसा । अवगाहननिवर्तितेन स्नानप्रत्यावर्तितेन । प्रस्नुतमदगन्धं प्रस्नुतमदस्य क्षरितमदजलस्य गन्धो यस्मिंस्तं तथाभूतम् । मङ्गलहस्तिना मङ्गलेपूत्सवादिकर्मसूपयुज्यमानेन गजेन । भद्रकश्चासौ पोतकश्च भद्रकपोतकः तेन, 'अङ्गप्रत्यङ्गभद्रत्वं संक्षिप्तं भद्रलक्षणम्' इति लक्षितो गजजातिविशेषो भद्रः भद्र एव भद्रकः, दशवर्षकः पोतः पोत एव पोतकः । उत्तरीयपटविरागतया उत्तरीयपटस्य विलक्षणारुण्यवत्तया । प्रव्रजितः परिव्राजकः । समासादितः ।

**गणिका** —(क) हं, तदो तदो ।

**चेटः** —(ख) तदो मए हत्थिहत्थामिद्दताडिअमाणो दन्तन्तरपरिवत्तमाणो हत्थिहत्थपडिदचरणो तदो हा हा विपाडिदो हा हा हदो त्ति जणवादे संवुत्ते तदो दिण्णकरप्पहारेण परिवत्तिदं हत्थिं करिअ मोइदो सो परिव्वाजो ।

**गणिका** —(ग) पिअं मे । तदो तदो ।

**चेटः** —(घ) तदो सव्वो जणो भणादि —अहो चेडस्स कम्म त्ति । ण उण कोच्चि किं पि इच्छइ दाउं । तदो अज्जुए ! केण वि कुळवुत्तेण उइदाणि आभरणट्ठाणाणि विळोइअ अङ्गुट्ठेणाणिअ वि उण अळद्धं पेक्खिअ दव्वं उवाळभिअ दिग्घं णिस्ससिअ एत्तओ मे विभवो त्ति करिअ

(क) हं, ततस्ततः ।

(ख) ततो मया हस्तिहस्तामर्दताड्यमानो दन्तान्तरपरिवर्तमानो हस्तिहस्तपतितचरणः ततो हा हा विपाटितो हा हा हत इति जनवादे संवृत्ते ततो दत्तकरप्रहारेण परिवर्तितं हस्तिनं कृत्वा मोचितः स परिव्राट् ।

(ग) प्रियं मे । ततस्ततः ।

(घ) ततः सर्वो जनो भणति—अहो चेटस्य कर्मेति । न पुनः कश्चित् किमपीच्छति दातुम् । ततोऽज्जुके ! केनापि कुलपुत्रेणोचितान्याभरणस्थानानि विलोक्याङ्गुष्ठेनानीयापि पुनरलब्धं प्रेक्ष्य दैवमुपालभ्य दीर्घं निःश्वस्यैताहमित्यादि ।

तदो इत्यादि । हस्तिहस्तामर्दताड्यमानः करिकराघातपीड्यमानः। दन्तान्तरपरिवर्तमानः दन्तयोर्मध्ये परिलुठन् । हस्तिहस्तपतितचरणः करिकरगृहीतपादः । विपाटितः विदलितः । संवृत्ते प्रवृत्ते सति । दत्तकरप्रहारेण दत्तः करे करेण वा प्रहारस्ताडनं येन तथाभूतेन । परिवर्तितं कृत्वा परिव्राजकपाटनसंरम्भान्निवर्तितं कृत्वा ।

पिअमित्यादि ।

तदो इत्यादि । सर्वो जनः हस्तिसंरम्भदिदृक्षामिलितः सकलो राजमार्गगतो जनः । तदो अज्जुए इति । ततः, हे अज्जुके !, केनापि कुलपुत्रेण प्रशस्तकुलप्रसू-

परिजणहत्थे अअं पावरओ पेसिदो ।

गणिका — (क) कोणुखु अय्यचारुदत्तस्स गुणाणं अणुकरेदि ।

चेटी — (ख) अज्जुए ! मम वि कोदूहळं अत्थि । कोणुखु एसो ।

गणिका — (ग) केण वि साहुणा पुरुसेण होदव्वं ।

चेटी — (घ) साहु पुच्छीअदु दाव ।

गणिका — (ङ) हञ्जे ! एकपुरुसपक्खवादिदा सव्वगुणाणं हन्ति ।

---

वान् मे विभव इति कृत्वा परिजनहस्तेऽयं प्रावारकः प्रेषितः ।

(क) कोनुखल्वार्यचारुदत्तस्य गुणाननुकरोति ।

(ख) अज्जुके ! ममापि कौतूहलमस्ति । कोनुखल्वेषः ।

(ग) केनापि साधुना पुरुषेण भवितव्यम् ।

(घ) साधु पृच्छयतां तावत् ।

(ङ) हञ्जे ! एकपुरुषपक्षपातिता सर्वगुणान् हन्ति ।

---

तेन । उचितानि भूषणामोकविमोकपरिचितानि, आभरणस्थानानि बाहुमणिबन्धकराङ्गुल्यादीनि, विलोक्य परितोषदानयोग्याभरणोत्तारणेच्छया दृष्ट्वा, पुनः पश्चाद् दर्शनेनाभरणशून्यतावगमानन्तरमित्यर्थः । अङ्गुष्ठेनानीयापि दृष्टयगोचरं कर्णाद्याभरणमङ्गुष्ठाङ्गुलिनाङ्गुल्यन्तरयुक्तेन स्थानादानेतुं यत्नं कृत्वापीत्यर्थः, अलब्धं प्रेक्ष्य अनुपलम्भादविद्यमानं ज्ञात्वा । अत्युत्कटपारितोषिकादित्साविवशचित्ततया चात्मनोऽवस्थाविशेषकृतं निराभरणत्वं विस्मृत्यायं नायकेन भूषणगवेषणायां संरम्भः कृत इति बोद्धव्यम् । आत्मावस्थाविशेषस्मरणानन्तरवृत्तमाह — दैवम् उपालभ्य विभवविघटकं दुर्भाग्यं निन्दित्वा, दीर्घं निश्वस्य पारितोषिकत्वयोग्यद्रव्यालाभचिन्तां दीर्घनिश्वासेन परिसमाप्येत्यभिप्रायः । मम विभवः देयसम्पद्, एतावानिति कृत्वा एतत्परिमाणो न त्वेतदधिकपरिमाणोऽस्तीति बुद्धिं कृत्वा, अयं, प्रावारकः उत्तरीयपटः, परिजनहस्ते प्रेषितः स्वपरिवारहस्ते दत्त्वा मह्यं दापितः न तु स्वहस्तेन मह्यं दत्त इत्यर्थः, स्वहस्तेन साक्षाददाने कारणं तु दातुर्देयं प्रति स्वहस्तदानानर्हत्वाभिमानस्तदत्यल्पत्वबुद्धिकृत इह गम्यः ।

कोणुखुअय्येत्यादयश्चत्वारः संवादाः ।

हञ्जे इति । एकपुरुषपक्षपातिता एकस्मिन् पुरुषविशेषे स्नेहः, सर्वगुणान्

**चेटी** — (क) भद्द ! से णाम तुवं जाणासि ।

**चेटः** — (ख) ण हु जाणामि ।

**गणिका** — (ग) अदिळहु तुए किदं ।

**चेटी** — (घ) जइ एवं, इह तुए (कोत्ति? किं ति) मन्तिदं ।

**चेटः** — (ङ) अहं एत्तअं तु जाणामि — भद्दओ अविह्मओ त्ति ।

**गणिका** — (च) एहि दाव तं पेक्खामो ।

---

(क) भद्र ! अस्य नाम त्वं जानासि ।

(ख) न खलु जानामि ।

(ग) अतिलघु त्वया कृतम् ।

(घ) यद्येवम्, इह त्वया किमिति मन्त्रितम् ।

(ङ) अहमेतावत् तु जानामि — भद्रकोऽविस्मय इति ।

(च) एहि तावत् तं पश्यामः ।

---

हन्ति सर्वेषु सकलेषु स्नेहविषयभूतपुरुषेतरेषु विद्यमानान् गुणान् न सहते, धर्मिविशेषनामानिर्देशेन कीर्त्यमानान् सद्गुणान् वस्तुतोऽन्यपुरुषगतानपि स्वविषयभूतैकपुरुषनिष्ठतयैव मन्यते न तु तदन्यपुरुषनिष्ठतया सम्भावयत्यपीत्यर्थः । एतेन, चेटोदाहृतानां सद्गुणानामनिर्दिष्टोऽपि नामतो धर्मिविशेषः स एव मत्प्रेमसर्वस्वभाजनमार्यचारुदत्तो न त्वन्य इति मे निश्चय इति गणिकया स्वाभिप्राय आविष्कृतः ।

भद्देत्यादि ।

णहु इत्यादि ।

अदिळहु इत्यादि । त्वया तन्नामविज्ञाने यत्नमकृतवता, अतिलघु कृतम् अत्यन्तमसाध्वाचरितम् ।

अज्ञातस्य पुरुषस्य गुणानां कीर्तनाद् वरमकीर्तनमित्यभिप्रायेणाह — जइ इत्यादि ।

अहमित्यादि । भद्रकः अङ्गप्रत्यङ्गसुभगः ।

एहीत्यादि । तं त्वयाङ्गुलिनिर्देशेन दर्शितमित्यर्थः ।

चेटः — (क) पेक्खदु पेक्खदु अज्जुआ । एसो गच्छइ ।

गणिका — (प्रासादाद् विलोक्य) (ख) हञ्जे ! एसो हि सो अय्यचारुदत्तो एव्व जण्णोववीदमत्तपावरओ गच्छइ । ता जाव दूरं गओ ण भविस्सदि एसो, पेक्खह्म दाव णं ।

(निष्क्रान्ताः सर्वे ।)

द्वितीयोऽङ्कः ।

---

(क) पश्यतु पश्यत्वज्जुका । एष गच्छति ।

(ख) हञ्जे ! एष हि स आर्यचारुदत्त एव यज्ञोपवीतमात्रप्रावारको गच्छति । तद् यावद् दूरं गतो न भविष्यत्येष, पश्यामस्तावदेनम् ।

---

पेक्खदु इत्यादि । द्विरुक्तिस्त्वरार्था ।

हञ्जे एसो इत्यादि । यज्ञोपवीतमात्रप्रावारकः ब्रह्मसूत्रमात्रोत्तरीयः उत्तरीयपटस्य पारितोषिकदाने विनियोगात् ।

निष्क्रान्ताः सर्वे इति द्वितीयाङ्कपरिसमाप्तिः ॥

# अथ तृतीयोऽङ्कः ।

( तत प्रविशति नायको विदूषकश्च । )

**नायकः** — वयस्य ! वीणा नामासमुद्रोत्थितं रत्नम् । कुतः,

उत्कण्ठितस्य हृदयानुगता सखीव
सङ्कीर्णदोषरहिता विषयेषु गोष्ठी ।
क्रीडारसेषु मदनव्यसनेषु कान्ता
स्त्रीणां तु कान्तरतिविघ्नकरी सपत्नी ॥ १ ॥

---

## अथ तृतीयोऽङ्कः ।

द्वितीयाङ्कान्ते य उत्तरीयपटापेतो राजमार्गे दिवा गच्छन्नुक्तः, तस्य नायकस्य नक्तं राजमार्गजनगतागतविरतिकालं यावत् क्वचित् सङ्गीतगोष्ठीमनुभूय स्वगृहमागच्छतो विदूषकसचिवस्य प्रवेशमाह — तत इत्यादि ।

वयस्येत्यादि । इह वीणायां रत्नत्वारोपे निमित्तं प्रशस्तवस्तुत्वरूपगुणसाम्यम् । तच्च समुद्रोत्पन्नत्वगुणमात्रविरहोक्त्या शेषगुणयोगाभ्यनुज्ञानद्वारेण दृढीकृतम् ।

प्राशस्त्यहेतून् गुणानाविष्कर्तुमाह — उत्कण्ठितस्येति । वीणा, उत्कण्ठितस्य 'सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते । तत्प्राप्तीच्छां ससङ्कल्पामुत्कण्ठां कवयो विदुः ॥' इत्युक्तलक्षणामुत्कण्ठां प्राप्तस्य जनस्य, हृदयानुगता मनोनुकूला, सखीव मनोविनोदहेतुत्वाद्, भवतीति शेषः । विषयेषु नित्यसेवितेष्वर्थेषु मध्ये, सङ्कीर्णदोषरहिता सङ्कीर्णे रागसङ्करस्तद्दोषशून्या विशुद्धरमिला गोष्ठी गानसदः गीतानन्दजनकत्वात्, भवति । मदनव्यसनेषु क्रीडारसेषु कामातिसेवालक्षणेषु क्रीडानुभवेषु, कान्ता तद्वद् रागवृद्धिकारिणी, भवति । कान्तवशीकरणे स्त्रीभ्योऽप्यधिकं वीणायाः सामर्थ्यमस्तीत्यभिप्रायेणाह — स्त्रीणां तु कान्तरतिविघ्नकरी कान्तस्य स्त्रीषु विषये या रतिरासक्तिः तस्या विहतिं कुर्वती स्वात्मन्यासक्त्युद्रेचनेन स्त्रीविषयामासक्तिं लघूकुर्वतीत्यर्थः, अत एव प्रतीपाचरणात् सपत्नी भवति ॥ १ ॥

**विदूषकः** — (क) भो वयस्स! को काळो किदपरिघोसणदाए णिस्सम्पादा राअमग्गा। कुक्कुरा वि ओसुत्ता। वअं णिद्दं ण ळभामो। अण्णं च दाणि अच्छरीअं। इमं हदवीणं ण रमामि। अहिअदिडत्थाणे विच्छिण्णतन्तिआ होदु।

**नायकः** — वयस्य! भावशाबलेन बहुशः खल्वद्य मधुरं गीतम्। न च भवान् रमते।

**विदूषकः** — (ख) अदो एव्व एदं अहं ण रमामि। महुरं पि बहु खादिअं अजिण्णं होइ।

**नायकः** — सर्वथा सुव्यक्तं गीतम्। कुतः,

रक्तं च तारमधुरं च समं स्फुटं च
भावार्पितं च न च साभिनयप्रयोगम्।

---

(क) भो वयस्य! कः कालः कृतपरिघोषणतया निःसम्पाता राजमार्गाः। कुक्कुरा अप्यवसुप्ताः। वयं निद्रां न लभामहे। अन्यच्चेदानीमाश्चर्यम्। इमां हतवीणां न रमे। अधिकदृढस्थाने विच्छिन्नतन्त्रीका भवतु।

(ख) अत एवैतामहं न रमे। मधुरमपि बहु खादितमजीर्णं भवति।

---

**भो वअस्स** इत्यादि। कः कालः अतीत इति शेषः बहुः कालोऽतीत इत्यर्थः। कृतपरिघोषणतया कृता परिघोषणा अकालजनसम्पातप्रतिषेधविषयो नगराधिकृतोद्घोषः येषु तेषां भावस्तत्ता तया। निस्सम्पाता जनगतागतशून्याः। कुक्कुराः श्वानः। अन्यच्च आश्चर्यं स्वापालम्भनमेकमाश्चर्यमुक्तं ततोऽपरं, तच्च वीणां प्रत्यरमणं वक्ष्यमाणम्। अरतिकरत्वादेव वीणां शपति — अहिएत्यादिना।

**वयस्येत्यादि**। भावशावलेन भावचित्रतया नानावृत्तियोगेनेत्यर्थः।

**अदो** इत्यादि। अत एव माधुर्यादेव। मधुरमपि गीतमतिसेवितत्वान्ममोद्वेजकं भवतीति विशेषं वक्तुं सामान्यन्यायमाह — महुरमित्यादि।

**सर्वथेत्यादि**। सुव्यक्तं सुष्ठु विशदम्।

**रक्तमिति**। रक्तं रागयुक्तं। तारमधुरम् अत्युच्चं च स्वादु च। समं वैषम्यरहितं। भावार्पितं भावेन रत्यादिना मनोगतेन अर्पितं प्रवर्तितम्, अथवा भावः

किं वा प्रशस्य विविधैर्बहु तत्तदुक्त्वा
भित्त्यन्तरं यदि भवेद् युवतीति विद्याम् ॥ २ ॥

**विदूषकः** —(ग) कामं पसंसेदु भवं । मम खु दाव गाअन्तो मणुस्सो इत्थिआ वि पठन्ती उभअं आदरं ण देदि । गाअन्तो दाव मणुस्सो रत्तसुमणावेट्ठिदो विअ पुरोहिदो दिढं ण सोहइ । इत्थिआ वि पठन्ती छिण्णणासिआ विअ धेणुआ अदिविरूवा होइ ।

**नायकः** —सखे ! उपारूढोऽर्धरात्रः । स्थिरतिमिरा राजमार्गाः । निस्सम्पातपुरुषत्वात् प्रसुप्तेवोज्जयनी प्रतिभाति । कुतः,

---

(क) कामं प्रशंसतु भवान् । मम खलु तावद् गायन् मनुष्यः स्त्र्यपि पठन्त्युभयमादरं न ददाति । गायंस्तावन्मनुष्यो रक्तसुमनोवेष्टित इव पुरोहितो दृढं न शोभते । स्त्र्यपि पठन्ती छिन्ननासिकेव धेनुरतिविरूपा भवति ।

---

अर्पितः श्रोतृभ्यः प्रकाशितो येन तत् तथाभूतम् । आहिताग्न्यादित्वात् परनिपातः । साभिनयप्रयोगं न च, अभिनयो नाट्यं तत्प्रयोगसहितं न भवति च, अभिनयप्रयोगसहितं हि गीतमभिनयद्वारेण तत्तद्भावाविष्करणक्षमं सामान्यतो दृष्टम्, इदं तु गीतमभिनयमन्तरेणापि तद्भावाविष्कारकं भवतीति अहो वैशिष्ट्यं गीतस्येत्यभिप्रायः । विविधैः नानाप्रकारैः, तत्तदुक्तैः तत्तद्वचनैः, बहु अधिकं, प्रशस्य किं श्लाघित्वा किं, मितेनैव वचनेन किञ्चिद् वच्मीत्यर्थः । तदेवाह—भित्त्यन्तरं भवेद् यदि श्रोतुर्मे गातुश्च मध्ये कुड्येन गातृपुरुषप्रत्यक्षविघटकेन व्यवधानं स्याच्चेत्, युवतीति विद्यां गातारं जनं युवतिरित्यनुमिनुयाम्, प्रकृते पुरुषगीते तादृशः स्वरसौकुमार्यमाधुर्ययोग उपलब्धो यादृशो यौवनयुक्तस्त्रीगीतसहजतया परिशीलित इत्यभिप्रायः । इह युवतीशब्दो युवतिशब्दात् 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीपि समर्थनीयः ॥ २ ॥

काममित्यादि । मनुष्यः पुरुषः पठन्ती गीतिरहितं केवलवाक्यजालमुच्चारयन्ती । आदरं न ददाति श्रोतुः प्रीतिं नोत्पादयति । रक्तसुमनोवेष्टितः रक्तपुष्पमाल्यवेष्टितः । धेनुरिव गौरिव ।

सखे इत्यादि । उपारूढः स्थितः ।

असौ हि दत्त्वा तिमिरावकाशमस्तं गतो ह्यष्टमपक्षचन्द्रः ।
तोयावगाढस्य वनद्विपस्य विषाणकोटीव निमज्जमाना ॥ ३ ॥

**विदूषकः** — (क) सुट्ठु भवं भणादि । अन्तद्धिअमाणचन्दलद्धावआसो ओदरदी विअ पासादादो अन्धआरो ।

**नायकः** — ( परिक्रम्य ) इदमस्मदीयं गृहम् । वर्धमानवक ! वर्धमानवक ।

**विदूषकः** — (ख) वद्धमाणवअ ! वद्धमाणवअ ! दुवारं अवावुद ।

( प्रविश्य )

**चेटः** — (ग) अम्मो अय्यमेत्तेओ ।

**नायकः** — वर्धमानवक !

**चेटः** — (घ) अम्मो भट्टिदारओ । भट्टिदारअ ! वन्दामि ।

---

(क) सुष्ठु भवान् भणति । अन्तर्दधानचन्द्रलब्धावकाशोऽवतरतीव प्रासादादन्धकारः ।

(ख) वर्धमानवक ! वर्धमानवक ! द्वारमपावृणु ।

(ग) अम्भो आर्यमैत्रेयः ।

(घ) अम्मो भर्तृदारकः । भर्तृदारक ! वन्दे ।

---

असावित्यादि । तिमिरावकाशं तमःप्रसरणरन्ध्रम् । अष्टमपक्षचन्द्रः अष्टमोऽर्धमासचन्द्रः शुक्लाष्टमीचन्द्र इत्यर्थः । तोयावगाढस्य वनद्विपस्य निमज्जमाना विषाणकोटीव जलावतीर्णस्यारण्यगजस्य जलमज्जनशीलं दन्ताग्रमिव, भवतीति शेषः । तमसि सर्वतो विसृत्वरेऽष्टमीचन्द्रस्यास्तमयोऽयं वनद्विपे जलनिमग्नशरीरे स्थिते तद्दन्तकोटेर्जले निमज्जनस्य सादृश्यं भजत इत्युपमात्रालङ्कारः । निमज्जमानेत्यत्र ताच्छील्ये चानश् ॥ ३ ॥

सुट्ठु इत्यादि । अन्तर्दधानचन्द्रलब्धावकाशः अन्तर्दधानेन अस्तं गच्छता चन्द्रेण हेतुना लब्धावकाशः प्राप्तास्पदः । प्रासादाद् देवगृहात् ।

इदमित्यादि । स्वगृहद्वारमागतः स्वप्रत्यागमनप्रतीक्षिणं चेटं नामग्रहणेनाह्वयति—वर्धमानवकेति ।

वद्धमाणवअ इत्यादयः सप्त संवादाः ।

**नायकः**—पादोदकमानय ।

**चेटः**—(परिक्रम्य) (क) इदं पादोदअं । (नायकस्य पादौ प्रक्षालयति ।)

**विदूषकः**—(ख) वड्ढमाणवअ ! मम वि पादं पक्खाळेहि ।

**चेटः**—(ग) सुहौदेसु पादेसु भूमीए पळोट्ठिदव्वं । उदअं विणासेहि । अहव आणेहि । पक्खाळइस्सं । (नाट्येन विदूषकस्य पादौ प्रक्षालयति ।)

**विदूषकः**—(घ) ण केवळं दासीएपुत्तेण पादा धोदा, मुहं वि धादे ।

**नायकः**—वयस्य !

इयं हि निद्रा नयनावलम्बिनी ललाटदेशादुपसर्पतीव माम् ।
अदृश्यमाना चपला जरेव या मनुष्यवीर्यं परिभूय वर्धते ॥ ४ ॥

मैत्रेय ! सुप्यताम् ।

(निष्क्रान्तश्चेटः ।)

---

(क) इदं पादोदकम् ।

(ख) वर्धमानवक ! ममापि पादं प्रक्षालय ।

(ग) सुधौतयोः पादयोर्भूम्यां प्रलोठितव्यम् । उदकं विनाशय । अथवानय । प्रक्षालयिष्यामि ।

(घ) न केवलं दास्याःपुत्रेण पादौ धौतौ, मुखमपि धौतम् ।

---

सुहौदेसु इत्यादि । सुधौतयोः सम्यग् जलेन क्षालितयोः सतोः । भूम्यां प्रलोठितव्यं पादप्रक्षालनानन्तरं न त्वं स्वास्तरणे तल्पे शयिष्यसे किन्तु भूमावेव गर्दभ इव प्रलुठन् देहमखिलं मलिनयिष्यसि । उदकं विनाशय । स त्वमिदानीं जलविनाशनमात्रप्रयोजनकं पादक्षालनं मा कुर्वित्यभिप्रायः ।

पादक्षालनव्याजेन मुखसेचनोपहासं कृतवन्तं चेटं प्रति आह—णकेवळमित्यादि । दास्याःपुत्रेण चेटेन ।

इयं हीत्यादि । चपला दुर्विनीता । मनुष्यवीर्यं परिभूय वर्धते मनुष्यस्यात्मप्रत्वभिभवप्रयत्नं न्यक्कृत्य वृद्धिं प्राप्नोति ॥ ४ ॥

(प्रविश्याभरणसमुद्गहस्ता)

चेटी — (क) अय्यमेत्तेअ! उट्ठेहि उट्ठेहि ।

विदूषकः — (ख) भोदि! किं एदं ।

चेटी — (ग) इअं सुवण्णभण्डं सट्ठीए सत्तमीए परिवेट्टामि । अट्ठमी खु अज्ज ।

नायकः — इदं तद् वसन्तसेनायाः स्वकम् ।

चेटी — (घ) आम । भणादु भणादु भट्टिदारओ, गह्णदु त्ति ।

नायकः — मैत्रेय! गृह्यताम् ।

विदूषकः — (ङ) किं णिमित्तं अअं अळङ्कारो अब्भन्तरचउस्साळं ण प्पवेसीअदि ।

---

(क) आर्यमैत्रेय! उत्तिष्ठोत्तिष्ठ ।
(ख) भवति! किमेतत् ।
(ग) इदं सुवर्णभाण्डं षष्ठ्यां सप्तम्यां परिवर्तयामि । अष्टमी खल्वद्य ।
(घ) आम । भणतु भणतु भर्तृदारकः गृह्णात्विति ।
(ङ) किन्निमित्तमयमलङ्कारोऽभ्यन्तरचतुःशालं न प्रवेश्यते ।

---

चेटनिष्क्रमणानन्तरं प्रविष्टा चेटी यथापूर्वसमयं षष्ठसप्तमतिथ्योरात्मना संरक्षितं गणिकाभूषणभाण्डं वर्तमानायामष्टम्यां विदूषकहस्ते प्रत्यर्पयितुकामा ब्रूते— अय्येत्यादि ।

भोदीत्यादि । एतत् त्वत्करस्थम् ।

इअमित्यादि । षष्ठ्यां सप्तम्यां, रक्षितमिति शेषः, अथवा अतीतायामिति शेषः, परिवर्तयामि निवर्तयामि प्रत्यर्पयामीत्यर्थः । अद्य अष्टमी खलु, तस्यां हि भूषणभाण्डं त्वद्धस्तेऽर्पणीयमिति पूर्वं कृतः समय इत्यभिप्रायः ।

इदमित्यादि । स्वकं धनम् आत्मीयं वा ।

आमेत्यादि । आमेत्यभ्युपगमे ।

मैत्रेयेत्यादि । सुवर्णभाण्डस्य रक्षातिशयार्थमभ्यन्तरचतुश्शाले निवेशनौचित्यात् पृच्छति — किंणिमित्तमित्यादि । किंनिमित्तं केन कारणेन, 'निमित्तपर्यायप्रयोगे' इतीह प्रथमा ।

**नायकः** — मूर्ख ! बाह्यजनधारितमलङ्कारं गृहजनो न द्रक्ष्यति ।

**विदूषकः** — (क) का गई । आणेहि गह्णामि चोरेहिं गह्णिअमाणं ।

( चेटी दत्त्वा निष्क्रान्ता । )

**विदूषकः** — (ख) भो ! किंणिमित्तं सो पावरओ तस्स गणिआपरिआरअस्स दिण्णो ।

**नायकः** — सानुक्रोशतया ।

**विदूषकः** — (ग) इह वि साणुक्कोसदा ।

**नायकः** — वयस्य ! मा मैवम् ।

**विदूषकः** — (घ) अहं भरिदगद्दभो विअ भूमीए पलोट्टामि ।

**नायकः** — निद्रा मां बाधते । तूष्णीं भव ।

---

(क) का गतिः । आनय गृह्णामि चोरैर्गृह्यमाणम् ।

(ख) भोः ! किन्निमित्तं स प्रावारकस्तस्मै गणिकापरिचारकाय दत्तः ।

(ग) इहापि सानुक्रोशता ।

(घ) अहं भरितगर्दभ इव भूम्यां प्रलुठामि ।

---

मूर्खेत्यादि । बाह्यजनधारितं बाह्यजनो वेशवाटजनः तेन धारितं । गृहजनः गृहिणी ।

का गई इत्यादि । चोरैर्गृह्यमाणमित्यनेन तद्रक्षणविषयस्वासामर्थ्यनिमित्तं तच्चोरणमवश्यम्भावीति द्योत्यते ।

शयनायास्तरणमाकाङ्क्षन् गजदमकगणिकाचेटपारितोषिकीकृतं प्रावारकमास्तरणार्थं विनियोगयोग्यं मत्वा 'कुतस्तं मह्यमदत्त्वान्यस्मै दत्तवानसि' इति पृच्छति — भो इत्यादि ।

सान्विति । सानुक्रोशतया सदयत्वेन ।

इह वीत्यादि । इहापि अस्मिन्नपि जातिवृत्तिगर्हिते गणिकापरिचारकेऽपि ।

वयस्येत्यादि । एवं मा मा, वादीरिति शेषः ।

अहमित्यादि । भरितगर्दभ इव पृष्ठारोपितभारो रासभ इव ।

निद्रेत्यादि । यावदित्यत्रधारणे ।

**विदूषकः**—(क) सअदु भवं सुहप्पबोहाअ । जाव अहं वि सुविस्सं ।

(द्वावपि स्वपितः ।)

(ततः प्रविशति सज्जलकः ।)

**सज्जलकः**—एष भोः !

कृत्वा शरीरपरिणाहसुखप्रवेशं
शिक्षाबलेन च बलेन च कर्ममार्गम् ।
गच्छामि भूमिपरिसर्पणघृष्टपार्श्वो
निर्मुच्यमान इव जीर्णतनुर्भुजङ्गः ॥ ५ ॥

भोः ! वृक्षवाटिकापक्षद्वारे सन्धिं छित्वा प्रविष्टोऽस्मि । यावदिदानीं चतुःशालमुपसर्पामि । (सनिर्वेदं विचिन्त्य) भोः

कामं नीचमिदं वदन्तु विबुधाः सुप्तेषु यद्वर्तते
विश्वस्तेषु हि वञ्चनापरिभवः शौर्यं न कार्कश्यता ।

---

(क) शेतां भवान् सुखप्रबोधाय । यावदहमपि स्वप्स्यामि ।

---

तत इत्यादि । सज्जलकः तदाख्यश्चोरः ।

कृत्वेत्यादि । एषोऽहं, शिक्षाबलेन अभ्यासपाटवेन च, बलेन कायशक्त्या च, शरीरपरिणाहसुखप्रवेशं देहपरिमाणस्य सुखः अनायासकरणीयः प्रवेशो यस्मिंस्तं तथाभूतं, कर्ममार्गं कर्म कला तन्निमित्तकं द्वारं कृत्रिमद्वारमित्यर्थः, कृत्वा उत्पाद्य, भूमिपरिसर्पणघृष्टपार्श्वः सन् भूमौ कृत्रिमद्वारदेशे यत् परिसर्पणं शयितगतिः तेन घृष्टौ कषितौ पार्श्वौ यस्य स तथाभूतः सन्, निर्मुच्यमानः कञ्चुकान्निर्गच्छन्, जीर्णतनुर्भुजङ्ग इव वृद्धः सर्प इव, गच्छामि, कञ्चुकाद् वृद्धसर्प इव कृत्रिमद्वारान्निर्गच्छामीत्युपमात्र ॥ ५ ॥

भो इत्यादि । सन्धिं छित्वा सुरुङ्गां छेदनकर्मणा सम्पाद्य ।

काममित्यादि । सुप्तेषु जनेषु, यद् वर्तते यत् कर्म मोषणादिलक्षणं प्रवर्तते, इदं कर्म, विबुधाः विद्वांसः, नीचं निकृष्टं, कामं यद्यपि, वदन्तु, कुतो नीचत्वं? तत्राह—हि यतः, विश्वस्तेषु अभयविस्रम्भं प्राप्तेषु सुप्तादिषु विषये वञ्चनापरिभवः वञ्चनया धर्षणं, शौर्यं न शूरकर्म न भवति, किं तर्हि ? कार्कश्यता कर्कशत्वं निर्दयकर्म, भवति । तथापि तद् गुणविशेषवत्त्वाच्छिष्टानुष्ठितत्वाच्चोप-

स्वाधीना वचनीयतापि तु वरं बद्धो न सेवाञ्जलि-
मार्गश्चैष नरेन्द्रसौप्तिकवधे पूर्वं कृतो द्रौणिना ॥ ६ ॥

(विचिन्त्य)

लुब्धोऽर्थवान् साधुजनावमानी वणिक् स्ववृत्तावतिकर्कशश्च ।
यस्तस्य गेहं यदि नाम लप्स्ये भवामि दुःखोपहतो न चित्ते ॥७॥

यद्वा तद्वा भवतु । किं वा न कारयति मन्मथः । यावदारभे कर्म । भोः!

---

देयमेवेत्याह — तु तथापि, स्वाधीना अनन्यपरतन्त्रा स्वीयच्छन्दानुरोधिप्रवृत्तिजनिता, वचनीयतापि निन्द्यतापि, वरं मनागिष्यते, बद्धः सेवाञ्जलिः सेवार्थं प्रणामसमुदाचारः न वरं मनागपि नेष्यते, परोपजीवनापेक्षया स्तेयादिनिन्द्यकर्मजीवनं स्वातन्त्र्यगुणयोगात् प्रशस्तमित्यभिप्रायः। एष च मार्गः विश्वस्तवञ्चनलक्षणः, पूर्वम् अतीते कल्पे, नरेन्द्रसौप्तिकवधे नरेन्द्राणां धृष्टद्युम्नादीनां सौप्तिके भारतयुद्धावसानविस्रम्भसुप्तिकालिके वधे विषये, द्रौणिना अश्वत्थाम्ना, कृतः अनुष्ठानेन दर्शितः। 'आलस्यः शीतकोऽनुष्ण' इत्यालस्यशब्दवत् कार्कश्यशब्दोऽत्र धर्मिपरो द्रष्टव्यः ॥ ६ ॥

विचिन्त्येति। चिकीर्षितं चौर्यकर्म दुर्जनविषये प्रयुक्तं लघुपापकं सुजनविषये गुरुपापकमिति न्याय्यं विमृश्येत्यर्थः।

लुब्ध इत्यादि। योऽर्थवान् सन् लोभात् साधुजनमीप्सितार्थाप्रदानेनावमन्यत इत्येकः प्रथमपादोक्तः। यो वणिक् सन् स्ववाणिज्यवृत्तौ कूटतुलाकुडुवप्रस्थादिमानकल्पनाद्यसाधुव्यवहारात्यर्थकर्कश इत्यपरो द्वितीयपादोक्तः। उभयसमुच्चये चशब्दः। दुःखोपहतो न भवामि सानुतापो न भवेयम् ॥ ७ ॥

यद्वेत्यादि। मन्मथः किं वा न कारयति सर्वविधेऽपि दुष्कृत्ये कामः पुरुषं प्रवर्तयतीत्यर्थः। सज्जलकस्य हि आत्मना काम्यमानां मदनिकां नाम वसन्तसेनायाश्चेटीं धनदानेन दास्यान्मोचयितुकामस्य धनार्जनायैष चौर्यारम्भ इति मन्मथप्रयुक्तमिदं दुष्कृत्यं बोद्धव्यम्। यावदारभे आरप्स्ये। भो इति चिन्तायाम्।

देशः कोनु जलावसेकशिथिलश्छेदादशब्दो भवेद्
भित्तीनां क्वनु दर्शितान्तरसुखः सन्धिः करालो भवेत् ।
क्षारक्षीणतया चलेष्टककृशं हर्म्यं क्व जीर्णं भवेत्
कुत्र स्त्रीजनदर्शनं च न भवेत् स्वन्तश्च यत्नो भवेत् ॥ ८ ॥

(परिक्रम्य) इयं वास्तुविभागक्रिया । सोपस्नेहतया गृहविशिष्ट इवायं भवनविन्यासः । इह तावत् प्रवेशावकाशं करिष्ये । भोः ! कीदृश इदानीं सन्धिच्छेदः कर्तव्यः स्यात् ।

सिंहाक्रान्तं पूर्णचन्द्रं झषास्यं चन्द्रार्धं वा व्याघ्रवक्त्रं त्रिकोणम् ।
सन्धिच्छेदः पीठिका वा गजास्यमस्मत्पक्ष्या विस्मितास्ते कथं स्युः॥९॥

भवतु, सिंहाक्रान्तमेवच्छेदयिष्ये ।

**विदूषकः** — (क) भो ! जागत्ति खु भवं, णहि ।

---

(क) भोः ! जागर्ति खलु भवान्, नहि ।

---

भित्तिषु सन्धिकरणयोग्यं देशं विमृशति—देशइत्यादि। **भित्तीनां कोनु देशः** भित्तिसम्बन्धी कः प्रदेशः । एवं क्वनु क्व कुत्रेत्येतेषु भित्तिसम्बन्धिनि कुत्र देश-इत्यर्थो बोद्धव्यः । जलावसेकशिथिलः वृष्टिजलजनितक्लेदवशादकर्करः, कर्करो हि देशश्छिद्यमानः सशब्दो भवेदिति । दर्शितान्तरसुखः सरन्ध्रतया दर्शितान्तरः सच्छिद्रः । अत एव सुखः सुकरः । सन्धिः रन्ध्रम् । करालः विशालः । क्षारक्षीणतया क्षारेण क्षारमृदा क्षयं प्राप्तः क्षारक्षीणस्तत्तया, चलेष्टककृशं बन्धविश्लिष्टेष्टकं कृशं च । हर्म्यं मालिका ॥ ८ ॥

**इयमित्यादि** । । वास्तुविभागक्रिया वास्तुनो गृहयोग्यभूमेः विभागक्रिया, इयं पुरो दृश्यते । अयं भवनविन्यासः भवनोचितः सन्निवेशः सोपस्नेहतया उपस्नेहः उपजीव्यवृक्षलताबाहुल्यप्रयुक्तं स्निग्धत्वं तद्वत्तया, गृहविशिष्ट इव । भो इति चिन्तायाम् । कीदृश उच्चावचेषु सन्धिच्छेदभेदेषु मध्ये कतम इत्यर्थः ।

तान् भेदान् दर्शयति — सिंहेत्यादि । सिंहाक्रान्तमित्यादयोऽष्टौ सन्धिच्छेदस्य भेदा अन्वर्था बोद्धव्याः । अस्मत्पक्ष्याः अर्थाच्चौर्यकलाकुशलाः । विस्मिताः मदीयसन्धिच्छेदकर्मकौशलदर्शनात् प्राप्ताश्चर्याः ॥ ९ ॥

**भवत्वित्यादि** । छेदयिष्ये छेदनकर्मणा निर्मास्ये । स्वार्थे णिच् ।

**भो इत्यादि** । इह प्रश्नकाकुः । भवान् किं जागर्ति उत न हि जागर्तीति प्रश्नः ।

**नायकः** — किमर्थम् ।

**विदूषकः** — (क) अहं खु दाव कत्तव्वकरत्थीकिदसङ्केदो विअ सक्किअसमणओ णिद्दं ण लभामि । वामं खु मे अक्खि फन्देदि । चोरो सन्धि छिन्ददी विअ पेक्खामि । जइ ईदिसी अवत्था अत्थाणं, जादीए दरिद्दो एव्व होमि ।

**नायकः** — मूर्ख ! धिक् त्वाम् । दारिद्र्यमभिलषसि ।

**सज्जलकः** — अथ केनेदानीं सन्धिच्छेदमार्गः सूचयितव्यः स्यात् । नन्विदं दिवा ब्रह्मसूत्रं रात्रौ कर्मसूत्रं भविष्यति ।

अद्यास्य भित्तिषु मया निशि पाटितासु-
च्छेदात् समासु सकृदर्पितकाकलीषु ।

---

(क) अहं खलु तावत् कर्तव्यकरस्त्रीकृतसङ्केत इव शाक्यश्रमणको निद्रां न लभे । वामं खलु मेऽक्षि स्पन्दते । चोरः सन्धिं छिनत्तीव पश्यामि । यदीदृश्यवस्थार्थानां, जात्या दरिद्र एव भवामि ।

---

किमिति । किमर्थं पृच्छसीति शेषः ।

अहं खु इत्यादि । कर्तव्यकरस्त्रीकृतसंकेतः परिचारकस्त्रिया कृतसंकेतः आवाभ्याममुकदेशकाले समागन्तव्यमिति कृतसमयः । छिनत्तीव पश्यामि चोरकर्तृकं छेदनं वर्तमानमिव पश्यामि । अवर्तमानेऽपि छेदने वर्तमानत्वबुद्धिर्भीतिकृता । जात्या जन्मना ।

मूर्खेत्यादि । त्वां धिक् त्वं निन्द्यः । उभसर्वतसोरित्यादिना धिक्छब्दयोग इह द्वितीया ।

छेत्तव्यदेशपरिच्छेदरेखानिवेशार्थं मानसूत्रमन्विष्यति — अथेत्यादि । केन कतमेन साधनविशेषेण । ब्रह्मसूत्रं यज्ञोपवीतम् ।

अद्येत्यादि । अस्य गृहस्य । पाटितासु कृतद्वारासु सतीषु । छेदात् समासु छेदं प्राप्यापि रम्यासु । सकृदर्पितकाकलीषु एकवारम् अर्पिता प्रयुक्ता काकली सन्ध्युत्पादकश्चोरसाधनविशेषो यासु तासु । काल्यं प्रत्यूषम् । अत्यन्तसंयोगे द्वितीया ।

काल्यं विषादविमुखः प्रतिवेशवर्गो
दोषांश्च मे वदतु कर्मसु कौशलं च ॥ १० ॥

नमः खरपटाय । नमो रात्रिगोचरेभ्यो देवेभ्यः । ( तथा करोति । ) हन्त अवसितं कर्म । प्रविशामस्तावत् । ( प्रविश्य ) अये ! ज्वलति दीपः । अपसरामि तावत् । धिक्, सज्जलकः खल्वहम् ।

मार्जारः प्लवने वृकोऽपसरणे श्येनो गृहालोकने
निद्रा सुप्तमनुष्यवीर्यतुलने संसर्पणे पन्नगः ।
माया वर्णशरीरभेदकरणे वाग् देशभाषान्तरे
दीपो रात्रिषु सङ्कटे च तिमिरं वायुः स्थले नौर्जले ॥ ११ ॥

( सर्वतो विलोक्य ) आगन्तुकत्वादविदितसमृद्धिविस्तरः केवलं भवनप्रत्ययादिह प्रविष्टोऽस्मि । न चेदानीं कञ्चित् परिच्छदविशेषं पश्यामि । किन्तु-

---

काल्ये इति वा पाठः । विषादविमुखः विषादेन विवर्णवदनः । प्रतिवेशवर्गः प्रतिगृहवासिजनवर्गः ॥ १० ॥

**नम** इत्यादि । खरपटाय खरपटो नाम स्तेनोपास्यदेवताविशेषः । कर्म अवसितं सन्धिच्छेदनं परिसमाप्तम् । अपसरणवचनेन सूचितमात्मनो भीरुत्वं निन्दितुमाह — धिगिति । सज्जलक इत्यात्मनामवचनं संकटेऽप्यात्मरक्षणसमर्थत्वमात्मनो द्योतयितुम् । अहमिति श्लोकान्वयि ।

**मार्जार** इत्यादि । प्लवने उत्प्लुत्य पलायने । गृहालोकने श्येनः गृहस्थितचोरणीयवस्तुदर्शनविषये गृध्रः दूरदर्शित्वात् । सुप्तमनुष्यवीर्यतुलने निद्रा सा हि स्वाक्रान्तस्य जनस्य वीर्यमेतावदिति सम्यग् जानातीति तत्साहश्यमुक्तम् । माया कुहकविद्या । देशभाषान्तरे वाग् भाषाधिष्ठानदेवता । रात्रिषु दीपः दिवसापेक्षयौजस्वितरत्वाद् दीप इव । सङ्कटेषु तिमिरं परदर्शनकृच्छ्रेषु ध्वान्तमिव तिरोधानसमर्थत्वात् । स्थले वायुः वात इव निरङ्कुशस्वव्यापारप्रवीणत्वात् । एवं जले नौरित्यपि ॥ ११ ॥

**आगन्तुकत्वादि**त्यादि । भवनप्रत्ययात् महदिदं भवनं धनसमृद्धिमत्पुरुषसम्बन्धि भवितुमर्हतीति विस्रम्भात् । परिच्छदविशेषं महार्घं चोरणयोग्यम् उपक-

खलु दरिद्र एवायम् । उताहो अयं संयमननिरर्थकं द्रष्टव्यं धारयति। अथवा, अभिजातोऽयं भवनविन्यासः । उपभुक्तप्रनष्टविभवेनानेन भवितव्यम् ।

तथा विभवमन्दोऽपि जन्मभूमिव्यपेक्षया ।
गृहं विक्रयकालेऽपि नीलस्नेहेन रक्षति ॥ १२ ॥

भवतु पश्यामस्तावत् । अथवा, न खलु मे तुल्यावस्थः कुलपुत्रः पीडयितव्यः । गच्छामि तावत् ।

**विदूषकः** —(क) भो ! गह्ण एदं सुवण्णभण्डअं ।

**सज्जलकः** —कथं सुवर्णभाण्डमित्याह । किं मां दृष्ट्वाभिभाषते। आहोस्वित् सत्त्वलाघवात् स्वप्नायते । भवतु पश्यामस्तावद् । (दृष्ट्वा) भूतार्थं सुप्त एवायम् । तथाहि ,

---

(क) भो ! गृहाणैतत् सुवर्णभाण्डम् ।

---

रणविशेषम् । अयम् एतद्गृहस्वामी । संयमननिरर्थकं संयमनं भूमिस्थापनादिना गोपनं तेन निष्प्रयोजनं। द्रष्टव्यम् अन्विष्योपलब्धव्यं द्रव्यम्। अभिजातः रमणीयः। अनेन एतद्गृहस्वामिना ।

तथेति। तथा निष्परिच्छदविशेषत्वेन प्रकारेण, विभवमन्दोऽपि दरिद्रोऽपि, अर्थाद् गृहस्वामी, विक्रयकालेऽपि दारिद्र्यवशाद् गृहस्य विक्रयावसरे प्राप्तेऽपि, गृहं जन्मभूमिव्यपेक्षया स्वजन्मभूमित्वाभिमानेन, नीलस्नेहेन रक्षति दृढस्नेहेन हेतुना न विक्रीणीत इत्यर्थः । नीलो नीलीरागः तत्सदृशः स्नेहो नीलस्नेहः दृढस्नेह इत्यर्थः । नीलीरागो हि वस्त्रादावारूढो नापैति, तद्वदनपायः स्नेहो नीलस्नेह इहोक्तः । 'नीलीरागः स्थिरप्रेमा' इति च यादवः ॥ १२ ॥

भवत्वित्यादि । मे मया । तुल्यावस्थः दरिद्रः ।

भो गह्णेत्यादि । सुवर्णभाण्डं सुवर्णभूषणम् ।

कथमित्यादि । सत्त्वलाघवात् धैर्याल्पत्वात् । स्वप्नायते स्वप्नमनुभवति । सुखादित्वात् क्यङ् कष्ट्यः । भूतार्थं सत्यम् ।

निःश्वासोऽस्य न शङ्कितो न विषमस्तुल्यान्तरं जायते
गात्रं सन्धिषु दीर्घतामुपगतं शय्याप्रमाणाधिकम् ।
दृष्टिर्गाढनिमीलिता न चपलं पक्ष्मान्तरं जायते
दीपं चैव न मर्षयेदभिमुखः स्याल्लक्षसुप्तो यदि ॥ १३ ॥

कनुखलु तत् । अये जर्जरप्रावरणैकदेशे दीपप्रभाव्यक्तीकृतरूपं दृश्यते । सुपरिगृहीतमनेन । अयमत्र प्राप्तकालः । इमे मया गृहीताः शलभाः । दीपनिर्वापणार्थमेकं मुञ्चामि । (भ्रमरकरण्डकादेकं मुञ्चति ।) अये एष दीपं निर्वाप्य पतति ।

**विदूषकः** — (क) अविहा णिव्वाविदो दीवो दाणिं । मुसिदो ह्मि । भो चारुदत्त ! गह्ण एदं सुवण्णाळङ्कारं । अहं खु भीदीए उप्पहप्पवुत्तो विअ वणिजो णिद्दं ण ळभामि । मम बह्मत्तणेण साविदो सि, जइ ण गह्णसि ।

---

(क) अविहा निर्वापितो दीप इदानीम् । मुषितोऽस्मि । भोश्चारुदत्त ! गृहाणेमं सुवर्णालङ्कारम् । अहं खलु भीत्योत्पथप्रवृत्त इव वणिग् निद्रां न लभे । मम ब्रह्मत्वेन शापितोऽसि, यदि न गृह्णासि ।

---

सत्यसुप्तलक्षणान्येवाह — निःश्वास इत्यादि । तुल्यान्तरं जायते तुल्येतरेतरकालव्यवधानं यथा भवति तथा निर्गच्छति अनेनावैषम्यमुपपादितम् । सन्धिषु जान्वादिषु । दीर्घतामुपगतम् अनियन्त्रणप्रसारणात् । अत एव शय्याप्रमाणाधिकं शयनीयाद् बहिर्गतम् । पक्ष्मान्तरं न चपलं पक्ष्मावकाशो न चञ्चलः, कपटस्वापे हि तच्चपलं भवेत् । कपटसुप्तो दीपमाभिमुख्यो न सहेत, अयं तु तमभिमुखः सहत इत्यभिप्रायेणाह — दीपं चैवेत्यादि । अभिमुखमिति द्वितीयान्तपाठे तद् दीपविशेषणम् ॥ १३ ॥

कन्वित्यादि । तत् सुवर्णभाण्डं । प्राप्तकालः युक्तः कालः ।

अविहेत्यादि । मुषितः चोरितः अर्थात् सुवर्णभाण्डे । अमुषितेऽप्यात्मनि मुषितत्वाध्यासो मोषणावश्यम्भावसूचनार्थोऽतिभीतिनिमित्तः । उत्पथप्रवृत्तः आत्मगम्यं वाणिज्यमार्गमुल्लङ्घ्य प्रवृत्तः । ब्रह्मत्वेन ब्राह्मण्येन । प्रवृत्तेर्निवृत्तेर्वानुष्ठानाव-

**सज्जलकः**—किमत्र शपथपरिग्रहेण । एष प्रतिगृह्णामि । (गृह्णाति ।)

**विदूषकः**—(दत्त्वा) (क) अहं विक्किणिदभण्डओ विअ वणिजओ सुहं सइस्सं ।

**सज्जलकः**—सुखं स्वपिहि महाब्राह्मण ! । (विचिन्त्य) भोः! ब्राह्मणेन विश्वासाद् दीयमानं मया हर्तव्यमासीत् ।

धिगस्तु खलु दारिद्र्यमनिर्वेदं च यौवनम् ।
यदिदं दारुणं कर्म निन्दामि च करोमि च ॥ १४ ॥

(नेपथ्ये पटहशब्दः क्रियते ।)

**सज्जलकः**—(कर्णं दत्त्वा) अये प्रभातसमयः संवृत्तः । अपसरामि तावत् ।

(निष्क्रान्तः सज्जलकः ।)

(प्रविश्य)

**चेटी**—(साक्रन्दम्) (ख) अय्यमेत्तेअ ! अह्माणं रुक्खवाडिआपक्खदुवाळे छिन्दिअ चोरो पविट्ठो ।

**विदूषकः**—(सहसोत्थाय) (ग) किं भणादि होदी ।

---

(क) अहं विक्रीतभाण्डक इव वणिक् सुखं शयिष्ये ।
(ख) आर्यमैत्रेय ! अस्माकं वृक्षवाटिकापक्षद्वारे सन्धिं छित्त्वा चोरः प्रविष्टः ।
(ग) किं भणति भवती ।

---

स्यम्भावाय केनापि प्रियवस्तुना करणेन शापनमनुष्ठाने तत्प्रत्यवायादेशनविभीषिकात्मकं सामुदाचारिकम् । तदिह ब्राह्मण्येन करणेन कृतम् ।

किमत्रेत्यादयस्त्रयः संवादाः ।

धिगस्त्वित्यादि । अनिर्वेदं योषिदुपभोगातृप्तम् । दारिद्र्ययौवनयोर्गर्हा प्रतिस्वर्णस्तेयरूपमहापातककर्मणि ज्ञानपूर्वप्रवृत्तिजनकत्वं हेतुरित्युत्तरार्धेनाह । यद् यस्मात् कारणात् ॥ १४ ॥

अये प्रभातसमय इत्यादय एदसिस्यन्ताः सप्त संवादाः ।

(चेटी रुक्खवाडिअत्ति पठति ।)

विदूषकः — (क) चोरं छिन्दिअ सन्धी पविट्ठो ।

चेटी — (ख) हदास! सन्धिं छिन्दिअ चोरो पविट्ठो ।

विदूषकः — (ग) आअच्छ णं दंसेहि ।

चेटी — (परिक्रम्य) (घ) एदं ।

विदूषकः — (ङ) अविहा दासीएवुत्तेण कुक्कुरेण पवेसो किदो । भोदि! आअच्छ, चारुदत्तस्स पिअं णिवेदेमि ।

(उभावुपगम्य)

भो चारुदत्त! पिअं दे णिवेदेमि ।

नायकः — (बुद्ध्वा) किं मे प्रियम् । ननु वसन्तसेना प्राप्ता ।

विदूषकः — (च) ण खु वसन्तसेणा, वसन्तसेणो पत्तो ।

नायकः — रदनिके! किमेतत् ।

चेटी — (छ) भट्टिदारअ! अह्माणं रुक्खवाडिआपक्खदुवारे सन्धिं

(क) चोरं छित्वा सन्धिः प्रविष्टः ।

(ख) हताश! सन्धिं छित्वा चोरः प्रविष्टः ।

(ग) आगच्छ ननु दर्शय ।

(घ) एतत् ।

(ङ) अविहा दास्याःपुत्रेण कुक्कुरेण प्रवेशः कृतः । भवति! आगच्छ चारुदत्तस्य प्रियं निवेदयामि । भोश्चारुदत्त! प्रियं ते निवेदयामि ।

(च) न खलु वसन्तसेना, वसन्तसेनः प्राप्तः ।

(छ) भर्तृदारक! अस्माकं वृक्षवाटिकापक्षद्वारे सन्धिं छित्वा चोरः प्रविष्टः ।

अविहेत्यादि । कुक्कुरेण शुना । सुवर्णभाण्डमर्धरात्रे चारुदत्तहस्तार्पणेन रक्षितं मन्यमानस्येयं कुक्कुरप्रवेशसम्भावना । प्रियम् आत्मकृतम् भाण्डरक्षणसंविधानं 'णं मए सोहणं किदं' इति वक्ष्यमाणम् ।

किं मे प्रियमित्यादयश्चतुर्दश संवादाः ।

छिन्दिअ चोरो पविट्ठो।

**नायकः**—किं चोरः प्रविष्टः।

**विदूषकः**—(क) भो वअस्स! सव्वहा तुवं भणासि, मुक्खो मेत्तेओ अपण्डिदो मेत्तेओ त्ति। णं मए सोभणं किदं तं सुवण्णभण्डअं तव हत्थं समप्पअन्तेण।

**नायकः**—किं भवता दत्तम्।

**विदूषकः**—(ख) अहइं।

**नायकः**—कस्यां वेलायाम्।

**विदूषकः**—(ग) अद्धरत्ते।

**नायकः**—किमर्धरात्रे। बाढं दत्तम्।

**विदूषकः**—(घ) भो चारुदत्त! जं वेळं पडिवुद्धो आसि, तस्सिं वेळाअं खु दिण्णं।

**नायकः**—हन्त हृतं सुवर्णभाण्डकम्।

**विदूषकः**—(ङ) दाणिं मे हत्थे पडिच्छिदु अत्तभवं।

**नायकः**—(आत्मगतम्)

कः श्रद्धास्यति भूतार्थं सर्वो मां तुलयिष्यति।
शङ्कनीया हि दोषेषु निष्प्रभावा दरिद्रता॥ १५॥

---

(क) भो वयस्य! सर्वथा त्वं भणासि, मूर्खो मैत्रेयोऽपण्डितो मैत्रेय इति। ननु मया शोभनं कृतं तत् सुवर्णभाण्डकं तव हस्ते समर्पयता।

(ख) अथकिम्।

(ग) अर्धरात्रे।

(घ) भोश्चारुदत्त! यस्यां वेलायां प्रतिबुद्ध आसीः, तस्यां वेलायां खलु दत्तम्।

(ङ) इदानीं मम हस्ते प्रयच्छत्वत्रभवान्।

---

क इति। भूतार्थं वस्तुतत्त्वं 'चोरेण भाण्डमपहृतमित्येवंरूपं, कः श्रद्धास्यति विश्वसिष्यति। सर्वः सर्वविधोऽपि जनः, मां तुलयिष्यति ऋजुः शठो वेति

(प्रविश्य)

**ब्राह्मणी** —(क) रदणिए! रदणिए! आअच्छ । णहि सुणादि । कवाडसद्दं दाव करिस्सं । (तथा करोति ।)

**चेटी** —(ख) हं, कवाडसद्दो विअ । भट्टिदारिआ मं सद्दावेदि । (परिक्रम्य) भट्टिदारिए! इअह्मि ।

**ब्राह्मणी** —(ग) ण परिक्खदो ण वावादिदो अय्यउत्तो अय्यमेत्तेओ वा ।

**चेटी** —(घ) कुसळी भट्टिदारओ अय्यमेत्तेओ अ । जो तस्स जणस्स अळङ्कारो चोरेण गहीदो ।

**ब्राह्मणी** —(ङ) किं भणासि चोरेण गहीदत्ति ।

**चेटी** —(च) अहइं ।

**ब्राह्मणी** —(छ) किंणुखु तस्स जणस्स दादव्वं भविस्सदि । अहव

---

(क) रदनिके! रदनिके! आगच्छ । नहि शृणोति । कवाटशब्दं तावत् करिष्यामि ।

(ख) हं, कवाटशब्द इव । भर्तृदारिका मां शब्दापयति । भर्तृदारिके! इयमस्मि ।

(ग) न परिक्षतो न व्यापादित आर्यपुत्र आर्यमैत्रेयो वा ।

(घ) कुशली भर्तृदारक आर्यमैत्रेयश्च । यस्तस्य जनस्यालङ्कारश्चोरेण गृहीतः ।

(ङ) किं भणसि चोरेण गृहीत इति ।

(च) अथकिं ।

(छ) किन्नुखलु तस्मै जनाय दातव्यं भविष्यति । अथवैतद् दास्यामि ।

---

तुलया निर्णेष्यति, चोर इत्येव निर्धारयिष्यतीत्यभिप्रायः । अदृष्टपूर्वेदृशदोषेऽपि मयि दारिद्र्यवशादीदृश्यः शङ्का जनस्य जायेरन्नेवेत्याशयेनाह — शङ्कनीयेत्यादि ॥ १५ ॥

रदणिए — इत्यादयः षट् संवादाः ।

किण्णुखु इत्यादि । [illegible] स्थानीयम् । रक्षताद[illegible] महार्थः

एदं दइस्सं । (कर्णौ स्पृष्ट्वा) हद्धि ताळीपत्तं खु एदं । सो दाणि परिअओ मं विळम्बेदि । किं दाणि करिस्सं । (विचिन्त्य) भोदु, दिट्ठं । मम ञ्ञादिकुळादो ळद्धा सदसहस्समुळ्ळा मुत्तावळी । तं पि अय्यउत्तो सोढीरदाए पडिच्छदि । भोदु, एवं दाव करिस्सं । (निष्क्रान्ता ।)

**विदूषकः** — (क) इमस्स अन्धआरुप्पादिदस्स अवराहस्स किदे भवन्तं सीसेण पसादेमि । दाणिं मे हत्थे पडिच्छदु अत्तभवं ।

**नायकः** — किं भवानिदानीं मां बाधते ।

भवांस्तावदविश्वासी शीलज्ञो मम नित्यशः ।
किं पुनः स कलाजीवी वञ्चनापण्डितो जनः ॥ १६ ॥

---

हा धिक् तालीपत्रं खल्वेतत् । स इदानीं परिचयो मां विडम्बयति । किमिदानीं करिष्यामि । भवतु, दृष्टम् । मम ज्ञातिकुलाद् लब्धा शतसहस्रमूल्या मुक्तावली । तामप्यार्यपुत्रः शौटीरतया प्रतीच्छति । भवतु, एवं तावत् करिष्यामि ।

(क) अस्यान्धकारोत्पादितस्यापराधस्य कृते भवन्तं शीर्षेण प्रसादयामि । इदानीं मे हस्ते प्रयच्छत्वत्रभवान् ।

---

प्रागेव विक्रीतः । विक्रयास्मरणात्तु रत्नताटङ्कसत्ताबुद्ध्या मया कर्णौ स्पृष्टावित्याशयः । विडम्बयति उपहसति । शौटीरतया अभिमानेन । प्रतीच्छति इह काका न ग्रहीष्यतीत्यर्थः ।

चारुदत्तः परिहसतीति मन्यमानस्य विदूषकस्योक्तिः — इमस्सेत्यादि । अपराधस्य रात्रौ त्वत्करे भाण्डार्पणरूपस्य ।

किं भवानित्यादि ।

अनवरतमदीयशीलवेदी सन्नपि भवान् सुवर्णभाण्डाग्रहणं मयोच्यमानं न श्रद्दधाति चेत्, तर्हि मच्छीलानभिज्ञोऽभिनयकलोपजीवी वञ्चनस्वभावो वेशवाटजनः 'चोरेण सुवर्णभाण्डमपहृतमि'ति मद्वचनं न श्रद्धास्यतीति किमु वक्तव्यमित्याह — भवांस्तावदित्यादि ॥ १६ ॥

**विदूषकः** — (क) मण्णे मए मन्दभाग्गेण कुम्भीळस्स हत्थे दिण्णं । (विषण्णस्तिष्ठति ।)

(प्रविश्य)

**ब्राह्मणी** — (ख) रदणिए ! अय्यमेत्तेअं सद्दावेहि ।

**चेटी** — (ग) अय्यमेत्तेअ ! भट्टिदारिआ तुमं सद्दावेदि ।

**विदूषकः** — (घ) भोदि ! किं मं ।

**चेटी** — (ङ) आम ।

**विदूषकः** — (च) एस आअच्छामि । (उपसर्पति ।)

**ब्राह्मणी** — (छ) अय्यमेत्तेअ ! इमं पडिग्गहं पडिगह्ण ।

**विदूषकः** — (ज) अवत्थाविरुद्धो खु अअं पदाणविभवो । कुदो एदस्स आगमो ।

---

(क) मन्ये मया मन्दभाग्येन कुम्भीलस्य हस्ते दत्तम् ।

(ख) रदनिके ! आर्यमैत्रेयं शब्दापय ।

(ग) आर्यमैत्रेय ! भर्तृदारिका त्वां शब्दापयति ।

(घ) भवति ! किं माम् ।

(ङ) आम ।

(च) एष आगच्छामि ।

(छ) आर्यमैत्रेय ! इमं प्रतिग्रहं प्रतिगृहाण ।

(ज) अवस्थाविरुद्धः खल्वयं प्रदानविभवः । कुत एतस्यागमः ।

---

मण्णे इत्यादयस्त्रयः संवादाः ।

भोदीत्यादि । किं मां शब्दापयतीत्यनुषज्यते ।

आमेत्यादयस्त्रयः संवादाः । आमशब्दोऽङ्गीकारे ।

अवत्थेति । अयं प्रदानविभवः दानसम्पत्, अवस्थाविरुद्धः खलु । अनुभूयमानदारिद्र्यदशाननुरूपः खलु । एतस्य दानस्य कुतः आगमः केन कारणेन प्राप्तिः ।

**ब्राह्मणी**—(क) णं सट्ठिं उववसामि । सव्वसारविभवेण बह्मणेण सोत्थि वाअइदव्वं त्ति एसो इमस्स आगमो ।

**विदूषकः**—(ख) अट्ठमी खु अज्ज ।

**ब्राह्मणी** (ग) पमा(दा)दो अदिक्कमो किदो । अज्ज पूआ णिव्वत्ती-अदि ।

**विदूषकः**—(घ) अण(वदाऽणुरू)वदाए पदाणस्स अणुक्कोसो विअ पडिभादि । (जनान्तिकम्) रदणिए! किं करिस्सं ।

**चेटी**—(अपवार्य) (ङ) किंणुखु तस्स जणस्स दादव्वं भविस्सदि त्ति एदण्णिमित्तं भट्टिदारओ सन्तप्पदि त्ति भट्टिदारिआ तव हत्थे दइअ अय्यउत्तं अणिरिणं करिस्सामि त्ति एवं करेदि । ता गह्ण एदं ।

---

(क) ननु षष्ठीमुपवसामि । सर्वसारविभवेन ब्राह्मणेन स्वस्ति वाचयितव्यमित्येषोऽस्यागमः ।

(ख) अष्टमी खल्वद्य ।

(ग) प्रमादाद् अतिक्रमः कृतः । अद्य पूजा निर्वर्त्यते ।

(घ) अननुरूपतया प्रदानस्यानुक्रोश इव प्रतिभाति । रदनिके! किं करिष्यामि ।

(ङ) किन्नुखलु तस्मै जनाय दातव्यं भविष्यतीत्येतन्निमित्तं भर्तृदारकः संतप्यत इति भर्तृदारिका तव हस्ते दत्वार्यपुत्रमनृणं करिष्यामीत्येवं करोति । तद् गृहाणैतत् ।

---

षष्ठ्युपवासाङ्गतया दानस्य प्राप्तिरित्याह—णमित्यादि । सर्वसारविभवेन सर्वश्रेष्ठदेयवस्तुसम्पदा करणेन । ब्राह्मणेन दानपरितोषितेन प्रयोज्यकर्त्रा ।

अष्टमीत्यादि ।

पमादादो इत्यादि । अतिक्रमः दानस्य षष्ठ्यामकरणम् ।

अणणुरूवदाए इत्यादि । अननुरूपतया अवस्थाविरुद्धतया । अनुक्रोशः ईदृशाभरणरत्नवियोगमतद्दानुभवेदिति दुःखम् । 'अणवदावदाए' इत्यनर्थकपाठस्थाने 'अणणुरूवदाए' इति पाठोऽस्माभिरादिष्टः । पाठतत्त्वं पुनरन्वेष्यम् ।

**ब्राह्मणी** — (क) उदअसम्भवदाए मुत्तावळीए तव अ दुल्लहदाए उवआरो विस्सरिदो । गह्ण एदं । (ददाति ।)

**विदूषकः** — (गृहीत्वा) (ख) सव्वं दाव चिट्ठदु । रोदिदी विअ होदीए दिट्ठी ।

**ब्राह्मणी** — (ग) देवउळधूमेण रोदाविदा ।

**विदूषकः** — (घ) साविदासि तत्तहोदा चारुदत्तेण, जइ अळिअं भणासि ।

**ब्राह्मणी** — (ङ) हद्धि । (निष्क्रान्ता ।)

**विदूषकः** — (च) एसा वाआए दुक्खं रक्खिअ अस्सूहि सूइअ गआ । (उपगम्य) भो ! इदं ।

---

(क) उदकसम्भवतया मुक्तावल्यास्तव च दुर्लभतयोपकारो विस्मृतः । गृहाणैतत् ।

(ख) सर्वं तावत् तिष्ठतु । रोदितीव भवत्या दृष्टिः ।

(ग) देवकुलधूमेन रोदिता ।

(घ) शापितासि तत्रभवता चारुदत्तेन, यद्यलीकं भणसि ।

(ङ) हा धिक् ।

(च) एषा वाचा दुःखं रक्षित्वाश्रुभिः सूचयित्वा गता । भोः ! इदम् ।

---

**किण्णुखु** इत्यादि । तस्य जनस्य सुवर्णभाण्डस्वामिनो गणिकाजनस्य । करिष्यामीति बुद्ध्येति शेषः ।

जलोद्भवत्वेन प्रशस्तेयं मुक्तावली तुभ्यमेव देयेति ममाध्यवसायात् काले च तवालाभाद् दानं विस्मृतमित्याह — **उदअसम्भवदाए** इत्यादि ।

**सव्वमित्यादि** । रोदितीव अश्रूणि मुञ्चतीव ।

**देवेत्यादयस्त्रयः** संवादाः । रोदिता रुदती प्रयोजिता ।

**एसा इत्यादि** । रक्षित्वा सङ्गोप्य अनुक्त्वेत्यर्थः ।

**नायकः** — किमेतत् ।

**विदूषकः** — (क) सरिसकुळदारसङ्गहस्स फळं ।

**नायकः** — किं ब्राह्मणी मामनुकम्पते ।

**विदूषकः** — (ख) एवं विअ ।

**नायकः** — धिगात्मानम् । अद्य हतोऽस्मि ।

मयि द्रव्यक्षयक्षीणे स्त्रीद्रव्येणानुकम्पितः ।
अर्थतः पुरुषो नारी या नारी सार्थतः पुमान् ॥ १७ ॥

**विदूषकः** — (ग) तत्तहोदी हिअएण तुमं याचेदि । अहं सीसेण याचेमि । गह्ण एदं ।

**नायकः** — तथा । (गृहीत्वा) वयस्य! इमां मुक्तावलीं गृहीत्वा वसन्तसेनायाः सकाशं गच्छ ।

अर्थेषु काममुपलभ्य मनोरथो मे
स्त्रीणां धनेष्वनुचितं प्रणयं करोति ।

---

(क) सदृशकुलदारसंग्रहस्य फलम् ।

(ख) एवमिव ।

(ग) तत्रभवती हृदयेन त्वां याचते । अहं शीर्ष्णा याचे । गृहाणैतत् ।

---

किमेतदित्यादयश्चत्वारः संवादाः ।

धिगित्यादि ।

मयीत्यादि । स्त्रीद्रव्येण मुक्तावलीरूपेण अनुकम्पितः, पुरुषः मल्लक्षणः, अर्थतो नारी अर्थात् स्त्री भवति । स्वयं द्रव्यार्जनासमर्थत्वादित्यभिप्रायः । या नारी अनुकम्पित्री मत्पत्नी, सा अर्थतः पुमान् उपकारसमर्थत्वादित्यभिप्रायः ॥ १७ ॥

तत्तहोदीत्यादि । एतद् आभरणं मुक्तावलीरूपम् ।

तथेत्यादि ।

अर्थेष्विति । अर्थेषु स्वधनेषु, काममुपलभ्य स्वाभीष्टमनुभूय, मे मनोरथः, स्त्रीणां धनेषु विषये, अनुचितम् अयुक्तम्, अयुक्तत्वं च "उत्तमं स्वार्जि-

मानै च कार्यकरणे च विलम्बमानो
धिग् भोः! कुलं च पुरुषस्य दरिद्रतां च ॥ १८ ॥

**विदूषकः** — (क) अहो अप्पमुल्लस्स सुवण्णभण्डअस्स किदे सदसहस्समुल्ला मुत्तावळी णीआदइदव्वा ।

**नायकः** — वयस्य ! मा मैवम् ।

यं समालक्ष्य विश्वासं न्यासोऽस्मासु कृतस्तया ।
तस्यैतन्महतो मूल्यं प्रत्ययस्य प्रदीयताम् ॥ १९ ॥

( निष्क्रान्ताः सर्वे । )

तृतीयोऽङ्कः ।

---

(क) अहो अल्पमूल्यस्य सुवर्णभाण्डकस्य कृते शतसहस्रमूल्या मुक्तावली निर्यातयितव्या ।

---

तं वित्तं मध्यमं पितुरर्जितम् । अधमं भ्रातृवित्तं तु स्त्रीवित्तमधमाधमम् ॥" इत्यभियुक्तलिखितपठितम् । प्रणयम् अपेक्षां, करोति । प्रणयकरणे किं कारणं, तत्राह — माने च कार्यकरणे च विलम्बमानः मानः कुलगौरवम् अर्थात् मानरक्षणे चोरहृतसुवर्णभाण्डप्रतिनिर्यातनरूपकार्यकरणे च विलम्बम् कुर्वन् । चोरापहारोत्तरक्षण एव करणीययोर्नष्टनिर्यातनमानरक्षणयोरेतत्क्षणावधि अकरणेन जनितं विलम्बमसहमान इत्यभिप्रायः । अधमधनप्रणयकरणपरमकारणं कुलगौरवदारिद्र्ययोरात्मनि समावेशं निन्दति — धिग् भो इत्यादि ॥ १८ ॥

अहो इत्यादि । अहोशब्दः कष्टे ।

वयस्येत्यादि । एवं मा मा, वादीरिति शेषः ।

यमित्यादि । महतः महार्घस्य । तस्य प्रत्ययस्य विश्वासस्य, न तु सुवर्णभाण्डस्य । एतद् मुक्तावलीरूपं, मूल्यम् ॥ १९ ॥

निष्क्रान्ताः सर्वे इति तृतीयाङ्कपरिसमाप्तिः ॥

## अथ चतुर्थोऽङ्कः ।

(ततः प्रविशति सोत्कण्ठा वसन्तसेना, चित्रफलकामादाय वर्तिकाकरण्डहस्ता चेटी च ।)

**गणिका** — (क) हञ्जे ! पेक्खसि सारिसो तस्स जणस्स ।

**चेटी** — (ख) अज्जुए ! तस्सिं हत्थिविमद्दकोळाहळे बहुमाणपय्यत्थाए दिट्ठीए दूरदो दिट्ठो सो भट्टिदारओ ईदिसो एव्व ।

**गणिका** — (ग) तुमं दाव दक्खो वेसवासजणो त्ति जणवादं पूरअन्ती अळिअअं भणासि ।

**चेटी** — (घ) किं एदं वेसवासजणो सव्वो दक्खिणो होइ त्ति । पेक्खदु अज्जुआ चम्पआरामे पिचुमन्दा जाअन्ति । आदिसरिस त्ति मम हिअअं अहिरमदि । परमत्थदो एव्व पसंसीअदि, णं कामदेवो ।

(क) हञ्जे ! पश्यसि सदृशस्तस्य जनस्य ।

(ख) अज्जुके! तस्मिन् हस्तिविमर्दकोलाहले बहुमानपर्यस्तया दृष्ट्या दूरतो दृष्टः स भर्तृदारक ईदृश एव ।

(ग) त्वं तावद् दक्षो वेशवासजन इति जनवादं पूरयन्त्यलीकं भणसि ।

(घ) किमेतद् वेशवासजनः सर्वो दक्षिणो भवतीति । पश्यत्वज्जुका चम्पकारामे पिचुमन्दा जायन्ते । अतिसदृश इति मम हृदयमभिरमते । परमार्थत एव प्रशस्यते, ननु कामदेवः ।

### अथ चतुर्थोऽङ्कः ।

अथ चारुदत्तसोत्कण्ठाया वसन्तसेनायाः प्रवेशः — ततः प्रविशतीत्यादि । चित्रफलकां नायकालेख्यफलकम् । वर्तिकाकरण्डहस्ता वर्तिकाकरण्डो गात्रानुलेपनसमुद्गको हस्ते यस्याः सा ।

हञ्जे इत्यादि । अस्मिन् वाक्ये प्रश्नकाकुः । तस्य जनस्य सदृशः चारुदत्तस्य सदृशः किम्, अर्थादालेख्यचारुदत्तः ।

अज्जुए इत्यादि । बहुमानपर्यस्तया बहुमानपरिक्षिप्तया ।

तुममित्यादि । पूरयन्ती सार्थकयन्ती । अलीकं मिथ्या ।

किं एदमित्यादि । पिचुमन्दाः निम्बवृक्षाः ।

**गणिका** —(क) हञ्जे! सहीजणेण अवहसणीअत्तणं अत्तणो परिहरामि ।

**चेटी**—(ख) एदं जुज्जइ । सहीजणसवत्तिओ गणिआजणो णाम ।

(ततः प्रविशत्याभरणहस्तापरा चेटी ।)

**चेटी** —(ग) सुहं अज्जुआए ।

**गणिका** —(घ) हञ्जे! साअदं दे ।

**चेटी** —(ङ) अज्जुए! अत्ता आणवेदि—इदं दुवारं पविट्ठं पोक्खरं उवावत्तिदं पवहणं । ता तुवरमाणमण्डणा गहीदावउण्ठणा आअच्छदु त्ति । इह अळङ्कारं अळङ्करेदु अज्जुआ ।

**गणिका** —(च) किं अय्यचारुदत्तो मण्डइस्सिदि ।

---

(क) हञ्जे! सखीजनेनापहसनीयत्वमात्मनः परिहरामि ।

(ख) एतद् युज्यते । सखीजनसपत्नीको गणिकाजनो नाम ।

(ग) सुखमज्जुकायाः ।

(घ) हञ्जे! स्वागतं ते ।

(ङ) अज्जुके! अम्बाज्ञापयति—इदं द्वारं प्रविष्टं पौष्करमुपावृत्तितं प्रवहणम् । तत् त्वरमाणमण्डना गृहीतावगुण्ठनागच्छत्विति । इहालङ्कारमलङ्करोत्वज्जुका ।

(च) किमार्यचारुदत्तो मण्डयिष्यति ।

---

हञ्जे सहीत्यादि । परिहरामि अर्थादालेख्यसौष्ठवसम्पत्तौ सत्याम् ।

एदमित्यादि । सखीजनसपत्नीकः सखीजन एव सपत्नी दोषैकहेतुत्वाद् यस्य स तथा ।

वसन्तसेनामण्डनार्थशकारप्रेषिताभरणहस्तस्य चेट्यन्तरस्य प्रवेशः—तत इत्यादि ।

सुहमित्यादि ।

हञ्जे इत्यादि ।

अज्जुए इत्यादि । पौष्करं पद्माकारसन्निवेशम् । उपावृत्तितम् उपावृत्तो लुठनापनीतश्रमोऽश्वः तद्युक्तम् । प्रवहणं कर्णीरथः ।

किं अय्येत्यादयः तह इत्येतदन्ता अष्टौ संवादाः ।

चेटी — (क) णहि, जेण अळङ्कारो पेसिदो सो राअसाळो सण्ठाणो।

गणिका — (ख) अवेहि अविणीदे ! ।

चेटी — (ग) पसीददु पसीददु अज्जुआ। सन्देसं खु अहं मन्तेमि। (पादयोः पतति ।)

गणिका — (घ) उट्ठेहि उट्ठेहि । कुसन्देसं असूआमि, ण तुवं।

चेटी — (ङ) किं अहं अत्तं भणामि ।

गणिका — (च) भणेहि अत्तं — जदा अय्यचारुदत्तो अभिसारइदव्वो तदा मण्डेमि त्ति ।

चेटी — (छ) तह । (निष्क्रान्ता ।)

(ततः प्रविशति सज्जलकः ।)

सज्जलकः —

कृत्वा निशायां वचनीयदोषं निद्रां च हित्वा तिमिरं भयं च ।
स एव सूर्योदयमन्दवीर्यः शनैर्दिवाचन्द्र इवास्मि भीतः ॥ १ ॥

दिष्ट्या कर्मान्ते प्रभातम् । यावदिदानीं वसन्तसेनायाः परिचारिकाया मदनिकाया निष्क्रयार्थं मयेदं कृतम् । (परिक्रम्य) इदं वसन्तसेनाया गृहम् ।

---

(क) नहि, येनालङ्कारः प्रेषितः सः राजस्यालः संस्थानः ।

(ख) अपेह्यविनीते ।

(ग) प्रसीदतु प्रसीदत्वज्जुका । सन्देशं खल्वहं मन्त्रये ।

(घ) उत्तिष्ठोत्तिष्ठ । कुसन्देशमसूयामि, न त्वाम् ।

(ङ) किमहमम्बां भणामि ।

(च) भणाम्बां — यदार्यचारुदत्तोऽभिसारयितव्यस्तदा मण्डयामीति ।

(छ) तथा ।

---

कृत्वेत्यादि । वचनीयदोषं स्तैयरूपम् ॥ १ ॥

दिष्ट्येत्यादि । निष्क्रयार्थं परपरिगृहीतं यदर्पणेन प्रत्याह्रियते स निष्क्रयः तदर्थम् । इदं सुवर्णभाण्डचौर्यम् ।

यावत् प्रविशामि । (प्रविश्य) किन्नुखल्वभ्यन्तरस्था मदनिका । अथवा, पूर्वाह्णे गणिकानामभ्यन्तरे सान्निध्यम् । अतस्तत्रैव तया भवितव्यम् । यावच्छब्दापयामि । मदनिके ! मदनिके ! ।

चेटी — (आकर्ण्य) (क) सज्जळअस्स विअ सरो । वावुदा अज्जुआ । ता उवसप्पिस्सं । (उपगम्य) इअह्मि ।

सज्जलकः — इतस्तावत् ।

चेटी — (ख) किं तुवं सङ्किदवण्णो विअ ।

सज्जलकः — न खलु, किञ्चित् कथयितुकामः ।

गणिका — (ग) हञ्जे ! इमं चित्तफळअं सअणीए ट्ठावेहि । (विलोक्य) कहिं गआ हदासा । अहव अदूरगआए होदव्वं । जाव णं पेक्खिस्सं । (परिक्रम्यावलोक्य) अम्मो इअं सा अदिसिणिद्धाए दिट्ठीए केणवि मणुस्सेण पिवन्ती विअ सह मन्तअन्ती चिट्ठइ । तक्केमि एसो जोकोवि कएण मं याचेदि ।

सज्जलकः — श्रूयतां रहस्यम् ।

---

(क) सज्जलकस्येव स्वरः । व्यापृताज्जुका । तदुपसर्पिष्यामि । इयमस्मि ।

(ख) किं त्वं शङ्कितवर्ण इव ।

(ग) हञ्जे ! इदं चित्रफलकं शयनीये स्थापय । कुत्र गता हताशा । अथवा अदूरगतया भवितव्यम् । यावदेनां प्रेक्षिष्ये । अम्मो इयं सातिस्निग्धया दृष्ट्या केनापि मनुष्येण पिबन्तीव सह मन्त्रयमाणा तिष्ठति । तर्कयाम्येष यःकोऽपि क्रयेण मां याचते ।

---

सज्जळअस्सेत्यादि ।

इतस्तावदिति । आगच्छेति शेषः ।

किं तुवमित्यादि । शङ्कितवर्ण इव भीतच्छाय इव ।

नखल्वित्यादि । शङ्कितवर्णो नैव भवामि । किन्तु किमपि वक्तुकाम इत्यर्थः ।

हञ्जे इममित्यादि । हताशेति, अनापृच्छ्य गतां प्रति रोषाविष्करणम् ।

श्रूयतां रहस्यमित्यादयः सुसंवादाः ।

 


**गणिका** — (क) अजुत्तं पररहस्सं सोदुं, अहं गमिस्सं ।

**सज्जलकः** — अपि वसन्तसेना (इत्यर्धोक्ते)

**गणिका** — (ख) अहं अहिइदा एदाअं कहाअं । होदु, सुणिस्सं दाव भविस्सदि । (पुनः प्रतिनिवृत्य स्थिता।)

**सज्जलकः** — किं दास्यति त्वां निष्क्रयेण ।

**गणिका** — (ग) सो एव्व एसो । होदु, सुणिस्सं ।

**चेटी** — (घ) सज्जळअ! ममप्पदाणं पुढमं एव अज्जुआए उत्तं ।

**सज्जलकः** — तेन हीममस्यै प्रयच्छ, एवं वक्तव्या च —

अयं तव शरीरस्य प्रमाणादिव निर्मितः ।
अप्रकाश्यो ह्यलङ्कारो मत्स्नेहाद् धार्यतामिति ॥ २ ॥

**चेटी** — (ङ) पेक्खामि दाव ।

**सज्जलकः** — गृह्यताम् । (दर्शयति।)

**चेटी** — (च) दिट्ठपुरुवो विअ अअं अळङ्कारो ।

**गणिका** — (छ) ममकेरओ विअ अअं अळङ्कारो ।

---

(क) अयुक्तं पररहस्यं श्रोतुम्, अहं गमिष्यामि ।
(ख) अहमधिकृतैतस्यां कथायाम् । भवतु, श्रोष्यामि तावद् भविष्यति।
(ग) स एवैषः । भवतु, श्रोष्यामि ।
(घ) सज्जलक! मम प्रदानं प्रथममेवाज्जुकयोक्तम् ।
(ङ) पश्यामि तावत् ।
(च) दृष्टपूर्व इवायमलङ्कारः ।
(छ) मदीय इवायमलङ्कारः ।

---

तेनहीत्यादि ।
अयं तवेत्यादि । प्रमाणादिव प्रमाणमुपादायेव ॥ २ ॥
पेक्खामीत्यादयः सुगमाः संवादाः ।

चेटी — (क) भणाहि भणाहि । को इमस्स आअमो ।

सज्जलकः — त्वत्स्नेहात् साहसं कृतम् ।

उभे — (ख) हं, साहसिओ ।

चेटी — (आत्मगतम्) (ग) आ, अज्जुआए खु इमस्स आइदी कम्मदारुणदाए उव्वेअणीआ संवुत्ता । (प्रकाशम्) हद्धि मम किदे उभअं संसइदं संवुत्तं — तव सरीरं चारित्तं च ।

सज्जलकः — उन्मत्तिके! साहसे खलु श्रीर्वसति ।

चेटी — (घ) अपण्डिदो खु सि । को हि णाम जीविदेण सरीरं विक्कीणिस्सदि । अह कस्स गेहे इअं विस्सासवञ्चणा किदा ।

सज्जलकः — यथा प्रभाते मया श्रुतं — श्रेष्ठिचत्वरे प्रतिवसति सार्थवाहपुत्रश्चारुदत्तो नाम ।

उभे — हुम् ।

सज्जलकः — अयि,

विषादस्रस्तसर्वाङ्गी सम्भ्रमोत्फुल्ललोचना ।
मृगीव शरविद्धाङ्गी कम्पसे चानुकम्पसे ॥ ३ ॥

---

(क) भण भण । कोऽस्यागमः ।

(ख) हं, साहसिकः ।

(ग) आ, अज्जुकायाः खल्वस्याकृतिः कर्मदारुणतयोद्वेजनीया संवृत्ता । हा धिग् मम कृते उभयं संशयितं संवृत्तं — तव शरीरं चारित्रं च ।

(घ) अपण्डितः खल्वसि । को हि नाम जीवितेन शरीरं विक्रष्येति । अथ कस्य गेहे इयं विश्वासवञ्चना कृता ।

---

आअज्जुआए इत्यादि । कर्मदारुणतया स्तेयकर्मक्रूरतया । उद्वेजनीया जुगुप्सनीया ।

उन्मत्तिके इत्यादयः हुमित्यन्ताश्चत्वारः संवादाः ।

विषादेत्यादि । कम्पसे भयाद् वेपसे, अनुकम्पसे च दयसे च अर्थाद् कुपितजनविषये ॥ ३ ॥

चेटी — (क) सच्चं भणाहि । सत्थवाहकुले साहसं करन्तेण तुए कोच्चि कुलउत्तो सत्थेण अत्थि परिक्खदो वावादिदो वा ।

गणिका — (ख) सुट्ठु, मए वि पुच्छिदव्वं एदाए पुच्छिदं ।

सज्जलकः — मदनिके ! एतावत् किं न पर्याप्तं, द्वितीयमप्यकार्यं करिष्यामि । न खल्वत्र शस्त्रेण कश्चित् परिक्षतो व्यापादितो वा ।

चेटी — (ग) सज्जळअ ! सच्चं ।

सज्जलकः — सत्यम् ।

चेटी — (घ) साहु सज्जळअ ! पिअं मे ।

सज्जलकः — किं किं प्रियमित्याह । ईदृशं मदनिके !

त्वत्स्नेहबद्धहृदयो हि करोम्यकार्यं
सन्तुष्टपूर्वपुरुषेऽपि कुले प्रसूतः ।
रक्षामि मन्मथगृहीतमिदं शरीरं
मित्रं च मां व्यपदिशस्यपरं च यासि ॥ ४ ॥

---

(क) सत्यं भण । सार्थवाहकुले साहसं कुर्वता त्वया कश्चित् कुलपुत्रः शस्त्रेणास्ति परिक्षतो व्यापादितो वा ।

(ख) सुष्ठु, मयापि प्रष्टव्यमेतया पृष्टम् ।

(ग) सज्जलक ! सत्यम् ।

(घ) साधु सज्जलक ! प्रियं मे ।

---

सच्चं भणाहि इत्यादयः षट् संवादाः ।

यदपरिक्षतः कश्चिच्चारुदत्तस्य गृहे, तन्मम प्रियमिति चेटीवाक्यात् तां चारुदत्तगृहगतजनविशेषानुरक्तां मन्यमानस्य सज्जलकस्येर्ष्यावचनं—किं किमित्यादि ।

त्वत्स्नेहेत्यादि । सन्तुष्टपूर्वपुरुषे यथास्थितविभवमात्रसन्तुष्टपूर्वपुरुषे । रक्षामि यत्नतो धारयामि । मन्मथगृहीतं त्वद्विषयमदनाविष्टम् । व्यपदिशसि वाचा कथयसि । अपरं यासि च यस्य चारुदत्तगृहवर्तिनः क्षेमं त्वं जिज्ञासितवती तमन्यं पुरुषमभिगच्छसि च ॥ ४ ॥

चेटी — (क) सज्जलअ ! सुणाहि । अज्जुआए अअं अलङ्कारो । (कर्णे) एवं विअ ।

सज्जलकः — एवम् ।

अज्ञानाद् या मया पूर्वं शाखा पत्रैर्वियोजिता ।
छायार्थी ग्रीष्मसन्तप्तस्तामेव पुनराश्रितः ॥ ५ ॥

गणिका — (ख) सन्तप्पदि त्ति तक्केमि एदेण अकय्यं किदं त्ति ।

सज्जलकः — मदनिके ! एवं गते किं कर्तव्यम् ।

चेटी — (ग) तहिं एव णिय्यादेहि, णहि मण्डइस्सदि अज्जुआ ।

सज्जलकः — अथेदानीं सोऽमर्षान्मां चोर इति रक्षिपुरुषैर्ग्राहयिष्यति चेदत्र किं करिष्यामि ।

---

(क) सज्जलक ! शृणु । अज्जुकाया अयमलङ्कारः । एवमिव ।

(ख) संतप्यत इति तर्कयामि एतेनाकार्यं कृतमिति ।

(ग) तत्रैव निर्यातय, नहि मण्डयिष्यत्यज्जुका ।

---

सज्जलअ इत्यादि । शृणु, अन्यथाग्रहेण मा स्म कुप्यः वस्तुतत्त्वं मयोच्यमानं श्रुत्वावधारयेत्यर्थः । एवमिवेति । शकारभीताया वसन्तसेनायाश्चारुदत्तशरणीकरणादिकं पूर्ववृत्तं कर्णे कथयतीत्यर्थः ।

एवमिति ।

अज्ञानादित्यादि । या शाखा मया बुद्धिमान्द्यात् पत्रैर्वियोजिता, सैव ग्रीष्मसन्तप्तेनच्छायार्थिना पुनः समाश्रितेत्यनेनाप्रस्तुतवाक्यार्थेन प्रतिबिम्बभूतेन वसन्तसेना तदीयसुवर्णभाण्डन्यासचौर्य-तदीयप्रियतमद्रोहाचरणाभ्यां मया पूर्वं कृतापकारेदानीं मदनतप्तेन मदनिकाख्यतच्चेटीप्रतिग्रहार्थिना समाश्रितेत्येवंरूपस्य बिम्बभूतस्य प्रकृतवाक्यार्थस्य प्रतीतेरप्रस्तुतप्रशंसाभेदोऽनालङ्कारो लक्षितं वा ॥ ५ ॥

सन्तप्पदित्ति इत्यादि ।

मदनिके इत्यादि ।

तहिमित्यादि । तत्रैव निर्यातय चारुदत्तगृह एव प्रत्यर्पय ।

अथेदानीमित्यादयो नखलु इत्यन्ता नव संवादाः ।

चेटी — (क) मा भाआहि भाआहि । कुळवुत्तो क्खु सो गुणाणं परितुस्सदि ।

गणिका — (ख) साहु भद्दे ! अवत्तव्वासि, अळङ्किदा विअ एदेण वअणेण ।

सज्जलकः — सर्वथा न शक्ष्याम्यहं तत्र गन्तुम् ।

चेटी — (ग) अअं अण्णो उवाओ ।

गणिका — (घ) एदे गुणा वेसवासस्स ।

सज्जलकः — कोऽन्य उपायः ।

चेटी — (ङ) णं तव रूवण्णा अज्जुआ अवि सत्थवाहपुत्तो अ ।

सज्जलकः — न खलु ।

चेटी — (च) तेण हि इमं दाव अळङ्कारं तस्स सत्थवाहपुत्तस्स वअणादो अज्जुआए णिय्यादेहि । एवं च किदे तुवं रक्खिदो, सो अय्यो अ अणिव्विण्णो भविस्सदि । अहं च पीडिदा ण भविस्सं । आदु अज्जुअं च पुणो वञ्चिअ पुणो एव्व दासभावो भवे ।

---

(क) मा बिभीहि बिभीहि । कुलपुत्रः खलु स गुणानां परितुष्यति ।

(ख) साधु भद्रे ! अवक्तव्यासि, अलङ्कृतेवैतेन वचनेन ।

(ग) अयमन्य उपायः ।

(घ) एते गुणा वेशवासस्य ।

(ङ) ननु तव रूपज्ञाज्जुकापि सार्थवाहपुत्रश्च ।

(च) तेन हीमं तावदलङ्कारं तस्य सार्थवाहपुत्रस्य वचनादज्जुकायै निर्यातय । एवं च कृते त्वं रक्षितः, स आर्यश्चानिर्विण्णो भविष्यति । अहं च पीडिता न भविष्यामि । अथवा अज्जुकां च पुनर्वञ्चयित्वा पुनरेव दासभावो भवेत् ।

---

तेणहीत्यादि । निर्यातय अर्पय । अनिर्विण्णः आशायुक्तः । अज्जुकायै निर्यातनमकृत्वा तस्या अपि वञ्चनपक्षे दासभावादनिर्मोक्ष एव स्यादित्याह—आदु इत्यादि ।

सज्जलकः — मदनिके ! प्रीतोऽस्मि ।

गणिका — (क) भोदु अब्भन्तरं पविसिअ उवविसामि । (तथा करोति ।)

चेटी — (ख) सज्जळअ ! आअच्छ, कामदेवउळे मं पडिवाळेहि । अहं ओसरं जाणिअ अज्जुआए णिवेदेमि ।

सज्जलकः — बाढम् । (निष्क्रान्तः ।)

(ततः प्रविशत्यपरा चेटी ।)

चेटी — (ग) सुहं अज्जुआए । एसो सत्थवाहपुत्तस्स सआसादो कोवि बह्मणो आअदो अज्जुअं पेक्खिदुं ।

गणिका — (सादरम्) (घ) गच्छ, सिग्घं पवेसेहि णं ।

चेटी — (ङ) तह । (उपसृत्य) एदु एदु अय्यो ।

(प्रविश्य)

विदूषकः — (सर्वतो विलोक्य) (च) अहो गणिआवाडस्स सस्सिरीअदा । णाणापट्टणसमागदेहि आआमिएहि पुतआ वाईअन्ति । संओजअन्ति अ आहारप्पआराणि । वीणा वादीअन्ति । सुवण्णआरा अळङ्कारप्पआराणि आदरेण जोजअन्ति ।

---

(क) भवत्वभ्यन्तरं प्रविश्योपविशामि ।

(ख) सज्जलक ! आगच्छ, कामदेवकुले मां प्रतिपालय । अहमवसरं ज्ञात्वाज्जुकायै निवेदयामि ।

(ग) सुखमज्जुकायाः । एष सार्थवाहपुत्रस्य सकाशात् कश्चिद् ब्राह्मण आगतोऽज्जुकां द्रष्टुम् ।

(घ) गच्छ, शीघ्रं प्रवेशयैनम् ।

(ङ) तथा । एत्वेत्वार्यः ।

(च) अहो गणिकावाटस्य सश्रीकता । नानापट्टणसमागतैरागमिकैः पुस्त-

---

मदनिके प्रीतोऽस्मीत्यादयः सप्त संवादाः ।

अहो इत्यादि । आगमिकैः शास्त्रज्ञैः ।

चेटी — (क) एसा अज्जुआ। उवसप्पदु अय्यो।

विदूषकः — (उपगम्य) (ख) सोत्थि होदीए।

गणिका — (ग) साअदं अय्यस्स। हञ्जे! आसणं अय्यस्स पादोदअं च।

विदूषकः — (आत्मगतम्) (घ) सव्वं आणेदु वज्जिअ भोअणं।

चेटी — (ङ) जं अज्जुआ आणवेदि। (आसनं ददाति पादोदकं च।) उवविसदु अय्यो।

विदूषकः — (उपविश्य) (च) पडिच्छदु आसणं भोदी। अहं किञ्चि भणिदुं आअदो।

गणिका — (उपविश्य) (छ) अवहिदह्मि।

विदूषकः — (ज) केत्तिअमत्तं खु तस्स अलङ्कारस्स मुल्लप्पमाणं।

गणिका — (झ) किंणिमित्तं खु अय्यो पुच्छदि।

विदूषकः — (ञ) सुणादु भोदी। तत्तहोदो चारुदत्तस्स गुणप्पच्चा-

---

कानि वाच्यन्ते। संयोज्यन्ते चाहारप्रकाराः। वीणा वाद्यन्ते। सुवर्णकारा अलङ्कारप्रकारानादरेण योजयन्ति।

(क) एषाज्जुका। उपसर्पत्वार्यः।

(ख) स्वस्ति भवत्यै।

(ग) स्वागतमार्यस्य। हञ्जे! आसनमार्यस्य पादोदकं च।

(घ) सर्वमानयतु वर्जयित्वा भोजनम्।

(ङ) यदज्जुकाज्ञापयति। उपविशत्वार्यः।

(च) प्रतीच्छत्वासनं भवती। अहं किञ्चिद् भणितुमागतः।

(छ) अवहितास्मि।

(ज) कियन्मात्रं खलु तस्यालङ्कारस्य मूल्यप्रमाणम्।

(झ) किन्निमित्तं खल्वार्यः पृच्छति।

(ञ) शृणोतु भवती। तत्रभवतश्चारुदत्तस्य गुणप्रत्यायननिमित्तं खलु त्व-

---

एसा इत्यादयः द्वादश संवादाः।

अणणिमित्तं खु तुए अळङ्कारो तहिं णिक्खित्तो । सो तेण जूदे हारिदो ।

गणिका—(क) जूदे । जुज्जइ । तदो तदो ।

विदूषकः—(ख) तदो तस्स अळङ्कारस्स मुल्लभूदं इमं मुत्तावळिं पडिच्छदु भोदी ।

गणिका—(आत्मगतम्) (ग) धिक् खु गणिआभावं । लुद्धत्ति मं तुळअदि । जइ ण पडिच्छे, सो एव्व दोसो भविस्सदि । (प्रकाशम्) आणेदु अय्यो ।

विदूषकः—(घ) इदं गह्णदु भोदी ।

गणिका—(गृहीत्वा) (ङ) पडिच्छिदं तए त्ति अय्यो णिवेदेदु ।

विदूषकः—(आत्मगतम्) (च) कोवि उवआरो वि ण एदाए भणिदो । (प्रकाशम् ।) एवं होदु । (दत्त्वा निष्क्रान्तः ।)

गणिका—(छ) साहु चारुदत्त! साहु । भाअधेअपरिक्खित्तदाए दसाए माणावमाणं रक्खिदं ।

---

यालङ्कारस्तस्मिन् निक्षिप्तः । स तेन द्यूते हारितः ।

(क) द्यूते । युज्यते । ततस्ततः ।

(ख) ततस्तस्यालङ्कारस्य मूल्यभूतामिमां मुक्तावलीं प्रतीच्छतु भवती ।

(ग) धिक् खलु गणिकाभावम् । लुब्धेति मां तुलयति । यदि न प्रतीच्छामि, स एव दोषो भविष्यति । आनयत्वार्यः ।

(घ) इदं गृह्णातु भवती ।

(ङ) प्रतीष्टं तयेत्यार्यो निवेदयतु ।

(च) कोऽप्युपचारोऽपि नैतया भणितः । एवं भवतु ।

(छ) साधु चारुदत्त! साधु । भागधेयपरिक्षिप्तायां दशायां मानावमानं रक्षितम् ।

---

धिक् खु इत्यादि । स एव दोषः लुब्धत्वलक्षणः ।

इदं गह्णदु इत्यादयस्त्रयः संवादाः ।

साहु इत्यादि । मानावमानं रक्षितं मानो रक्षितः प्रच्युतेः परित्रातः, अ-

(प्रविश्य)

**मदनिका** — (क) अज्जुए! सत्थवाहपुत्तस्स सआसादो कोच्चि मणुस्सो आअदो इच्छइ अज्जुअं पेक्खिदुं।

**गणिका** — (ख) किं दिट्ठपुरुवो णवदंसणो वा।

**मदनिका** — (ग) अज्जुए! णहि, तस्सकेरओ त्ति मे पडिभादि।

**गणिका** — (घ) गच्छ, पवेसेहि णं।

**मदनिका** — (ङ) तह। (निष्क्रान्ता।)

**गणिका** — (च) अहो रमणिज्जदा अज्ज दिवसस्स।

(ततः प्रविशति मदनिका सज्जलकेन सह।)

**सज्जलकः** — कष्टा खल्वात्मशङ्का नाम,

यः कश्चिच्चकितगतिर्निरीक्षते मां सम्भ्रान्तो द्रुतमुपसर्पति स्थितो वा।
सर्वांस्तांस्तुलयति दोषतो मनो मे स्वैर्दोषैर्भवति हि शङ्कितो मनुष्यः॥ ६॥

---

(क) अज्जुके! सार्थवाहपुत्रस्य सकाशात् कश्चिद् मनुष्य आगत इच्छत्यज्जुकां द्रष्टुम्।

(ख) किं दृष्टपूर्वो नवदर्शनो वा।

(ग) अज्जुके! नहि, तदीय इति मे प्रतिभाति।

(घ) गच्छ, प्रवेशयैनम्।

(ङ) तथा।

(च) अहो रमणीयताद्य दिवसस्य।

---

वमानो रक्षितः प्रसज्यमानो वारितः। मानावमानितमिति पाठेऽप्ययमेवार्थः समाहारद्वन्द्वश्च।

अज्जुए सत्थवाहेत्यादयः षट् संवादाः।

कष्टेत्यादि। कष्टा क्लेशकारिणी।

यः कश्चिदिति। चकितगतिः मन्दगतिः, यः कश्चित्, मां निरीक्षते। यः कश्चित् सम्भ्रान्तः सन् द्रुतं क्षिप्रम् उपसर्पति अन्तिकमायाति, अथवा यः काश्चित् स्थितः निश्चलगतिर्भवति, तान् सर्वान् मम मनः, दोषतश्तुलयति

मदनिका — (क) एसा अज्जुआ । उवसप्पदु अय्यो ।

सज्जलकः — (उपसृत्य) सुखं भवत्यै ।

गणिका — (ख) साअदं अय्यस्स । हञ्जे! आसणं देदु अय्यस्स ।

सज्जलकः — भवतु भवतु । गृहीतमासनम् । त्वरिततरमनुष्ठेयं किञ्चित् कार्यमस्ति ।

गणिका — (ग) एवं, भणादु अय्यो ।

सज्जलकः — आर्यचारुदत्तेनास्मि प्रेषितः — यस्तावदलङ्कारो मम हस्ते निक्षिप्तः, स स्वसंभोगमलिनतया गृहस्यासान्निध्यात् कौटुम्बिकानां दुरारक्षः । तद् गृह्यताम् इति ।

गणिका — (घ) इमं तस्स चारुदत्तस्स देदु अय्यो ।

सज्जलकः — भवति! न खल्वहं गच्छामि ।

गणिका — (ङ) अहं जाणामि तस्स गेहे साहसं करिअ आणीदो अअं अलङ्कारो । तस्स गुणाणि अणुकम्पेदु अय्यो ।

---

(क) एषाज्जुका । उपसर्पत्वार्यः ।

(ख) स्वागतमार्यस्य । हञ्जे! आसनं दीयतामार्याय ।

(ग) एवं, भणत्वार्यः ।

(घ) इमं तस्मै चारुदत्ताय ददात्वार्यः ।

(ङ) अहं जानामि तस्य गेहे साहसं कृत्वानीतोऽयमलङ्कारः । तस्य गुणाननुकम्पतामार्यः ।

---

त्मग्रहणाभिसन्धिदोषेण युक्तानवधारयति । तत्र सामान्यन्यायमुपन्यस्यति—मनुष्यः, स्वैर्दोषैर्हेतुभिः, शङ्कितः परस्मिन् जने जातशङ्कः, भवति हि ॥ ६ ॥

एसा अज्जुआ इत्यादयः भणादु अय्यो इत्यन्ताः पञ्च संवादाः ।

आर्यचारुदत्तेनेति । दुरारक्षः दुःखेन आरक्षितुं शक्यः, न तु सुखेन ।

इममित्यादि । इममलङ्कारं मुक्तावलीम् ।

भवतीत्यादि ।

अहमित्यादि । साहसं चौर्यरूपम् ।

सज्जलकः — (आत्मगतम्) कथं विदितोऽस्म्यनया ।

गणिका — (क) को एत्थ, पवहणं दाव अय्यस्स ।

मदनिका — (ख) णेमिसद्दो विअ सुणीअदि । आअदेण पवहणेण होदव्वं ।

गणिका — (ग) (स्वैराभरणैर्मदनिकामलङ्कृत्य) आरुहदु अय्या अय्याए सह पवहणं ।

मदनिका — (घ) अज्जुए ! किं एदं ।

गणिका — (ङ) मा खु मा खु एवं मन्तिअ । अय्या खु सि दाणिं संवुत्ता । गह्णदु अय्यो । (मदनिकां गृहीत्वा सज्जलकाय प्रयच्छति ।)

सज्जलकः — (आत्मगतम्) भोः! कदा खल्वस्याः प्रतिकर्तव्यं भविष्यति । अथवा, शान्तं शान्तं पापम् ।

नरः प्रत्युपकारार्थी विपत्तौ लभते फलम् ।
द्विषतामेव कालोऽस्तु योऽस्या भवतु तस्य वा ॥ ७ ॥

---

(क) कोऽत्र, प्रवहणं तावदार्यस्य ।

(ख) नेमिशब्द इव श्रूयते । आगतेन प्रवहणेन भवितव्यम् ।

(ग) आरोहत्वार्या आर्यया सह प्रवहणम् ।

(घ) अज्जुके ! किमेतत् ।

(ङ) मा खलु मा खल्वेवं मन्त्रयित्वा । आर्या खल्वसीदानीं संवृत्ता । गृह्णात्वार्यः ।

---

कथमित्यादयः षट् संवादाः ।

भो इत्यादि । भोशब्दश्चिन्तायाम् । प्रतिकर्तव्यं भविष्यति प्रत्युपकारः कर्तव्यो भविष्यतीत्यर्थः । पापं प्रत्युपचिकीर्षाप्रसक्तं किल्बिषम् ।

नर इत्यादि । प्रत्युपकारार्थी, विपत्तौ उपकर्तुर्विपत्काल इत्यर्थः । फलं प्रत्युपकारमनोरथसिद्धिं, लभते । अतोऽस्याः प्रत्युपकारयोग्यं विपत्कालं न प्रार्थय इत्यभिप्रायः । मद्विधेष्वेव हितमस्याः प्रार्थयते—योऽस्या वसन्तसेनायाः, तस्य चारुदत्तस्य वा प्रत्युपकारकरणयोग्यो विपत्कालो भवतु, स द्विषतामेवास्तु दा-

(तया सह निष्क्रान्तः सज्जलकः ।)

गणिका —(क) चउरिए! ।

(प्रविश्य)

चेटी —(ख) अज्जुए! इआहि ।

गणिका —(ग) हञ्जे! पेक्ख जागरन्तीए मए सिविणो दिट्ठो एव्वं ।

चेटी —(घ) पिअं मे, अमुदंकणाडअं संवुत्तं ।

गणिका —(ङ) एहि इमं अलङ्कारं गह्णिअ अय्यचारुदत्तं अभिसारिस्सामो ।

चेटी —(च) अज्जुए! तह । एदं पुण अभिसारिआसहाअभूदं दुद्दिणं उण्णमिदं ।

---

(क) चतुरिके! ।

(ख) अज्जुके! इयमस्मि ।

(ग) हञ्जे! पश्य जाग्रत्या मया स्वप्नो दृष्ट एवम् ।

(घ) प्रियं मे, अमृताङ्कनाटकं संवृत्तम् ।

(ङ) एहीममलंकारं गृहीत्वार्यचारुदत्तमभिसरिष्यावः ।

(च) अज्जुके! तथा । एतत् पुनरभिसारिकासहायभूतं दुर्दिनमुन्नमितम् ।

---

तृणमिव फलतु शत्रुध्येव फलं दर्शयतु, न पुनरस्तां वा तस्मिन् वेत्यर्थः । अनया, च प्रार्थनया वसन्तसेनाचारुदत्तद्वेषिणः तद्विपदुत्पादनप्रवृत्तस्य शकारस्य स्वप्रवृत्तिवैफल्यपूर्वकविपत्प्राप्तिलक्षणः कथावस्तुशेष उपरितनेष्वङ्केषु घटनीयः सूचितः । ते पुनरङ्का नाद्याप्युपलब्धाः ॥ ७ ॥

चउरिए इत्यादी द्वौ संवादौ ।

हञ्जे इत्यादि । एवं स्वप्नो दृष्टः इत्थमसम्भावितार्थघटनमनुभूतमित्यर्थः ।

पिअं मे इत्यादयः पञ्च संवादाः ।

गणिका —(क) हदासे! मा हु बड्ढावेहि

चेटी —(ख) एदु एदु अज्जुआ।

(निष्क्रान्तेः)

चतुर्थोऽङ्कः।

---

(क) हताशे! माखलु वर्धय।

(ख) एत्वेत्वज्जुका।

---

निष्क्रान्ते इति। अभिसरणप्रस्थानेन चतुर्थोऽङ्कः परिसमापितः॥

ताम्रपर्ण्यमृतार्द्रपूतत्तरुवाग्रहारगतपाकिमा
वह्निमूलकरामवर्मकुलहोस्वरक्षितिपरक्षितः।
भासनाटकमण्डले गुणगणाकरे गणपतिः सुधी-
श्चारुदत्तसमाह्वयं प्रकरणोत्तमं विवृतवानिति॥

वाग्देव्या वरिवस्यैव यदिदं मम भाषितम्।
भूयात्तस्यैतया नित्यं सुप्रसन्ना सरस्वती॥

इति श्रीमदनन्तशयनवास्तव्यस्य ताम्रपर्णीतीरवर्तितरुवाग्रहारा-
भिजनस्य श्रीसीताम्बाश्रीरामसुब्रह्मण्यार्यसूनोः
महामहोपाध्यायगणपतिशास्त्रिणः कृतिषु
चारुदत्तव्याख्यानं सम्पूर्णम्॥

शुभं भूयात्॥

—:o:—

# श्लोकानुक्रमणिका ।

# वृत्तलक्षणम् ।

'उक्तं वसन्ततिलकं तभजा जगौ गः ।'

'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।'

'जतौ तु वंशस्थमुदीरितं जरौ ।'

'स्यादिन्द्रवज्रा यदि तौ जगौ गः ।'
'उपेन्द्रवज्रा जतजास्ततो गौ ।' (इत्यनयोरुपजातिः ।)

'यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥'

'ननमयययुतेयं मालिनी भोगिलोकैः ।'

'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ।'

'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ।'

'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः ।'

---

# प्रकरणादिलक्षणम् ।

प्रकरणं — 'यत्रेतिवृत्तमुत्पाद्यं धीरशान्तश्च नायकः ।
रसः प्रधानः शृङ्गारः शेषं नाटकवद् भवेत् ॥
तत्तु प्रकरणं शुद्धं धूर्तं मिश्रं च तत् त्रिधा ।'
'मिश्रं तत् कुलजावेश्ये कल्पिते यत्र नायिके ।
धूर्तशुद्रकसोपेतं —'

पूर्वरङ्गः — 'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥'

नान्दी — 'आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥'

सूत्रधारः — 'आसूत्रयन् गुणान् नेतुः कवेरपि च वस्तुनः ।
रङ्गप्रसाधनप्रौढः सूत्रधार इहोदितः ॥'

नेपथ्यं — 'कुशीलवकुटुम्बस्य स्थलं नेपथ्यमुच्यते ।'

प्रस्तावना स्थापना वा } 'सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् ।
स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत् तदामुखम् ॥
प्रस्तावना वा'

प्रकाशस्वगते — 'सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम् ।'

अपवारितम् — 'रहस्यं कथ्यतेऽन्यस्य परावृत्यापवारितम् ।'

शृङ्गारः — 'रम्यदेशकलाकालवेषभोगादिसेवनैः ।
प्रमोदात्मा रतिः सैव यूनोरन्योन्यरक्तयोः ॥
प्रहृष्यमाणा शृङ्गारो मधुराङ्गविचेष्टितैः ।'

विदूषकः — 'विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः ।'

शकारः — 'मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्तः ।
सोऽयमनूढाभ्राता राज्ञः स्यालः शकार इत्युक्तः ॥'

———:o:———

# FOR SALE

---

*The works of Bhâsa with the commentaries of Mahâmahôpâdhyâya T. Ganapati Sâstri:—*

| | Rs. | As. | P. |
|---|---|---|---|
| Svapnavasavadatta | 1 | 8 | 0 |
| Pancharatra | 1 | 0 | 0 |
| Madhyamavyayoga | 0 | 8 | 0 |
| Dutavakya | 0 | 8 | 0 |
| Pratijnayaugandharayana | 1 | 8 | 0 |
| Charudatta | 1 | 0 | 0 |

All the other works of Bhasa will be published shortly with the commentaries of the same commentator.

---

*Other work by the same commentator.*

| | | | |
|---|---|---|---|
| भारतानुवर्णनम् (A Description of India) | 1 | 0 | 0 |

*Can be had of:—*

T. G. Ramasubba Aiyar B. A.,
*Trivandrum, Chalay.*

or

**L. Ramaswamy Sastri,**
*Managing Proprietor,*
SRIDHARA POWER PRESS,
**Trivandrum.**

महाकविश्रीभासमुनिविरचितम्

# अभिषेकनाटकम् ।

महोपाध्याय पं॰ वी॰ वेङ्कटराम-
शास्त्रिणा विद्याभूषणेन संपादितं
व्याख्यया च सनाथीकृतम्

तच्चेदं

लवपुरीयपञ्जाबसंस्कृतपुस्तकालयाध्यक्षैः

मोतीलाल बनारसीदास

इत्येतैः स्वीये "मुम्बई संस्कृत" इत्याख्ये मुद्रणालये
सम्मुद्रय प्रकाशितम् ।

संवत १९८७.

# INTRODUCTION.

In 1914, the text alone of Abhiṣekanāṭaka* was published in the Trivendrum Sanskrit Series, and the work was included among Bhāsa's Nāṭakacakra. This is the publication of the same work in an expanded form with a lucid commentary, English notes translation, etc , In addition to the text already published at Trivendrum, I have been able to use about five more Mss in the preparation of the present edition. I have also given the readings of these different Mss. in foot-notes Among these five Mss., four belong to Travancore and are on palm-leaves, written in early Malayālam Script. The remaining one is a paper Ms. and it is the property of the Government Oriental Mss. Library, Egmore, Madras. This Ms. which consists of three plays, Pratimānāṭaka, Abhiṣeknāṭaka, Āścaryacūḍāmaṇināṭaka, is marked in the Library with the title of Rāmanāṭaka.† As a result of my personal experience in the private Ms. Libraries in Travancore, I know it is difficult to get a separate Ms. for Abhiṣekanāṭaka alone without containing the two other dramas which treat the story of the Rāmāyaṇa, viz., **प्रतिमानाटक** and **आश्चर्यचूडामणि नाटक।** I have corrected the readings of the text with the help of these new Mss. It is also notable that the paper Ms. alone contains some valuable readings which are not to be found in the other four Mss. The name Abhiṣekanāṭaka is given to this play, because it ends with the installation of ŚrīRāma,

---

* Trivendrum Sanskrit Series No. 26.

† Ramanataka contains प्रतिमा, अभिषेक and चूडामणि। It was copied in Devanagari script. The measurement of original Ms. is given on the front page of this transcription as $8\frac{3}{4} \times 5\frac{1}{2}$. It is numbered in the Government Oriental Mss. Library, Madras, as 23-I. 43, and 187. This contains some notable readings which differ from the printed text of Dr. Ganapati Sastrin, and I have designated this as क.

after he had received back his wife Sītā from the God Agni. This play also like the other plays Svapnavāsavadatta, Nāgānanda, Saṃvaraṇa, Dhanañjaya, Kalyāṇasaughandhika, etc., was enacted for so many years in the temple-halls in Kerala by the hereditary actors, called Cakyārs. But with the lapse of time, and the dwindling down of Sanśkrit Culture and with no king or lord to patronize the ancient Indian scenic art, the hereditary actors of Kerala have considerably fallen down from their professional skill, and today very few of the Cakyar families can be seen with any pretention to their professional talents.

## *THE PLOT*

The subject-matter of the Drama is the story of the Rāmāyaṇa, as related is Kiṣkindhakāṇḍa, Sundarakāṇḍa and Yuddhakāṇḍa, and the installation of Rāma by the Gods, at the end with the permission of Daśaratha.

*ACT. I.* Rāma is wandering in the woods in search of his wife Sītā, who has been forcibly and secretly carried away by Rāvaṇa. Sugrīva is driven away from his country by his elder brother Vāli, the chief of Kiṣkindhā, and is seeking assistance to kill Vāli in the battle. Rāma and Sugrīva become friends. Sugrīva tells Rāma that if he will assist him to kill Vāli and to make him king of Kiṣkindhā, he would assist Rāma with his monkey-army to find out Sīta's whereabouts. Rāma enters into the compact. Both of them go to Kiṣkindhā and Rāma slays Vāli in the course of the battle. Sugrīva is installed in the place of Vāli as the chief of Kiṣkindha.

*ACT II.* Sugrīva directs many of his Vānara-chiefs to several places in search of Sīta, but all of them return in vain. But Hanumān, the monkey-chief of extraordinary powers, meets Jaṭāyu (the semi-divine bird who is a great friend of King Daśaratha) on his way, and learning from him that Sīta had been

carried away by Rāvaṇa, crosses the ocean Laṅkā In Laṅkā, he sees Sīta sad in exile, surrounded by Rākṣasa-women, in the grove of the Aśoka trees. He also understands that Rāvaṇa is very much troubling Sīta, by using various tricks, to make her his own. Hanumān informs Sīta of Rāma's present condition and assures her that he will go back to Rāma, tell him her whereabouts, and gathering great army, will return to Laṅkā, destroy the Rākṣasa-hosts, and get back Sīta.

*ACT III.* Hanumān before his return, with a view to inform Rāvana of his arrival at Laṅkā, performs some heroic deeds. At first he destroys the grove of Aśoka trees which is very much prized by Rāvana. On hearing this news Rāvana appears on the scene, commands some of his chiefs to capture Hanumān. The chiefs, the soldiers, and Akṣakumāra, who go to capture him are all slain by Hanumān. At last Indrajit captures Hanumān. At this time Vibhīṣana, the brother of Rāvana comes to him and expresses his strong disapprobation of Rāvana's act. As an answer to the questions by Rāvana, Hanumān states that he is Rāmadūta going back to Rāma to tell Rāvana's conduct towards Sīta. At last he boldly tells him that Rāma and his army of monkeys will march towards Laṅkā to destroy the whole of Rākṣasakula. Vibhīṣana again condemns his brother's actions. Rāvana is very angry with his brother. They part as enemies.

*ACT IV.* Rāma starts to Laṅkā with his monkey-army for battle. Vibhīṣana who is not on good terms with his brother, has been driven away from his place, and comes to take shelter with Rāma. All of them cross the sea reach Laṅkā, and encamp at Trikūṭa.

*ACT V.* Producing two severed-heads of some unknown persons, Rāvana frightens Sīta by representing to her that they are the heads of Rāma and Lakṣmana, and then appeals to her to become his wife. At this time the battle is begun,

and Rāvana hears of the death of his son Indrajit, and starts angrily to fight with Rama.

*ACT VI* Three Vidyādharas (semi-divine beings) who are witnessing the fight of Rāma and Rāvaṇa describe the particulars of the fight.

*ACT VII.* In battle, all of the Rākṣasas die. Rāma instals his protege Vibhīṣana, in the place of Rāvana as Laṅkeśvara. Vibhīsana sends back Sīta to her husband with all honours. Rāma does not accept her, because she has lived in a Rāksasa's house. With great sorrow Sīta jumped into the fire, and the fire-god (Agni) who knows of Sīta's purity, does not burn her, but takes her to Rama praising her chastity. Then Rāma accepts her. Rāma is installed on the throne by the Gods, with the permission of Daśaratha.

## *THE AUTHOR.*

The cycle of 13 dramas Svapnavāsavadatta, Avimāraka, Bālacarita, Pratijñāyaugandharāyana, Dūtavākya, Pratimānāṭaka, Abhiṣekanaṭaka, Karṇabhāra, Ūrubhaṅga, Madhyamavyāyoga, Dūtaghaṭotkaca, Pañcarātra and Cārudatta is called Bhāsanāṭakacakra. These were first published about fifteen years ago by the late Dr. Ganapati Śāstri, in the Trivendrum Sanskrit Series, and the authorship of these plays has been attributed to Bhāsamahākavi, who is referred to with respect and admiration by such great poets as Kālidāsa, Bāṇa, etc. There has been from the time of the publication of these works, great difference of opinion about the authorship of these plays and the discussions arising out therefrom are still going on. Some critics oppose the authorship of Bhāsa. Whereas some others admire these works as an example of Sanskrit Drama in the Pre-Kālidāsa days. A third group of critics relying more upon the nature of Prākṛt, various peculiar usages, diction, phraseology, and other pieces of internal evidence, conclude that these plays belong to about the first century A. D. The opinions of those who support the Bhāsa-theory are mentioned below :—

I. (1) All the 13 plays while differing from all other published works of a similar nature present a uniformity of style, diction, etc. The same śloka and passages are found to occur in many of the plays. For instance एवमार्यमिश्रान् विज्ञापयामि। अये किन्नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग पश्यामि । this passage occurs without any change in Svapnavāsavadatta, Bālacarita,* Madhymavyāgoga, Dūtavakya Pañcarātra, Ūrubhaṅga, and Dūtaghaṭotkaca.

भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥

is seen in the plays Pratijñayaugandharāyana, Avimāraka and Abhiṣeka, and the latter of the śloka occurs in Pañcarātra also 'किं वक्ष्यतीति हृदयं परिशङ्कितं मे' this portion occurs in the sixth act of Svapna and also in the fourth act of Abhiṣeka. (The passages in other dramas which bear the similarities to Abhiṣeka are given separately).

In all the 13 plays.

(2) the sentence नान्द्यन्ते ततः प्रविशति सूत्रधारः is to be seen before the benedictory verse.

(3) the word स्थापना...........is used instead of प्रस्तावना।

(4) The Bharatvākya contains the प्रशस्ति as राजसिंहः प्रशास्तु नः ।

Taking into consideration the above points it leads one to conclude that these 13 dramas are the work of one and the

* One Balacarita nataka, which treats the story of Srikrisna, has been mentioned by Ilankovadigal in Cilappadikaram, an ancient Tamil poem belonging to the second centuary A. D., in the following manner:—
"mayavanudan rammu nadiya valacaritai natakangalil venedunkat pinnai yodadiya kuravai yadutum."
(Cilapyadikaram edited by M. Svaminatha Aiyer. 1920 Madras, page 442.)

same person. As the author of Svapna which is one of these 13 dramas, has been stated as Bhāsa by Rājaśekhara in his Sūktimuktāvali as seen from the following quotation:

भासनाटकचक्रेपि च्छेकैः क्षिप्ते परीक्षितुम् ।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥

it is inferred that all these plays are the production of Bhāsa.

The fact that Kālidāsa in his Mālavikāgnimitra and Bāna in his Harṣacarita have sung the praise of Bhāsa goes to prove that Bhāsa is prior to them. Besides the portions from Svapna have been referred to by Vandyaghaṭīyasarvānanda (1159 A. D.) in his Amarakośaṭīkāsarvasva, by Ācaryābhinavaguptapada (10th century A. D.) in his Nāṭyavedavivṛti, by Vāmana in his Kāvyalaṅkārasūtravṛtti, and by Śāradātanaya in his Bhāvaprakāśa.

In the 12th century A. D. a work called Pṛthvīrājacaritakāvya was compiled by Jayānaka. The commentator of this work, by name Jonarāja in his commentary to the third verse of the first canto styles Bhāsa as a Muni. Therefore it is but natural that certain archaic usages peculiar to the works of Munis in violation of the rules of Pāṇini are to be found in Bhāsa's work too. The following are some of the illustrations taken from Abhiṣekanāṭaka

(1) वीजन्ति
(2) वीजन्तः } (act I verse. 1.) अत्रावैधो णिज्लोपः कृतः ।

(3) समाश्वासितुम् (act VII verse. 1.) Do.

(4) प्रत्याययति (act II verse. 24.) प्रत्येतीत्यर्थे प्रत्याङ्पूर्वोऽयतिरप्रसिद्ध इह प्रयुक्तः । अयतेरात्मनेपदं च न कृतम् ।

(5) व्रस्ता ते हृदयं (act VII verse. 211.) शार्दूलविक्रीडिते प्रथमपादान्ते लघोर्गुरुत्वमाश्रितम् । एवंजातीयकमनेकमस्ति ।

As these dramas do not observe the principles laid down by Bharata, said to be the author of Nāṭyaśāstra it is also inferred that Bhāsa is prior to Bharata. The Death-Scene has been exhibited in Abhiṣekanāṭaka and it is prohibited by Bharata.

दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् ।
संरोधं भोजनं स्नानं सुरतं चानुलेपनम् ॥
अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ।

II. The following are the arguments advanced by those that hold that Bhāsa is not the author of these plays:—

(1) The verse भासनाटकचक्रेपि etc. ............................ which is quoted as an authority to prove that the play Svapnavāsavadatta is written by Bhāsa, when read together with the preceeding and the following verses appears to be inconsistent, and an interpolation. It is also stated in this context that the plays Nāgānanda, Priyadarśikā, and Ratnāvalī, were written by Bhāsa.

(2) The reference to Medhātithi's Manubhāṣya a work proved to belong to the tenth century A D. in the Pratimānāṭaka मेधातिथेर्न्यायशास्त्रं ................................ gives room to infer that these works belong to tenth century A. D. or to a date later than that.

(3) The passages referred to and quoted from Svapnavāsavadatta by Sarvānanda in his Amarakośaṭīkāsarvasva by Abhinavagupta in his Locana, by Ramachandra Gunacandra in theirNāṭyadarpana, by Sagaranandi in his Nāṭakalakṣanaratnakosa, and by Śāradātanya in his Bhāvaprakāśa, are not to be found in the play published in the Trivendrum Sanskrit Series and as such it is possible that the Svapnavāsavadatta written by Bhāsa is a completely different one and has yet to be discovered. The Trivendrum Svapnavāsavadatta is written by a Kerala Poet in accordance with the principles current in the Kerala stage and the very name Svapnavāsavadatta is open to objection.

(4) This play is really more widely known as Svapnanāṭaka, and Vāsavadatta nātikā.

(5) The style of acting and idioms prove Kerala to be the brith-place of these plays.

(6) The fact that each act of these plays bears a separate name such as अशोकवनिकाङ्क, शेफालिकाङ्क, वालिवधाङ्क, स्वप्नाङ्क etc. indicates that these are adaptations of a Kerala-playwright.

(7) The absence of any mention regarding the name of the work or of its writers, or the kind of dramatic composition in the Sthāpanā also goes to show that these works had neither a definite shape nor a name or author.

III. In the Śākuntalavyākhyā an unpublished manuscript preserved in the Government Oriental Mss. Library, Madras, many quotations from Svapnavāsavadatta are found and these are to be seen without any change in the Trivendrum play, and therefore the name given to that play as Svapnavāsavadatta is indisputable.

But the thirteen plays have been attributed to Bhāsa relying more upon the uniformity of style and mutual resemblance. So far as Abhiṣekanāṭaka is concerned it has to be stated that it resembles more the play Āścaryacūḍāmaṇi by Śaktibhadrakavi. This author was a Kerala poet and a disciple of Ādi-Śaṅkara and the writer of many Tantric works such as Sārasaṃgraha. He was also known by the name Gīrvāṇendra. Hence, that atleast Abiṣekanaṭaka was written by Śaktibhadra also worthy of consideration. The following portions will show the close resemblance between Abhiṣekanāṭaka and Āścaryacūḍāmani.

I

There are many points of similarity to Bhāsa's work in Abhijñānaśākuntala the best known work of Kālidāsa. For example a śloka in the fourth act of Abhiseka runs thus:—

यस्यां न प्रियमण्डनापि महिषी देवस्य मन्दोदरी
स्नेहाल्लुम्पति पल्लवान्न च पुनर्वीजन्ति यस्यां भयात् ।
वीजन्तो मलयानिला अपि करैरस्पृष्टबालद्रुमा
सेयं शक्ररिपोरशोकवनिका भग्नेति विज्ञाप्यताम् ॥

There is a similar verse in the fourth act of Abhijñāna-śākuntala.

पातुं न प्रथमं व्यवस्यति पयो युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥

Here it may be observed that there is not only similarity of ideas between the two ślokas but even the same sweet and melodious expressions, such as **प्रियमण्डनापि, स्नेहात्, पल्लवान् सेयं** are used by Kālidāsa also.

II

The discourse of the Vidyādhara in the sixth act of Uttararāmacarita which follows a similar one in the sixth act of Abhiṣekanāṭaka.

III

*Abhiṣeka*
act III

(ततः प्रविशति शंकुकर्णः)
शंकु--क इह भोः काञ्चनतोरणद्वारमशून्यं कुरुते ।
(प्रविश्य)
प्रतीहारी--अय्य अहं विजआ । किं करीअदु ।
शंकु--विजये निवेद्यतां निवेद्यतां
etc.

*Svapna*
act VI opens

(ततः प्रविशति काञ्चुकीयः)
काञ्चु--क इह भोः काञ्चनतोरणद्वारमशून्यं कुरुते ।
(प्रविश्य)
प्रतीहारी--अय्य अहं विजआ । किं करीअदु ।
काञ्चु--भवति निवेद्यतां निवेद्यतां
etc.

IV

act I

वाली--(आचम्य) परित्यजन्तीव मां प्राणाः । इमा गंगाप्रभृतयो

Ūrubhaṅga

राजा--परित्यजन्ति मे प्राणाः... ...। इमा उर्वश्यादयोऽप्सरसो मा-

महानद्य एता उर्वश्याद्योऽप्सरसो मामभिगताः। एष सहस्रहंसप्रयुक्तो वीरवाही विमानः कालेन प्रेषितो मां नेतुमागतः। भवतु अयमयमागच्छामि।

(स्वर्गं गतः)

मभिगताः। इमे मूर्तिमन्तो महार्णवाः। एता गंगाप्रभृतयो महानद्यः। एष सहस्रहंसप्रयुक्तो मां नेतुं वीरवाही विमानः कालेन प्रेषितः। अयमयमागच्छामि।

(स्वर्गं गतः)

V

act V verse. 13.

(१) हा वत्स सर्वजगतां ज्वरकृत्कृतास्त्र हा वत्स वासवजिदानतवैरिचक्र। हा वत्स वीरगुरुवत्सल युद्धशौण्ड हा वत्स मामिह विहाय गतोऽसि कस्मात्॥

*Pratimānāṭaka*

act II verse. 4.

हा वत्स राम जगतां नयनाभिराम हा वत्स लक्ष्मण सलक्षणसर्वगात्र। हा साध्वि मैथिलि पतिस्थितचित्तवृत्ते हा हा गताः किल वनं बत मे तनूजाः॥

(२) धर्मस्नेहान्तरे न्यस्ता this part of a śloka is seen in both the second act of Pratimā and in the seventh act of Abhiṣekanāṭaka.

VI

There are interesting parallelisms between the Cūḍāmaṇi and Abhiṣeka in particular.

page. 28

(नेपथ्ये)

(१) जयतु देवः जयतु लङ्केश्वरः। जयतु स्वामी। जयतु महाराजः। दश नाडिकाः पूर्णाः। अतिक्रामति स्नानवेला। इत इतो महाराजः।

(निष्क्रान्तः सपरिवारो रावणः)

Āścaryacūḍāmaṇi.

(नेपथ्ये)

जयतु स्वामी। जयतु लङ्केश्वरः। जयतु भद्रमुखः। दश नाडिकाः पूर्णाः। अतिक्रामति स्नानवेला। इत इतो महाराजः।

(निष्क्रान्तो रावणः सपरिवारः)

(२) page. 27

रावणः–ननु देवि। हहह अहो पतिव्रतायास्तेजः।

act V

रावणः–ननु देवि चारित्रं तव किमिदं पतिव्रतायाः।

(३) page 21.

(ततः प्रविशति हनुमानङ्गुलीयकहस्तः)

act VI

(ततः प्रविशति हनुमानङ्गुलीयकहस्तः)

| | |
|---|---|
| हनु-अहो रावणभवनस्य विन्यासः । | हनु--अहो रावणभवनस्य परा लक्ष्मीः । |

(4) Rāvaṇa, while thinking of Sītā talks of the moon in both the plays.

(5) Sītā feels abashed (Vrīḍita) as she does in the Cūḍāmani.

(6) page. 30

| | |
|---|---|
| सीता-भद्द कहं तुह्मेहि अय्यउत्तस्स संगमो जादो । | सीता-कदमेण उवाएण अय्यउत्तेण संसग्गो जादो । |
| हनु-भवति श्रूयताम् । | हनु-शृणोतु स्वामिनी । |
| सीता-अहो अअरुणा क्खु इस्सरा etc. | सीता-अहो अअरुणा खु इस्सरा etc. |

(7) page. 32. act VI

| | |
|---|---|
| सीता-अय्यउत्तो जह सोअपरवसो ण होइ, तह मे उत्तन्तं भणेहि । | सीता-अय्यउत्तो जह सोअपरवसो ण होइ तह मे पवुत्तिं भणेहि। |

(8) page. 60. act V

| | |
|---|---|
| सीता-सव्वहा इस्सरा सन्ति करन्तु । | सीता-सव्वदा इस्सरा सन्ति करन्तु । |

(9) page. 75.

| | |
|---|---|
| रामः-हत्वा रावणमाहवे etc. | रामः-हत्वा बालिनमाहवे etc. |

(10) page. 77. act VII

| | |
|---|---|
| लक्ष्म-आश्चर्यमाश्चर्यम् । | लक्ष्म-आश्चर्यमाश्चर्यम् । |
| रामः-लक्ष्मण अस्याः पतिव्रतायाः छन्दमनुतिष्ठ । | रामः-लक्ष्मण अस्याः पतिव्रतायाः छन्दमनुतिष्ठ । |
| लक्ष्म-यदाज्ञापयत्यार्यः । | लक्ष्म-यदाज्ञापयत्यार्यः । |

(11) page. 79

| | |
|---|---|
| (नेपथ्ये दिव्यगन्धर्वा गायन्ति) | (नेपथ्ये दिव्यगन्धर्वा गायन्ति) |

The gāna is identical in ideas in both.

(12) page. 79

बाढं प्रथमः कल्पः and अहोतुखलु are very common words रामः-जानतापि च वैदेह्याः etc. रामः—The verse शङ्कितासि

मया देवि etc is not dissimilar in idea.

(13) page. 81

यमवरुणकुबेरवासवाद्यैस्त्रिदशगणैरभिसंवृतो विभाति। दशरथवचनात् कृताभिषेकस्त्रिदशपतित्वमवाप्य वृत्रहेव ॥

page. 157

यमवरुणकुबेरवासवादीनमृतभुजो जितवान् भवानयत्नः। कथमिव शिथिलीकृतः समाधिः कुसुममयैः कुसुमायुधस्य बाणैः ॥

The poet who showed a great interest in writing plays based upon the themes of Púrvarāmāyaṇa produced Pratimānāṭaka with the subject-matter of Ayodhyākāṇḍa. and Araṇyakāṇḍa. Abhiṣekanāṭaka contains the subject-matter of later three kāṇḍas namely, Kiṣkindhākāṇḍa, Sundarakāṇḍa, and Yudhakāṇḍa. The only remaining kāṇḍa is Bālakāṇḍa and even though no drama treating of the subject-matter of Bālakāṇḍa has yet been discovered, it can be assumed with justification that such a work must have been written by the same poet.

Viśvanāthakavirāja in his Sāhityadarpaṇa quotes the following verse from a particular Bālacarita

उत्साहातिशयं वत्स तव बाल्यं च पश्यतः।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः ॥ — प

(example to 85th kārikā, 6th Pariccheda)

The commentator states that this particular verse is addressed by Paraśurāma to Śrīrāma. So it clearly proves that there is a Bālacarita about Śrīrama.

The poet Daṇḍin also praises Bhāsa in his Avantisundarīkathā*—

सुविभक्तमुखाद्यङ्गैर्व्यक्तलक्षणवृत्तिभिः।
परेतोपि स्थितो भासः शरीरैरिव नाटकैः ॥ (verse—11)

Daṇḍin has written Avantisundarīkathā in prose. It con-

* Edited by Pandit S. K. Ramanatha Sastriar in the Daksinabharati Series No. 3, Madras.

tains some historical materials, and it is a pity that the world of sanskrit literature is not fortunate enough to get the work in a complete form. In the beginning of the Avantisundarīkathā the poet has devoted 27 anuṣṭup verses for the purpose of मङ्गल, सत्कविप्रशंसा, and दुष्कविनिन्दा. In his treatment of the second subject सत्कविप्रशंसा he mentions the ancient works and authors in the following order: Rāmāyaṇa, Mahābhārata, Śūdraka, Bhāsa Śarvasena, Kālidasa etc. I think that the order of poets, adopted here by Dandin is chronological. If it is so, it is possible to assume that the Cārudattanāṭaka is a contraction of Śūdraka's Mṛcchakaṭikā.

## THE SANSKRIT DRAMA.

Kāvya is divided into two classes Dṛśya and Śravya. Rūpaka is the common name of all dramatic compositions, and as such comes under the category of Dṛśyakāvya. Rūpaka is again divided into ten groups according to the predominant Rasa.

नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥ (दशरूपक १-८)

Rūpakas differ from each other according to the difference in the nature of the subject-matter (Vastu), hero (Nāyaka), and Rasa (sentiment). The subject-matter is classified into आधिकारिक and प्रासङ्गिक.................................
of which the latter is more important.

वस्तु च द्विधा ।
तत्राधिकं मुख्यमङ्गं प्रासङ्गिकं विदुः ॥ (दशरूपक १—११.)

In Abhiṣekanāṭaka the story of Śrīrāma and Sītā is आधिकारिक (ādhikārika) whereas the story of Sugrīva, Vibhīṣaṇa etc. is प्रासङ्गिक (prāsaṅgika).

The subject-matter is according to another classification divided into three, प्रख्यात (prakhyāta), उत्पाद्य (utpādya), and मिश्र (miśra). The plots based upon the stories of Purāṇas

and Itihāsas are called प्रख्यात (prakhyāta). For Example, Abhiṣekanāṭaka. The plots which are the result of the imagination of the poet are called उत्पाद्य (utpādya). For example Mālatīmādhava. Those that contain the combination of the above two are called मिश्र (miśra). For example Śākuntala, Pratimā etc.

प्रख्यातोत्पाद्यमिश्रत्वभेदात्तत्त्रिविधं मतम् ।
प्रख्यातमितिहासादेरुत्पाद्यं कविकल्पितम् ॥
मिश्रं च संकरात्ताभ्यां दिव्यमर्त्यादि भेदतः । (दशरूपक ६-६४)

A nāṭaka contains five important points (Sandhi) called mukha, pratimukha, garbha, vimarśa, and upasaṃhṛti. These arise in the following way. Those that contribute to bring about the greatest effect from a drama are called Arthaprakṛti. They are five in number, bīja, bindu, patākā, prakarī, and kārya. There are also five stages in the development of the plot, and these are known as the ārambha, yatna, prāptyāśā, niyatāpti, and phalāgama. When the first five arthaprakṛtis coalesce with the five stages one after the other, the five dramatic points (sandhi) arise.

अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः ।
यथा संख्येन जायन्ते मुखाद्याः पञ्च सन्धयः ॥

दशरूपक (1–22)

Thus in the Abhiṣeknāṭaka the beginning stage (ārambhāvasthā) is depicted in the scene where Śrīrāma and Sugrīva promise their help to each other. The second stage (yatnāvasthā) begins where Sugrīva orders his monkey-chiefs to go in quest of Sītā. The anxiety of Śrīrāma to recover Sītā represents the third stage (prāptyāśāvasthā). The return of Hanumān from Laṅkā bringing the glad news of his meeting with Sītā marks the fourth stage (niyatāpti). The last stage (phalāgamāvasthā) is exhibited in the death of Rāvaṇa and recovery of Sītā. In the same manner the first dramatic point (mukha sandhi) arises in the first act where Rāma is

very much depressed by the loss of his beloved wife, the (pratimukha-sandhi) arises in the second act where Rāvaṇa threatens Sītā, the third (garbhasandhi) in the search of Sītā, the fourth (vimarśasandhi) in the retrospect contained in the verse 'हत्वा रावणमाहवे', and the fifth (nirvahaṇasandhi) arises in the last act, where Sītā is taken back by Rāma. The benediction and the praise offered in the Bharatavākya verse is also considered as a part of the last point or sandhi (nirvaṇa alias upasaṃhṛti).

## NĀYAKA OR THE HERO.

नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः ।
रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥
बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः ।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥
(दशरूपक 2—1, 2.)

A hero is expected to have all the above qualities. These are only the general qualifications of a nāyaka. Nāyakas have been divided into four classes namely: धीरललित, धीरशान्त, धीरोदात्त and धीरोद्धत। A hero who entrusting the management of the affairs of his kingdom to his ministers leads a life of luxury and pleasure is called धीरललित. For example the hero of Ratnāvalī. It is generally observed that heroes who are विप्र, वणिक् and सचिव are Dhīraśānta. The characteristics of धीरोदात्त are given below:—

महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निगूढाहंकारः धीरोदात्तो दृढव्रतः ॥

In Abhiṣekanāṭaka Śrī Rāma is described as a धीरोदात्तनायक. The characteristics of धीरोद्धत......are given below :-

दर्पमात्सर्यभूयिष्ठो मायाच्छद्मपरायणः ।
धीरोद्धतस्त्वहंकारी चलश्चण्डो विकत्थनः ॥

In Abhiṣekanāṭaka the rival-hero Ravaṇa is described as धीरोद्धतनायक ।

## RASA OR THE SENTIMENT.

In Abhiṣekanāṭaka the main rasa is Vīra. It has been defined as:—

वीरः प्रतापविनयाध्यवसायसत्व-
मोहाऽविषादनयविस्मयविक्रमाद्यैः ।
उत्साहभूः स च दयारणदानयोगा-
त्त्रेधा किलात्र मतिगर्वधृतिप्रहर्षाः ॥

The Vīra sentiment is classified into three divisions, namely, दानवीर, दयावीर and युद्धवीर,................................. Jīmūtavāhana, the hero of Nāgānanda exhibits दयावीर, Paraśurāma, Bali, etc., exhibit the दानवीर, and Śrīrāma the hero of the present play exhibits युद्धवीर। The other sentiments Karuṇa, Adbhuta, Bhayānaka, etc., depicted in the various portions of the present drama are only feeders to the main sentiment Vīrarasa.

In preparing this introductory note, I have reproduced the arguments of other scholars and used the Mss. of the Oriental Mss. Library, Madras, and am indebted to those scholars and the authorities of the Mss. Library concerned.

V. Veṅkataram Sharma

---

प्रथमेङ्के –विनापराधं वालिना विद्रावितस्य सुग्रीवस्य श्रीरामसाह्येन वालिना सह युद्धायागमनं, विदितागमनवृत्तान्तस्य वालिनस्तारया निराकृतस्यापि अविचार्य युद्धे प्रवृत्तिः, वालिना बलवता सुग्रीवस्य विनिपातनं, तद् दृष्ट्वा हनुमदादीनां ससम्भ्रमाणां श्रीरामं प्रति विज्ञापनं, प्रच्छन्नस्य च रामस्य साह्यकरणप्रतिज्ञस्य वालिनमुद्दिश्य शरप्रेषणं, तेन विगतप्रज्ञस्य वालिनः पतनं, पुनः समाश्वासनं, अन्त्यावस्थां प्रतिपन्नं वालिनं द्रष्टुं कुमारस्याङ्गदस्यागमनं, तत्समाश्वासनं, सुग्रीवे वानराधिपत्यन्यासः, वालिनो वीरलोकप्राप्तिः, सुग्रीवस्याभिषेककल्पना च,

द्वितीयेङ्के—सीतामन्वेष्टुं सर्वासु दिशासु सुग्रीवकृतं वानरप्रेषणं, हनुमद्वर्जमन्येषां वानराणां सीतामदृष्ट्वैव प्रत्यागमनं, गृध्रवचनाद् विदितसीतावृत्तान्तस्य हनुमतः सागरलङ्घनेन लङ्काप्राप्तिः, सर्वेष्वपि प्रदेशेषु सीताविचयनं, प्रमदवनस्थपादपमूले सीतादर्शनं, श्रीरामवृत्तान्तनिवेदनं, सीतां समाश्वास्य प्रत्यागमनसमये रामदूतस्य स्वस्यागमनवृत्तान्तं रावणमवबोधयितुमुपायाचिन्ता, प्रमदवनस्य भञ्जने सति रावणः स्वागमनं स्वयमेवावबुध्येतेति तथा कर्तुं हनुमतो निश्चयश्च,

तृतीयेङ्के—हनुमत्कृतमशोकवनिकाभञ्जनं, तच्छ्रुत्वा रावणस्य वानरग्रहणाय किङ्करप्रेषणं, किङ्कराणां नाशः, सेनापतिसहितस्य कुमारस्याक्षस्य वानरग्रहणाय गमनं, अक्षस्य हननं, रावणादिष्टतया इन्द्रजिद्धस्ते स्वयंग्रहणमापन्नस्य हनुमतो रावणदर्शनं, श्रीरामशासनविज्ञप्तिः, रावणस्य प्रतिसन्देशः, ज्येष्ठे विरक्तहृदयस्य विभीषणस्य रावणं प्रति हितोपदेशः, रावणकृतं विभीषणनिर्वासनं, श्रीरामं शरणमुपेतुं विभीषणस्य चिन्ता च,

चतुर्थेङ्के—कपीन्द्रसैन्यसहितस्य श्रीरामस्य युद्धाय प्रस्थानं, विभीषणशरणागमनं, सागरलङ्घनेन लङ्काप्राप्तिः, सुवेलपर्वते सेनासन्निवेशश्च,

पञ्चमेङ्के—ययोः कयोश्चिच्छिरः प्रतिकृतिं प्रदर्श्य रामलक्ष्मणयोर्मरणवृत्तान्तनिवेदनेन रावणकृतं सीताप्रलोभनं, युद्धे इन्द्रजिन्मरणेन रावणस्य सन्तापः, सन्तप्तहृदयस्यापि पुनरपि समाश्वस्तहृदयस्य तस्य श्रीरामं विनिपातयितुं प्रवृत्तिश्च,

षष्ठेङ्के–रामरावणयोर्युद्धविशेषः, रावणवधश्च,

सप्तमेङ्के–परिशुद्धायाः स्वीकारः, श्रीरामस्याभिषेककल्पना च प्रतिपाद्यं वस्तु ॥

———

# लक्षणानि ।

ना .कं— ‘वीरशृङ्गारयोरेकं प्रधानं यत्र वर्ण्यते ।
प्रख्यातनायकोपेतं नाटकं तदुदाहृतम् ॥

अङ्क— ‘प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ।
भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ॥
विच्छिन्नावान्तरैकार्थः किञ्चित्संलग्नबिन्दुकः ।
युक्तो न बहुभिः कार्यैः बीजसंहृतिमान्न च ॥
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् ।
आवश्यकानां कार्याणां अविरोधाद्विनिर्मितः ॥
नानेकदिननिर्वर्त्यकथया सम्प्रयोजितः ।
आसन्ननायकः पात्रैर्युक्तस्त्रिचतुरैस्तथा ॥
दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः ।
विवाहो भोजनं शापोत्सर्गो मृत्यूरतं तथा ॥
दन्तच्छेद्यं नखच्छेद्यमन्यत् व्रीडाकरं चयत् ।
शयनाधरपानादि नगराद्युपरोधनम् ॥
स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः ।
देवीपरिजनादीनाममात्यवणिजामपि ॥
प्रत्यक्षचित्रचरितैर्युक्तो भावरसोत्तरैः ।
अन्ते निष्क्रान्तनिखिलपात्राङ्क इति कीर्तितः ॥

नान्दी— देवतादेर्नमस्कारो गुरूणामपि च स्तुतिः ।
गोब्राह्मणनृपादीनामाशीर्नान्दी’......॥

पारिपार्श्वकः— सूत्रधारेण सहितः संलापं प्रकरोति यः ।
सूत्रधारसमो वापि स भवेत्पारिपार्श्वकः ॥

सूत्रधारः— आसूत्रयन् गुणान् नेतुः कवेरपि च वस्तुनः ।
रङ्गप्रसाधनप्रौढः सूत्रधारः प्रकीर्तितः ॥

कञ्चुकी— अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः ।
(काञ्चुकीयः) सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥

प्रतीहारी— सन्धिविग्रहसम्बन्धं नानाचारमुपस्थितम् ।
निवेदयन्ति याः कार्यं प्रतीहार्यस्तु ता मताः ॥

नेपथ्यं— कुशीलवकुटुम्बस्य स्थानं यदतिशोभनम् ।
वर्णिकाग्रहणस्थानं नेपथ्यामभिधीयते ॥

विष्कम्भकः— वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
सङ्क्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥

प्रकाशं— सर्वश्राव्य प्रकाश स्यात् ।

स्वगतं— अश्राव्य स्वगत मतम् ।

(आत्मगतं

मारिषः भावः— सूत्रधारः पुनः पारिपार्श्वकेनाभिधीयते ।
भाव इत्येव तेनासावपि मार्षस्तु मारिषः ॥
उत्कृष्टो विद्यया भावः किञ्चिदूनस्तु मारिषः ॥

संस्कृतं— देवानां भूपतीनां च सचिवानां पुरोधसाम् ।
अमात्यवणिगादीनां पाठ्यमिच्छन्ति संस्कृतम् ॥

प्राकृतं— स्त्रीणां तु प्राकृतं प्रायः ।

पूर्वरङ्गः— यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥

स्थापना— सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् ।
(प्रस्तावना)— स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ॥
प्रस्तावना वा ।

———

# पात्राणि ॥

रामः
सुग्रीवः
विभीषणः
लक्ष्मणः
वाली
अङ्गदः
रावणः
हनुमान्
बलाध्यक्षः
विद्युज्जिह्वः
शङ्कुकर्णः
ककुभः

बिलमुखः
प्रतिहारी
राक्षसः
काञ्चुकीयः
प्रथमः }
द्वितीयः } विद्याधराः
तृतीयः }
अग्निः
वरुणः

———

सीता
तारा

————

श्रीः ।

॥ अविघ्नमस्तु ॥

# अभिषेकनाटकम् ।

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

सुकुमारमतयो हि राजपुत्रप्रभृतयः निसर्गदुर्बोधे चातिनीरसे शास्त्रे न प्रवर्त्तन्ते। ते चावश्यं चतुर्वर्गोपायेषु व्युत्पाद्याः । तदर्थं काव्यालापः । अथ च भासमुनिरभिषेकनाटकाभिधानं दृश्यकाव्यं चिकीर्षुः सूत्रधारं रङ्गे प्रवेशयति—नान्द्यन्त इति। अत्र च नान्द्याः कृतत्वेनानूद्यमानत्वात् कथासूत्रधारस्यैवायमाशीर्वादः । न नान्दीसूत्रधारस्य, तथा चोक्तम्—

प्रसाद्य रङ्गान्निष्क्रामेत् सूत्रधारः सहानुगः ।
प्रविश्य तद्वदपरः काव्यार्थं स्थापयेन्नटः ॥ इति ।

नान्द्यन्ते प्रविशतीत्युक्ते नान्द्यन्त एव प्रवेशः न तु ततः पूर्वमित्यस्यार्थस्याभिधेयत्वान्नान्द्याः पूर्वकृतत्वमेव सिध्यति न प्रवेशस्यानन्तर्यमित्यत उक्तं तत इति । आनन्तर्योक्त्या चान्तरा कर्मान्तरानुष्ठाननिरासो व्यज्यते । तेन च नान्दीमारभ्याभरतवाक्योक्तेः प्रयुज्यमानानां नाट्यकर्मणां परस्परसम्बन्धः सूचितः । नान्दी आनकः ।

'दुन्दुभिस्त्वानको भेरी भंभा नासूश्च नान्द्यपि' इति वैजयन्ती । सा चोपलक्षणं वाद्यान्तराणामपि । तस्या अन्ते प्रयोगपूर्वाङ्गभूते आनकादिवाद्यवादने अवसित इत्यर्थः । अथवा नन्दिरानन्दः तस्या इयं नान्दी गीतवाद्यवादनक्रिया तस्या अन्ते । सा हि प्रयोगारम्भे देवतापरिषदानन्दार्थाऽनुष्ठीयते । यद्यप्युक्तव्युत्पत्या देवस्तावकमंगलश्लोकपाठोऽपि नान्दी भवति तथापि सा श्लोकनान्दी सत्काव्यरूपत्वाद् रङ्गप्रयोगयोग्या रङ्ग एव प्रयोद्यत इति तदतिरिक्तैव नान्दीह ग्राह्या । यद्वा नाटकाद्यपर्वं नान्दी, तथाहि—

'देवतादेर्नमस्कारो गुरूणामपि च स्तुतिः ।
गोब्राह्मणनृपादीनामाशीर्नान्दी' इति कोहलः ।

यद्वा नदि स्तुतौ इत्यत्र धातौ पृषोदरादिपाठेन साधितः । तथा चाहुः—

स्तुत्यर्थे नदि धातौ वा समृध्यर्थे च वा पुनः ।
पृषोदरादिपाठेन नान्दीसाधनमीरितम् ॥ इति ।

**यो गाधिपुत्रमखविघ्नकराभिहन्ता**
**युद्धे विराधखरदूषण[1]वीर्यहन्ता ।**
**दर्पो[2]द्धतोल्बणकबन्धकपीन्द्रहन्ता**
**पायात् स वो निशिचरेन्द्रकुलाभिहन्ता ॥ १ ॥**

**एवमार्यमिश्रान् विज्ञापया[3]मि, ( परिक्रम्यावलोक्य ) अये किन्नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग पश्यामि ।**

( नेपथ्ये ) **सुग्रीव ? इ[4]त इतः ।**

( प्रविश्य )

**पारिपार्श्विकः—भाव**

---

प्रविष्टः सूत्रधारो मङ्गलमाचरति—यो गाधीति । अस्य च कविना नर्तकमुखेन देवतास्तुतिरूपमंगलपूर्वकं कृतस्य नमस्कारस्य नाटकनिबन्धनाविघ्नपरिसमाप्तिः फलम् । गाधिपुत्रो विश्वामित्रः तत्सम्बन्धी यो मखः क्रतुस्तस्य विघ्नं कुर्वन्तीति विघ्नकराः राक्षसाः तेषामभिहन्ता उन्मूलकः, युद्धे विराधखरदूषणवीर्यहन्ता तेषां नाशकश्च, दर्पेण गर्वेण उद्यतः उल्बणश्च यः कबन्धः कपीन्द्रश्च वाली, तयोर्हन्ता, एवं प्रभूतपराक्रमः स प्रसिद्धः निशिचरेन्द्रकुलाभिहन्ता राक्षसकुलवधकर्ता निशिचरेन्द्रस्य तत्कुलस्य च हन्ता इति वा श्रीरामः वः पायात् अव्यात् ॥ १ ॥

एवमित्यादि । आर्यमिश्राः पूज्यतमाः ।

कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता ।
अद्रोह इति येष्वेतत्तानार्यान् सम्प्रचक्षते ॥

इत्युक्तलक्षणा आर्याः, मिश्रशब्दः पूजावचनः ।

प्रयोगातिशयेनाङ्काद्यपात्रप्रवेशं सूचयितुमुपक्रमते—अये इत्यादि ।

एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः ।
पात्रप्रवेशो यत्रैव प्रयोगातिशयो मतः ॥

अये इत्यचिन्तितोपनतपदार्थोपलम्भसम्भवमावेगं सूचयति । विज्ञापनार्थं व्यग्रे प्रयोगकालातिपातभयात् संभ्रमेण प्रवर्त्तमाने सति शब्द इव श्रूयते । इव शब्दो विशेषानवधारणद्योतनार्थः । किन्नु खल्विति शब्दविशेषं तद्धेतुं च निरूपयति । अंग पश्यामि । अंगात्प्रातिलोम्ये । अप्रातिलोम्यं आनुकूल्यम् । अवहितो भूत्वा निश्चिनोमीत्यर्थः ।

नेपथ्ये इति । नेपथ्ये तिष्ठन् पात्रविशेषो वदतीत्यर्थः । भाव इति सूत्रधारसम्बोधनम् ।

---

१. 'णकर्णधारा' क. २. 'पोल्बणोद्यत' क.
३. 'मि, भये' क. ४. 'व इतः' क.

कुतो नु खल्वेष समुत्थितो ध्वनिः
प्रवर्त्तते श्रोत्रविदारणो महान्।
प्रचण्डवातोद्धतभीमगामिनां
बलाहकानामिव खेऽभिगर्जताम्॥ २॥

**सूत्रधारः**—मार्ष किं नावगच्छसि, एष खलु सीतापहरणजनित-सन्तापस्य रघुकुलप्रदीपस्य सर्वलोकनयनाभि[1]रामस्य रामस्य च, दाराभिमर्शननिर्विषयीकृतस्य[2] सर्वहर्यृक्षराजस्य सुविपुल-महाग्रीव[3]स्य सुग्रीवस्य च परस्प[4]रोपकारकृतप्रतिज्ञयोः सर्व-वानराधि[5] पतिं हेममालिनं वालिनं ह[6]न्तुं समुद्योगः प्रवर्त्तते। तत[7] एतौ हि,

कुतो न्विति। एष श्रुतः ध्वनिः शब्दः कुतो नु खलु कस्मात् प्रदेशात् समुत्थितः प्रादुर्भूतः। इदानीमपि महानयं शब्दः श्रोत्रविदारणः कर्णौ विदलयन्नेव प्रवर्त्तते। नाद्यापि शब्दस्तिरोहित इत्यर्थः। उपमामाह—प्रचण्डेति। प्रचण्डवाते कल्पान्तवाते उद्धतं धृष्टं भीमं भयङ्करं यथा तथा च गच्छताम् कल्पान्तवाते खरतरायै सर्वेषामपि बलाहकानां एकीभूयैकं प्रदेशमुद्दिश्य गमने भयंकरत्वं सम्भवतीति तात्पर्यम्। खे आकाशे अभिगर्जतां विरुवतां। सर्वेषामपि पक्षिणामेकस्मिन् काले विरावश्रवणादपि भयंकरता सम्भवति। एवंविशिष्टानां बलाहकानामिव शब्द इति योजना॥ २॥

शब्दकारणमनवगच्छन्तं पारिपार्श्वकं पृच्छति—मार्ष इति। एष खलु इदानीं खल्वित्यर्थः। रामस्य सुग्रीवस्य च वालिनं हन्तुं समुद्योगः प्रवर्त्तते इत्यन्वयः। सीतापहरणात् रावणकृतात् जनित उत्पन्नः सन्तापो व्यसनं यस्य तस्य रघुकुलश्रेष्ठस्य सर्वेषामपि लोकानां नेत्रमनोहरस्य रामस्य, स्वदाराणां तारायाः 'दाराः पुंभूम्नि' इत्यमरः। अभिमर्शनेन हठादाकृष्य वशीकरणेन निर्विषयीकृतस्य त्यक्तस्य सर्वेषामपि हरीणां वानराणां ऋक्षाणां भल्लूकानां 'ऋक्षाच्छभल्लभल्लूका' इत्यमरः। च अधिपतेः सुविपुला सुविस्तृता महाग्रीवा यस्य तादृशस्य सुग्रीवस्य च, परस्परमन्योन्यमुपकारं साहाय्यं कर्त्तुं कृतप्रतिज्ञयोः कृतसन्धयोः। परस्परदारकृतप्रतिज्ञयोः इति पाठे परस्परदारनिमित्तं कृतप्रतिज्ञयोः, दारहर्तुर्वधार्थं रामस्य प्रतिज्ञा, दारहर्तुर्विज्ञानार्थं सुग्रीवस्य प्रतिज्ञा। इदमुभयोरपि विशेषणम्। इदं च प्रतीकारसन्धिरित्युच्यते, यदाह कामन्दकिः—

१. 'भिरामस्य दा' क. २. 'स्यसु' ख. ग. घ. ३. 'वस्य च' क. ४. 'स्परदारकृ' क. ५. 'नरपतिं वा' क. ६. 'नं समुद्धर्त्तुमुद्यो' ङ. ७. 'तथाहि' क.

इदानीं राज्यविभ्रष्टं सुग्रीवं रामलक्ष्मणौ ।
पुनः स्थापयितुं प्राप्ताविन्द्रं हरिहराविव ॥ ३ ॥

( निष्क्रान्तौ )

स्थापना

( ततः प्रविशति रामो, लक्ष्मणसुग्रीवौ, हनूमांश्च )

**रामः**—सुग्रीव[2] इत इतः,

मत्सायकान्निहत[3]भिन्नविकीर्णदेहं
शत्रुं तवाद्य सहसा[4] भुवि पातयामि ।

---

मयास्योपकृतं पूर्वं अयं मामुपकरिष्यति ।
इति यः क्रियते सन्धिः प्रतीकारः स उच्यते ॥
उपकारं करोम्यस्य ममाप्येष करिष्यति ।
अयं वापि प्रतीकारो रामसुग्रीवयोरिव ॥

इति । सर्वेषामपि वानराणामधिपतिं हेममालिनं हेममाली सूर्यः वालिरपि तं वालिनं हन्तुं समुद्योगः सन्नाहः प्रवर्तते, ततस्तस्मादेव कारणात् । एतौ रामलक्ष्मणौ ज्येष्ठेन राज्याद् भ्रंशितं सुग्रीवं पुना राज्ये प्रतिष्ठापयितुं अत्रागतौ । देवपदाद् भ्रष्टं इन्द्रं पुनः स्थापयितुं हरिहरौ यथेत्युपमा ।

अत्र प्रयोगातिशयेनैव प्रात्रप्रवेशः सूचितः । एवं पात्रप्रवेशं सूचयित्वा अनन्तरोचितपात्रभूमिकापरिग्रहार्थं पारिपार्श्वकसहितः सूत्रधारः नेपथ्यशालामुद्दिश्य निष्क्रान्तः, तदाह—निष्क्रान्ताविति ।

स्थापना कथावस्त्वंशस्य स्थापनात्स्थापना । प्रस्तावनायाः पर्यायः । अत्र स्थापनाप्रकरणे भरतादिशास्त्रानुसारेणाचरणीया कविकाव्यनामकीर्तना शाकुन्तलादिसकलनाटकसाधारणा इह न कृतेति विशेषः ।

——:०:——

'असूचितस्य पात्रस्य प्रवेशो नोपपद्यते' इत्युक्तेः स्थापनान्ते सूचितपात्रप्रवेशमाह—तत इत्यादि । इतइत इति । अदेहीति शेषपूरणम् आगम्यतामिति वा ।

मदिति । मत्सायकाभिहतश्चासौ भिन्नविकीर्णदेहश्च । मत्सायकात् मया प्रेषिताद् बाणात् निहतः गतासुः भिन्नः विदारितः विकीर्णः शिथिलश्च यो देहः कायः तादृशं यथा तथा तव शत्रुं वालिनं । बालिरिति ह्रस्वे कारान्तोपि, तथा च विश्वप्रकाशः—'ऐन्द्रिर्वाली च वालिश्च' इति । अद्य सहसा अद्यैव विना विलम्बं भुवि पातयामि । हे राजन् सुग्रीव त्वं भयं त्यज । भयहानकारणमाह—यतः त्वं मम

---

१ 'णः सुग्रीवो' २. 'व इतः' क. ३. 'कामिह' क. ४. 'समरे विनिपा' क. ग.

राजन् भयं त्यज ममापि समीपवर्ती
दृष्टस्त्वया[1] च समरे निहतः स वाली ॥ ४ ॥

सुग्रीवः—देवं[2] अहं खल्वार्यस्य प्रसादाद् देवानामपि राज्यमाशंके,
किं पुनर्वानराणाम् । कुतः,

मुक्तो देव तवाद्य वालिहृदयं भेत्तुं न मे संशयः
सालान् सप्त महावने हिमगिरेः शृंगोपमाञ्छ्रीधर ।
भित्त्वा वेगवशात् प्रविश्य धरणीं[3] गत्वा च नागालयं
मज्जन् वीर पयोनिधौ पुनरयं सम्प्राप्तवान् सायकः ॥ ५ ॥

हनूमान्—तव नृप मुखनिस्सृतैर्वचोभिः
विगतभया हि वयं विनष्टशोकाः ।
रघुवर हरये जयं प्रदातुं

---

समीपवर्ती दृष्टः भवसि । मत्समीपवर्तिनस्तव मत्साहाय्यमस्तीति कृत्वा भयकारणं किमपि नास्तीति यावत् । त्वं च युद्धे अचिरेण बालिनं निहतं द्रक्ष्यसीति स वाली त्वया मम समीपवर्त्यपि दृष्टः, निहतश्च दृष्टः । दर्शनसमनन्तरमेव स निहत इत्यर्थः । समीपवर्तित्वं निहतत्वं च भूतवत्कल्प्यतामित्यर्थः । अनेन वधस्य निस्संशयत्वं प्रतिपादितम्, दृष्ट इति भूतसामीप्ये निष्ठा, अत एव भयं त्यजेत्युक्तम् । राजन्नित्यनेन त्वमेवातः परं राजा इति प्रकाशितम् ॥ ४ ॥

देवानामपीति—आर्यस्य प्रसादः स्वर्गमपि मदधीनं कारयेदिति शङ्के किं पुनर्वानराणां राज्यं प्रति वक्तव्यमित्यर्थः ।

तत्र च निदानमाह—कुत इत्यादि । रामसायकस्य पारम्यं तादृशमिति तात्पर्यम् ।

सायकं च विशिंषन् पद्यमाह—मुक्त इति, देव श्रीधर-वीरेति सम्बुद्धित्रयं श्रीराममुद्दिश्य । वालिहृदयं वालिनः मम शत्रोर्ज्येष्ठस्य वालिनः हृदयं भेत्तुं विदारयितुं मुक्तः प्रयुक्तः अयं तव सायकः बाणः हिमगिरः हिमवत्पर्वतस्य शृंगोपमान् शिखरतुल्यान् सप्तसालान् वृक्षान् प्राकारान्वा भित्त्वा विदलयित्वा ततः वेगवशात् ततः धरणीं भूमिं प्रविश्य नागालयं पातालं गत्वा च पयोनिधौ समुद्रे मज्जंश्च पुनः अस्मत्सकाशं सम्प्राप्तवानित्यत्र न मे संशयः । रामसायकस्य वीर्यवर्णनमिदम् ॥ ५ ॥

सुग्रीववालिनोर्मध्ये सुग्रीवस्य जयमभिलषन् हनुमान् श्रीराममाह-तवेति । हे देव राम तव मुखनिस्सृतैः आस्याद् गलितैर्वचोभिः वयं सर्वे वानराः सुग्रीवश्च विगतभयाः परित्यक्तभयाः विनष्टशोकाः परित्यक्तदुःखाश्च संवृत्ता इति शेषः । हि-

---

१. 'याद्य स' क.   २. 'अहं' क.   ३. 'णीं' क.

गिरिमभिगच्छ सनीर[1]नीरदाभम् ॥ ६ ॥

**लक्ष्मणः**–[2]आर्य सोपस्नेहतया [3]वनान्तरस्याभितः खलु किष्किन्धया भवितव्यम् ।

**सुग्रीवः**–सम्यगाह कुमारः ।

सम्प्राप्ता हरिवरबाहुसम्प्रगुप्ता[4]
किष्किन्धां तव नृप बाहुसम्प्रगुप्ताः[5] ।
तिष्ठ त्वं नृवर करोम्यहं विसंज्ञं
नादेन प्रचलमहीधरं नृलोकम् ॥ ७ ॥

**रामः**--भवतु, [6]गच्छ ।

**सुग्रीवः**—यदाज्ञापयति देवः । ( उपगम्य[7] ) भोः,

अपराधमनुद्दिश्य परित्यक्तस्त्वया विभो ।
युद्धे त्वत्पादशुश्रूषां सुग्रीवः कर्त्तुमिच्छति ॥ ६ ॥

---

शब्दो ह्येवार्थे वर्त्तते । रामेण दत्ताया वाचः प्रवृत्तौ उन्मुखीकरणं सद्य एवेच्छन् रामं निवेदयति--रघुवरेति । हे रघुकुलोत्तम हरये सुग्रीवाय जयं प्रदातुं सुग्रीवं जयिनं कर्त्तुं इत्यर्थः । सनीरनीरदाभं सजलजलधरशोभं लतावृक्षप्रसरेण नीलरूपमिति यावत् । गिरिं वनमभिगच्छ अभियाहि ॥ ६ ॥

सोपस्नेहतया इति--अभितः समीपे परिदृश्यमानस्य देशस्य समन्ततः वृक्षाणां सोपस्नेहतया वृक्षबाहुल्यनिमित्तोपक्लेदवत्तया इत्यर्थः ।

किष्किन्धाया समीपभाव्यत्वं संवदति मदात्ते प्रायेणेत्याह–सम्यगिति ।

सम्प्राप्तेति—हरिवरो बाली तस्य बाहुभ्यां सम्यग्रक्षिता किष्किन्धा नगरी तव बाहुसम्प्रगुप्तैः अस्माभिः सम्प्राप्ता । वयं किष्किन्धां प्राप्ताः स्मः इत्यर्थः । हे नृवर राम त्वं तिष्ठ स्वस्थो भव । अहं नादेन ममारवेण प्रचलन् यो महीधरः पर्वतस्तथाभूतं नृलोकं मर्त्यलोकं विसंज्ञं विगतचेतनं करोमि । यथा च महीधरा अपि कम्पिता भवेयुः तथाहं शब्दं कृत्वा मर्त्यलोकं जडं करोमीति तात्पर्यम् ॥ ७ ॥

गच्छेति । शब्दोत्पादनायेति शेषः ।

परिक्रम्येति । अभिमुखीभवितुं यथाच ध्वनिः सर्वैरपि एकरूपेणैव श्रुतो भवेदिति । भोः इत्यभिसम्बुध्य शब्दमुत्पादयति—अपराधमित्यादि । अपराधमनुद्दिश्य

---

१ 'सवीलनी' क. २ 'णः--सो' क. ३ या वृक्षाणाम' क. ग. ४. 'प्ता किष्किन्धा त' ख. ५ 'प्ता' ख. खपाठानुसरणे द्वितीयपादे गुप्तैः इति शोधनीयं भाति अस्माभिरिति विशेष्यं च योज्यम् । ६ 'मः—बाढम्' ख. ग. ७ 'परिक्रम्य' ख.

( नेपथ्ये ) कथं[1] कथं सुग्रीव इति ।

( ततः प्रविशति वाली, गृहीतवस्त्रया[2] तारया सह )

वाली—कथं कथं सुग्रीव इति ।

तारे विमुञ्च मम वस्त्रमनिन्दितांगि
प्रस्नस्तवक्त्रनयने[3] किमसि प्रवृत्ता ।
सुग्रीवमद्य समरे विनिपात्यमानं
तं पश्य शोणितपरिप्लुतसर्वगात्रम् ॥ ६ ॥

तारा—पसीअउ[4] पसीअउ महाराओ, अप्पेण[5] कारणेण ण[6] आगमिस्सइ[7] सुग्गीओ[8] । ता अमच्चवग्गेण सह सम्मन्तिअ[9] गन्तव्वम् । (क)

क—( प्रसीदतु प्रसीदतु महाराजः अल्पेन कारणेन नागमिष्यति सुग्रीवः । तदमात्यवर्गेण सह संमन्त्र्य गन्तव्यम् ) ।

अनिमित्तीकृत्य अनिर्दिश्य अपराधं विनेत्यर्थः । विभो वालिन् त्वया अहं परित्यक्तः उज्झितः । तस्माद् युद्धे प्रहरणे तव पादशुश्रूषां कर्तुमहमभिलषामि । त्वया सह युद्धाय सन्नद्धोऽहमिति तात्पर्यम् ॥ ८ ॥

अतुल्यपराक्रममात्मानं मन्यमानो वाली पूर्वोक्तं श्रुत्वा विशिष्य च चतुर्थपादप्रसक्तं सुग्रीवं स्वानुजं युद्धार्थमागतं विदित्वाऽतिशयान आह—कथमित्यादि । कथमिति वीप्सा अतिशये ।

वाली तारया सह रङ्गे प्रविशतीत्याह—तत इत्यादि ।

तारे इति । अनिन्दिताङ्गि शोभने प्रस्रस्तानि विक्लबानि वक्त्रनयनानि यस्यास्तादृशे । हे तारे किं प्रवृत्तासि युद्धसन्नाहं विदित्वा किं भयात् ममोत्तरीयं गृहीतुं प्रवृत्तासीत्यर्थः । सुग्रीव एवेदानीं मया सह युद्धाय सन्नह्यति, स च मे निस्सारः । तमहं क्षणेनाऽनायासेन विनिपातयितुं समर्थोऽस्मि । तन्मा भीः इत्याह—सुग्रीवमिति । अद्य प्रवर्त्तमाने समरे मया विनिपात्यमानं शोणितपरिप्लुतसर्वगात्रं रक्तदिग्धकलेवरं सुग्रीवं त्वं पश्य इदानीमेव पश्यसीत्यर्थः ॥ ६ ॥

सानुक्रोशा तारा न तत्कर्तव्यमित्याह—पसीअउ इत्यादि । अल्पेन कारणेन अल्पं कारणं पुरस्कृत्य सुग्रीवो युद्धाय नासज्जते, किन्तु प्रभूतबलवर्ग एवागच्छेत् । तस्मान्न त्वया अविचार्य किमपि कर्तव्यम् । अमात्यवर्गैः सह आलोच्य युद्धाय

१ 'कथं सु' क. २ 'ली तारागृहीतवसनः' क. ३ 'तवक्त्रनेत्रं' क. ख. ग. घ.
४ 'पसीददुम' क. ५ 'अणप्पे' क. ख. ङ. ६ 'शोण आ' क. ख. ङ.
७ 'मिस्सिदि' क. ८ 'रगीवो' कः ९ 'म्मथिअ' क.

बाली—आः

शक्रो वा भवतु गतिः शशांकवक्त्र
शत्रोर्मे निशितपरश्वथः शिवो वा ।
नालं मामभिमुखमेत्य संप्रहर्तुं
विष्णुर्वा विकसितपुण्डरीकनेत्रः ॥ १० ॥

तारा—पसीअदु[2] पसीअदु महाराओ । इमस्स जणस्स अणुग्गहं[3] दाव करेदुं अरिहदि महाराओ । (क)

बाली—श्रूयतां मत्पराक्रमः ।

तारे मया खलु पुरामृतमन्थनेऽपि
गत्वा प्रसह्य[4] सुरदानवदैत्यसंघान् ।
उत्फुल्लनेत्रमुरगेन्द्रमुदग्ररूप-
माकृष्यमाणमवलोक्य सुविस्मितास्ते ॥ ११ ॥

तारा—पसीअदु[5] पसीअदु महाराओ । (ख)

(क) प्रसीदतु प्रसीदतु महाराजः । अस्य जनस्यानुग्रहं तावत् कर्तुमर्हति महाराजः ।

(ख) प्रसीदतु प्रसीदतु महाराजः ।

सज्जो भवेत्यर्थः । 'शक्याशक्यपरिज्ञानं कुर्याद् बुध्या प्रसन्नया' । आगमिस्सदि सम्भावनायां लृट् ।

उपदेशकर्त्रीं तारां तदुक्तं विषयमपि परिभवन्नाह—आः इति ।

शक्र इत्यादि । निशितपरश्वथः तीक्ष्णपरशुः पुण्डरीकं सिताम्भोजम् । विकसितपुण्डरीकनेत्रः कमलनयनः इत्यर्थः । विष्णुशिवेन्द्रा देवा अपि मया सह युद्धाय न प्रभवन्तीत्यर्थः ॥ १० ॥

युद्धे सुग्रीवस्य जयं वालिनः स्वभर्तुः मरणं चाशंकमाना तारा स्वस्याऽनन्यशरणतां सूचयति—इमस्सेत्यादि ।

तामपि ताराया वाचं विगणय्याह—श्रूयतामित्यादि ।

स्वापदानमाह—तार इत्यादि । प्रसह्य प्रकर्षेण हासं कृत्वा । उत्फुल्लनेत्रं विकसितनयनं उरगेन्द्रं वासुकिनं उदग्ररूपं भीमरूपं आकृष्यमाणं मयेति शेषः । ते सुरदानवदैत्यसङ्घाः एवं महत्तरस्वापदानप्रकटनेन सुग्रीवनिधनस्य तुच्छतामवबोधयति ॥ ११

आः इत्यादि--मम वशानुवर्तिनी भव । मम वाचमनुसर ।

१ 'ली-श' क. २ 'सीददुम' क. ख. ग. ङ. ३ 'हं दादुं अ' क. ४ 'प्रहस्य' क. ५ 'सीददुम' क.

वाली—आं[1]:, मम वशानुवर्तिनी भव, प्रविश त्वमभ्यन्तरम् ।

तारा—एसा गच्छामि मन्दभाआ । (क)

( निष्क्रान्ता )

वाली—हन्त प्रविष्टा तारा । यावदहं[3] सुग्रीवं भग्नग्रीवं करोमि, (द्रुतमुपगम्य) सुग्रीव तिष्ठ तिष्ठ,

इन्द्रो वा शरणं तेऽस्तु प्रभुर्वा मधुसूदनः ।
मच्चक्षुष्पथमासाद्य सजीवो नैव यास्यसि ॥ १२ ॥

इत इतः[4] ।

सुग्रीवः—यदाज्ञापयति महाराजः ।

( उभौ नियुद्धं[6] कुरुतः )

रामः—एष[7] एष वाली,

सन्दष्टोष्ठश्चण्डसंरक्तनेत्रो
मुष्टिं कृत्वा गाढमुद्वृत्तदंष्ट्रः[8] ।
गर्जन् भीमं वानरो भाति युद्धे
संवर्त्ताग्निः सन्दिधक्षुर्यथैव ॥ १३ ॥

लक्ष्मणः—सुग्रीवमपि[9] पश्यत्वार्यः,

---

(क) एषा गच्छामि मन्दभागा ।

वाचमाह—प्रविशेत्यादि ।

यत् श्रावितं तत् स्वभर्त्रा नानुसृतमिति भग्नाशया ताराऽऽह—एसेत्यादि ।

द्रुतमुपगम्य सुग्रीवसमीपमिति शेषः । इन्द्र इत्यादि ॥ १२ ॥

सन्दष्ट इत्यादि । सम्यग् दष्टौ ओष्ठौ उत्तराधरौ परस्परं येन सः, चण्डौ उग्रौ सम्यग्रक्तौ च नेत्रौ यस्य सः उद्वृत्ता उद्वर्तिता मुखादिति शेषः येन सः, भीमं भयंकरं यथा तथा गर्जन् रटन् वानरः वाली युद्धे भाति प्रकाशते । संवर्त्ताग्निः प्रलयाग्निः 'संवर्तः प्रलयः कल्पं इत्यमरः, सन्दिधक्षुः सन्दग्धुमिच्छुः यथा भासेत तद्वदिति एकदेशोपमा ॥ १३ ॥

सुग्रीवस्यापि प्रकृतिं निराह—विकसितेत्यादि । विकसितमुत्फुल्लं यत् शतपत्रं कुशेशयं तद्वद् रक्ते नेत्रे यस्य सः, कनकमयेन कार्तस्वरमयेन अंगदेन भूषणेन

---

१ 'हं म' क. २ 'नी भूयः प्र' क. ३ दहमपि सु' क. ४ 'भोः सुग्रीव ति' क. ५ 'इतइतः' इति नास्ति क. ६ 'भौ यु' क. ७ 'एष वा' क. ८ 'मुद्दिक्तदं' क. ९ 'मभिप' क.

विकसितशतपत्ररक्तनेत्रः[1] कनकमयांगदनद्धपीनबाहुः
हरिवरमुपयाति[2] वानरत्वाद् गुरुमभिभूय सतां विहाय वृत्तम् ॥१४॥

वालिना ताडितः पतितः सुग्रीवः ।

हनुमान्[3]—हा धिक्, ( ससंभ्रमं राममुपगम्य ) जयतु देवः । अस्यैषावस्था ।

बलवान् वानरेन्द्रस्तु दुर्बलश्च पतिर्मम ।
अवस्थां[4] शपथश्चैव सर्वमार्येण चिन्त्यताम् ॥ १५ ॥

रामः—हनूमन् अलमलं[5] सम्भ्रमेण । एतदनुष्ठीयते । (शरं मुक्त्वा) हन्त पतितो वाली ।

लक्ष्मणः—एष[6] एष वाली,

रुधिरकलितगात्रः स्रस्तसंरक्तनेत्रः
कठिनविपुलवाहुः काललोकं विविक्षुः

---

नद्धेन पीनौ बाहू यस्य सः सतां वृत्तं चरितं विहाय विवेकपुरस्कृतं साध्वाचारं त्यक्त्वा, वानरत्वात् अविवेकात् गुरुं ज्येष्ठभ्रातरं हरिवरं वालिनं अभिभूय नैव उपयाति । विवेकिनस्तु ज्येष्ठभ्रात्रा सह युद्धाय नैव सन्नह्येरन् ॥ १४ ॥

बालिनेति । बालिताडनेनोपक्षीणबलः पुनः प्रहर्तुमक्षमः सन् सुग्रीवः पतितः पततीत्यर्थः ।

हा धिक् कष्टम् ।

ससंभ्रममिति । स्वामिनः शत्रुताडनात् पतनं संभ्रमकारणम् ।

सुग्रीवस्यानेनापजयमाशंकमानः हनुमान् श्रीरामस्य सहायमिच्छन् सुग्रीवावस्थां विनिवेदयति—जयत्वित्यादि । अस्य सुग्रीवस्य, एषा शोचनीया ।

बलवानित्यादि, वानरेन्द्रः बाली दुर्बलः बलहीनः, अवस्था सुग्रीवस्येति शेषः, शपथः मत्सायकान्निहतेत्यादि श्लोकेन प्रतिपादितः रामस्य शपथः चिन्त्यतां चिन्तयित्वा अवसरोचितं साहाय्यं सुग्रीवस्य करोतु भवानिति तात्पर्यम् ॥ १५ ॥

एतदनुष्ठीयते, एतत् अनुष्ठेयं सुग्रीवस्य जयप्रापकं शत्रुनाशकं च कार्यं साहाय्यरूपं इत्यर्थः । शरमोचनाव्यवहितानन्तरक्षणमेव बालिनं पतितं दृष्ट्वाह—हन्तेत्यादि । अत्र रामेण प्रच्छन्नेन शरो मोचितः । न तु रामस्य सत्तावगता वालिना ।

निपातितं वालिनं निर्वर्णयति लक्ष्मणः—

एष एष इत्यादि । द्विरुक्तिः बाणप्रयोगसाफल्यप्रयुक्तसन्तोषेण ।

---

१ 'ऽवक्त्रने' क. २ 'रमभिया' क. ३ 'हनु—जयतु देवः, हा धिक्, अस्यैषावस्था, बलवानि'त्यादि क. ४ 'स्थां शपथं चै' क. ५ 'अलं स' क. ६ 'एष वा' क.

अभिपतति कथञ्चिद् धीरमाकर्षमाणः
शरवरपरिवीतं शान्तवेगं शरीरम् ॥ १६ ॥

वाली—(मोहमुपगम्य, पुनः समाश्वस्य शरे नामाक्षराणि वाचयित्वा राममुद्दिश्य)

युक्तं भो नरपतिधर्ममास्थितेन
युद्धे मां छलयितुमक्रमेण राम ।
वीरेण व्यपगतधर्मसंशयेन
लोकानां छलमपनेतुमुद्यतेन ॥ १७ ॥

हन्त[2] भोः ।

भवता सौम्यरूपेण यशसो भाजनेन च ।
छलेन मां प्रहरता प्ररूढमयशः कृतम् ॥ १८ ॥

---

रुधिरेति । रुधिरकलितगात्रः रक्तदिग्धशरीरः कलिल इत्यपि पाठः । कलिलं आर्द्रं । स्रस्तसंरक्तनेत्रः स्रस्तो दीनो अथवा अन्तर्मग्नौ संरक्तौ ताम्रौ नेत्रौ यस्य सः कठिनौ दृढौ विपुलौ विस्तृतौ च बाहू यस्य सः, काललोकं यमसदनं विविक्षुः गन्तुमिच्छुः, शरवरपरिवीतं शरवरेण श्रीरामसायकेन व्रणितं शान्तवेगं क्षीणबलं कायं धीरं यथा तथा आकर्षमाणः सन् कथञ्चिदस्माकमभिमुखे मूर्छितः पतति । आकर्षमाण इति चानजन्तम् ॥ १६ ॥

अविज्ञातरामसन्निधानः वाली समाश्वस्य स्वपतननिमित्ते सायके श्रीरामस्य नामाक्षराणि दृष्ट्वा रामकृतं सायकप्रेषणं रामसान्निधानं च विदित्वा राममुद्दिश्याह—युक्तमित्यादि । नरपतिधर्ममास्थितेन क्षात्रधर्ममाश्रितेन, वीरेण, व्यपगतधर्मसंशयेन धर्मात् शंका व्यपगता यस्य तेनेत्यर्थः । लोकानां जनानां 'लोकस्तु भुवने जने' इत्यमरः । छलं कापट्यमपनेतुमुद्यतेन निराकर्तुमुद्भूतवपुषा त्वया इति शेषः । मां अक्रमेण क्रममनादृत्य अन्यायेन प्रच्छन्नेनेति यावत् युद्धे छलयितुं वञ्चयितुं युक्तं किं इति शेषः । मां छलयितुं युक्तमिति स्वरकाकुना वचनम् ॥ १७ ॥

हन्त भो इति—हन्तेत्याश्चर्ये, भो इति सामान्यामन्त्रणे । हन्त भो इत्याश्चर्ये निपातसमुदायो वा ।

भवतेत्यादि—भवता मम वधः भवता भवत्कर्तृकः । सौम्यरूपेण शुभदर्शनेन यशसः कीर्तेः भाजनेन पात्रेण च छलेन प्रच्छन्नकृतकापट्येन मां प्रहरता प्रहरणेन विनिपातयता अयशः अकीर्तिः प्ररूढं कृतं स्थापितम् । यशःपात्रं शुभदर्शनश्च भवान् अयशः स्थापितवानितीदमाश्चर्यमिति भावः ॥ १८ ॥

---

१ 'पतितो वाली—(राममुद्दिश्य शरेण नामाक्षराणि वाचयित्वा) युक्त'मित्यादि क.　२. 'हं भोः' क.

भो राघव यच्चीरवल्कलधारिणा वेषविपर्यस्तचित्तेन मम भ्रात्रा सह युद्धव्यग्रस्याधर्म्यः खलु प्रच्छन्नो वधः ।

रामः—कथमधर्म्यः खलु प्रच्छन्नो वध इति ।

वाली—कः संशयः ।

रामः—न खल्वेतत्, पश्य ।

वागुराच्छन्नमाश्रित्य मृगाणामिष्यते वधः ।
वध्यत्वाच्च मृगत्वाच्च भवाञ्छन्नेन दण्डितः ॥ १६ ॥

वाली—दण्ड्य इति मां भवान्मन्यते ।

रामः—कः संशयः ।

वाली—केन कारणेन ।

रामः—अगम्यागमनेन ।

वाली—अगम्यागमनेनेति, एषोऽस्माकं धर्म्मः ।

रामः—ननु युक्तं भोः[1],

भवता वानरेन्द्रेण धर्माधर्मौ विजानता ।

भो इत्यादि । चीरं च तत् वल्कलं च, वल्कलं तरुत्वक् । वेषविपर्यस्तचित्तेन वेषात् सौम्यात् विपर्यस्तं चित्तं यस्य तेन । वेषाननुगुणहृदयेन । वेषस्तु सौम्यः शुद्धश्च, हृदयं तु कठिनं भीमं चेति भावः । भ्रात्रा सह सुग्रीवेण सह युद्धव्यग्रस्य मया सह युद्धार्थं जागरूकस्य । युद्धे तव व्यग्रत्वं प्रच्छन्नसायकप्रेषणेनानुमितम् । प्रच्छन्नः प्रच्छन्नप्रहारजनितः वधः मत्कर्मकवधः । अधर्म्यः धर्मादनपेतः न ।

न खल्वेतदित्यादि—अधर्म्य इत्येतन्न खलु, धर्म्य इत्यर्थः ।

वागुरेत्यादि । लोके तावद् प्रच्छन्नैरेव मनुजैः मृगा हन्यन्ते सुखग्रहणहेतोः, त्वं च वध्यः मृगश्चासीति मया दण्डितोऽसीति भावः । तत्र वालिनो मृगत्वं वानरत्वादिति स्पष्टम् ॥ १६ ॥

दण्ड्य इत्यादि । दण्डमर्हतीति दण्ड्यः दण्डादित्वाद्यः ।

कथमहं वध्यो भवामीति पृच्छति—केनेत्यादि ।

तत्र कारणमाह—अगम्येति । अगम्यायां भ्रातुः सुग्रीवस्य भार्यायां गमनेन विरुद्धप्रवृत्त्या वध्यो भवानसीति शेषः । अगम्यागमनं हि महापातककर्मस्वन्यतमम् । तदाचरन् भवान् वध्योऽसीत्यर्थः ।

अगम्यागमनमस्माकं न दोष इत्याह—एषोऽस्माकमित्यादि ।

दोष एव भवतीति स्थापयन्नाह—भवतेति । धर्माधर्मौ अयं धर्मः अयमधर्मः

1. 'युक्तं भो वा'. क.

आत्मानं मृगमुद्दिश्य भ्रातृदाराभिमर्शनम् ॥ २० ॥

वाली—भ्रातृदाराभिमर्शनेन तुल्यदोषयोरहमेव दण्डितो, न सुग्रीवः।

रामः—दण्डितस्त्वं हि दण्ड्यत्वाद्, अदण्डयो नैव दण्डयते।

वाली—सुग्रीवेणाभिमृष्टाभूद् धर्मपत्नी गुरोर्मम।
तस्य दाराभिमर्शेन कथं दण्डयोऽस्मि राघव ॥ २१ ॥

रामः—न त्वेव हि कदाचिज्ज्येष्ठस्य यवीयसो दाराभिमर्शनम्।

वाली—हन्त अनुत्तरा वयम्। भवता दण्डितत्वाद् विगतपापोऽहं ननु।

रामः—एवमस्तु।

सुग्रीवः—हा धिक्।

करिकरसदृशौ गजेन्द्रगामि-
स्तव रिपुशस्त्रपरिक्षताङ्गदौ च।

---

इति विविच्य जानता भवता आत्मनि वा नरत्वबुद्धिमात्रेण यत् भ्रातृभार्यागमनं कृतं तत् ननु युक्तं अपि युक्तम्। अपीति प्रश्नार्थे। अविवेकिनस्तथा कुर्वन्ति, तेषां तत्र दोषो नास्ति। त्वं तु वानरोऽपि विवेकी सन् एवं कृतवानिति वध्यः भवस्येवेति तात्पर्यम्।

सुग्रीवोऽपि तुल्यदोषो दण्ड्य इत्याह—भ्रातृदारेत्यादि।

सुग्रीवकृतं दोषमुपपादयति—सुग्रीवेणेति। तस्य सुग्रीवस्य दाराभिमर्शः मया कृतः न्याय्य इति नाहं दण्डयो भवामीति तात्पर्यम्।

अपराधयोर्द्वयोर्मध्ये बालिकृतस्यासाधरणत्वात् स दण्ड्य इति निरूपयति। न त्वेवेत्यादि। अनुजभ्रातुः दाराभिमर्शनं ज्येष्ठस्य नैतत्पर्यन्तं श्रुतमिति असाधारणं कार्यं त्वया कृतमिति त्वं दण्ड्य एव भवसीति भावः।

देवांशत्वात् श्रीरामस्य तत्कृतो दण्डः स्वपापहारक इति तृप्तः बाली आह—भवतेत्यादि। एवं चेदानीं बाली अनुत्तरः सन् रामकृतं दण्डं न्याय्यं मन्यमानः स्वकीयां वैरबुद्धिं त्यक्त्वा रामास्त्रेण स्वस्य नाशः प्राप्तः पुण्यायैवेति तृप्तो बभूव। सुग्रीवः ज्येष्ठ-वालिनो वैरत्यागं विदितवान् यदा तदा सञ्जातभ्रातृवात्सल्यभावः सुग्रीवः शुण्डादण्डः स्येदृशीमवस्थां दृष्ट्वानुतपतीवाह—करिकरेत्यादि। करिकरः गजस्य शुण्डादण्डः तत्तुल्यौ। गजेन्द्रगामिन् हरिवर इति सम्बुद्धिद्वयं वालिनमुद्दिश्य, रिपुशस्त्रेण राम-

---

१. 'ने तु' क २. 'णापि मृ' क।

अवनितलगतौ समीक्ष्य बाहू
हरिवर हा पततीव मेऽद्य चित्तम् ॥ २२ ॥

वाली—सुग्रीव अलमलं[1] विषादेन । ईदृशो लोकधर्मः ।

(नेपथ्ये) हाहा महाराओ । (क)

वाली—सुग्रीव संवार्यतां[2] संवार्यतां स्त्रीजनः एवंगतं नार्हति मां द्रष्टुम् ।

सुग्रीवः—यदाज्ञापयति महाराजः । हनूमन् एवं क्रियताम् ।

हनुमान्—यदाज्ञापयति कुमारः, (निष्क्रान्तः)

(ततः प्रविशत्यंगदो हनुमांश्च)

हनुमान्—अङ्गदे[3] इत इतः ।

अङ्गदः—श्रुत्वा कालवशं यान्तं हरिमृक्षगणेश्वरम् ।
समापतति[4] तसन्तापः प्रयामि शिथिलक्रमः ॥ २३ ॥

हनुमन् कुत्र महाराजः ।

हनुमान्[5]—एष महाराजः,
शरनिर्भिन्नहृदयो विभाति धरणीतले ।

---

(क) हा हा महाराजः ।

---

बाणेन परिक्षतौ शिथिलितौ अंगदौ ययोस्तौ । अवनितलगतौ बाहू समीक्ष्य दृष्ट्वा मे चित्तमद्य पततीवेत्युत्प्रेक्षा ॥ २२ ॥

सुग्रीवेत्यादि—अलमिति वारणे, 'अलं भूषणपर्याप्तिशक्तिवारणवाचकं' इत्यमरः । अलं शब्दस्य तृतीयान्तपदसाचिव्येन निष्फलाभिधायकत्वमपि । यदाहुः—

'भवति हि तृतीयान्तेन समन्वितमलं' इति ।

रामास्त्रक्षतगात्रं मरणावस्थायामवस्थितं बालिनं स्वभर्तारं विदित्वा स्त्रीजनैः कृतमाक्रन्दमन्तर्जवनिकाभिर्वाग्भिः प्रकाशयति—हा हेत्यादि । शोचनीयमवस्थान्तरं प्रतिपन्ना वयमिति वाक्यशेषः । हाहाशब्दाभ्यां कष्टातिशयद्योतनसामर्थ्यात् ।

सुग्रीवेत्यादि । एवं गतं एतदवस्थापन्नम् ।

विदितवालिवृत्तान्तस्य बालिपुत्रस्यांगदस्य अन्त्यकाले बालिनं द्रष्टुमागतस्य प्रवेशमाह—तत इत्यादि ।

अंगद इति । इत इतः आगम्यतामिति शेषः ।

श्रुत्वेति । कालवशं कालाधीनं ऋक्षगणानामाधिपं, प्राप्तव्यसनः अत एव शिथिलगतिः ॥ २३ ॥

---

१ 'अलं वि' क. २ 'तां स्त्री' क. ३ 'द इतः' क. ४ 'पतति स' क.
५ 'हनु-शर' इत्यादि क.

गुहशक्तिसमाक्रान्तो यथा क्रौञ्चाचलोत्तमः ॥ २४ ॥

अङ्गदः—( उपसृत्य ) हा महाराज,

अतिबलसुखशायी पूर्वमासीर्हरीन्द्रः
क्षितितलपरिवर्ती क्षीणसर्वांगचेष्टः ।
शरवरपरिवीतं व्यक्तमुत्सृज्य देहं
किमभिलषसि वीर स्वर्गमद्याभिगन्तुम् ॥ २५ ॥

( इति भूमौ पतितः )

वाली—अङ्गद अलमलं विषादेन, भोः सुग्रीव,

मया कृतं दोषमपास्य बुध्या
त्वया हरीणामधिपेन सम्यक् ।
विमुच्य रोषं परिगृह्य धर्मं
कुलप्रवालं परिगृह्यतां नः ॥ २६ ॥

सुग्रीवः—यदाज्ञापयति महाराजः ।

---

शरेत्यादि । निर्भिन्नं विदारितम् ॥ २४ ॥

अतीत्यादि । य इत्यर्थात् सिद्धम् स त्वमिति सम्बन्धः । पूर्वं त्वमतिबलोपजीवी अतिसुखोपजीवी चासीः । इदानीं तु रामसायकेन रुग्णः क्षितितले लुठन् नष्टसकलावयवव्यापारः दृश्यसे । तदहं मन्ये त्वं शरैः रुग्णं इमं स्थूलशरीरमुत्सृज्य वीरस्वर्गमभिलषसीति । उल्लेखः ॥ २५ ॥

वाली स्वान्त्यकाले स्वपुत्रं दुःखितमंगदं समाश्वासयति । अंगदेत्यादि ।

मयेत्यादि । दोषमगम्यागमनरूपं, अपास्य त्यक्त्वा हरीणां वानराणां हरिशब्दोऽनेकार्थः । स्वानन्तरावकाशित्वात् सुग्रीवस्य हरीणामाधिपत्यमुक्तम् । विमुच्य रोषं वैरमुज्झित्वा धर्मं प्रतिगृह्य नः कुलप्रवालं कुलधर्मः कुलस्यांकुरमिति वा परिगृह्यताम्, मत्सकाशादिति शेषः । कुलस्य प्रवालत्वकथनमत्र तस्य वृद्धिस्त्वया कर्तव्येति कर्तव्यताबोधनाय । अनेन हरीणामाधिपत्यं स्वस्मिन्निविष्टं सुग्रीवे न्यस्तम् ॥ २६ ॥

सुग्रीवश्च ज्येष्ठेनोक्तमनुसरति—यदित्यादि ।

भो इत्यादि । यस्मिन् कस्मिन् वापराधे विगीतत्वादपराधस्य वाचा उच्चारयितुमयोग्ये इत्यर्थः । अनयोस्तव पुरोभूतयोर्वानरयोराविवेककृतं चापल्यं क्षन्तुं विवेकिष्वग्रतमः भवानर्हसीत्यर्थः । चापल्यप्रयुक्तत्वादपराधस्य क्षन्तुं योग्यता ।

मरणकाले तीर्थाचमनेन स्वात्मशुद्धिं सम्पादयितुं हनूमते तीर्थानयनं निर्दिशति—हनुमन्नित्यादि ।

१ 'सीद्धरी' क. २ 'द्या ( पि ? भि ) ग ख.' ३ '( भूमौ पतति )' क.
४ 'नः ईदृशो लोकधर्मः । भोः' ख. ५ 'प्रतिग' ख.

बाली—भो राघव यस्मिन् कस्मिन् वापराधेऽनयोर्वानरचापलं क्षन्तुमर्हसि ।

रामः—बाढम्[1] ।

बाली—सुग्रीव प्रतिगृह्यतामस्मत्कुलधनं हेममाला ।

सुग्रीवः—अनुगृहीतोऽस्मि । ( प्रतिगृह्णाति )

बाली—हनुमन्[2] आपस्तावत् ।

हनुमान्—यदाज्ञापयति महाराजः । ( निष्क्रम्य प्रविश्य ) इमा आपः ।

बाली—( आचम्य ) परित्यजन्तीव मां प्राणाः । इमा गंगाप्रभृतयो महानद्य एता उर्वश्यादयोऽप्सरसो मामभिगताः । एष सहस्रहंसप्रयुक्तो[3] वीरवाही विमानः कालेन प्रेषितो मां नेतुमागतः । भवतु । अयमयमागच्छामि ।
( स्वर्यातः[4] )

सर्वे—हाहा महाराज ।

रामः—हन्त स्वर्गं गतो वाली । सुग्रीव क्रियतामस्य संस्कारः ।

सुग्रीवः—यदाज्ञापयति देवः ।

रामः—लक्ष्मण सुग्रीवस्याभिषेकः कल्प्यताम्,

---

आचम्येत्यादि । आचम्य आचमनं कृत्वा । मां अभिगताः मां स्वर्गलोकं नेतुमागता इत्यर्थः । सहस्रहंसप्रयुक्तः अनेकहंसपङ्क्तिभिः आनीतः । वाहका हंसा इत्यर्थः । वीरवाही वीरं वोढुं शीलं यस्य सः । कालेन यथाकालं मम प्राणविच्युतिसमय इत्यर्थः । प्रेषितः देवैरिति शेषः । मां नेतुं स्वर्गं नेतुम् ।

हन्तेत्यादि । 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इत्यमरः ।

जडस्य वालिशरीरस्य संस्कारं कर्तुं सुग्रीवं प्रेरयति—सुग्रीवेत्यादि । संस्कारः अपरक्रिया ।

विनापराधं वालिना विद्रावितस्य सुग्रीवस्य प्रभूतकोपस्य श्रीरामसाहाय्येन वालिना सह युद्धायागमनं, विदितागमनवृत्तान्तस्य वालिनः तारया निराकृतस्यापि अविचार्य युद्धे प्रवृत्तिः, वालिना बलवता सुग्रीवस्य विनिपातनं, तद् दृष्ट्वा हनुमदादीनां सम्भ्रमाणां श्रीरामं प्रति विज्ञापनं, प्रच्छन्नस्य च रामस्य सहाय्यकरणप्रतिज्ञस्य वालिनमुद्दिश्य शरप्रेषणं, तेन विगतप्रज्ञस्य वालिनः पतनं, पुनः समाश्वासनं, अन्त्या-

---

१ 'मः—एवमस्तु' ख. २ हनुमन्नित्यारभ्य आचम्येत्यन्तं नास्ति क. ३ 'सयु' क. ४ 'स्वर्गं गतः' क. ग.

लक्ष्मणः—यदाज्ञापयत्यार्यः ।

( निष्क्रान्ताः सर्वे )

## प्रथमोऽङ्कः ।

वस्थां प्रतिपन्नं वालिनं द्रष्टुं कुमारस्यांगदस्यागमनं, तत्समाश्वासनं, सुग्रीवे वानराधिपत्यन्यासः, वालिनो वीरलोकप्राप्तिः, सुग्रीवस्याभिषेककल्पना च प्रथमेऽङ्के प्रतिपाद्यं वस्तु ।

इति प्रथमोऽङ्कः ॥

३

# अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति ककुभः )

**ककुभः**—निष्ठितप्रायत्वात् कार्यस्याहारव्यापृताः सर्वे वानरयूथपाः[1]। तस्मादहमपि किञ्चिदाहारजातं सम्भावयामि[2] । ( तथा[3] करोति )

( प्रविश्य[4] )

**बिलमुखः**—पेसिओ ह्नि महालाएण सुग्गीवेण—अंअरामस्स कि-दोवआरप्पच्चुवआरणिमित्तं सव्वासु दिसासु सीदाविअ-अणे पेसिआ[6] सव्वे वाणरा आअदा । तेसं दक्खिणापहमु-

सुग्रीवः वालिनिहननेनस्वस्योपकृतवतः श्रीरामस्य प्रतिप्रियं कर्त्तुकामः सीता-मन्वेष्टुं सर्वा दिशो वानरान् प्रेषयामास, तेषु च हनुमद्वर्जं सर्वे वानराः सीता-मदृष्ट्वैव प्रत्यागताः । हनुमांस्तु गृध्रवचनाद् रावणापहृतां सीतां विदित्वा लंका-गमनार्थं सागरं लंघितवान् इतीमं वृत्तान्तं रंगद्वारा सामाजिकानवबोधयितुं वान-रयोर्द्वयोः संवादरूपः मिश्रविष्कम्भः प्रस्तूयते । तत्र वानराधिपतिष्वन्यतमत्वात् ककुभस्य संस्कृतम्, वानरकिंकरेष्वन्यतमत्वाद् बिलमुखस्य प्राकृतं च वचनं कविना बद्धम् ।

ककुभस्य प्रवेशमाह—तत इति । निष्ठितप्रायत्वात् प्रायेणानुष्ठितत्वात्, निष्ठितं निर्व्यूढं । कार्यस्य सीताविचयनरूपस्य सर्वे वानरयूथपा वानरपतयः यूथ शब्दः समूहवाची ।

'सजातीयैः कुलं यूथं तिरश्चां पुन्नपुंसकम्' इत्यमरः । तिर्यक्समूहो यूथं, तिरश्चामतिरश्चां वा सजातीयानां समूहः कुलमिति भेदः । सीताविचयने प्रेषितास्ते विफलीभूताः प्रत्यागताः सन्तः इदानीमाहारव्यापृताः आहारं कर्तुं गताः । तस्माद् यतस्ते गताः तस्मादहमपि किञ्चिदाहारजातं आहारं जातपदं सम्पातादायातं संभाव-यामि सम्पादयामि । अभ्यवहर्तुं गच्छामीत्यर्थः ।

सुग्रीवकिंकरः बिलमुखो नाम वानरः । तं प्रवेशयति—प्रविश्येति । कृतोपकार-प्रत्युपकारनिमित्तं कृतः य उपकारः वालिहननरूपः तस्य यः प्रत्युपकारः सीता-विचयनरूपः तन्निमित्तमित्यर्थः । दक्षिणापथमुखस्य सीताविचयनार्थं दक्षिणां दिश-मनुप्रेषितः कुमार अंगदः प्रत्यागतो वानरेति ज्ञात्वा त्वरितमागच्छेत्यर्थः ।

१ 'रपतयः ख. ग. २ 'सम्पादया' ख. ३ 'तथा करोति' इति नास्ति क.
४ 'ततः प्रविशति बिलमुखः' ग. ५ 'सिदो' क. ६ 'सिदाः' क.

हस्स कुमारस्स अङ्गदस्स पवुत्तिं जाणिअ सिग्घं आअच्छात्ति। ता कहिं णु हु गओ कुमारो। ( परिक्रम्याग्रतो विलोक्य ) एसो अंअकउहो, जावणं पुच्छामि। ( उपसृत्य ) सुहं अंअस्स। (क)

ककुभः—अये बिलमुखः। [3]कुतो भवान्।

बिलमुखः—अंअ महाराअस्स सासणेण कुमारं अङ्गदं पेक्खिदुं आअदो ह्मि। (ख)

ककुभः—अपि कुशली आर्य रामो महाराजश्च।

बिलमुखः—आम।

ककुभः—कोऽभिप्रायो महाराजस्य।

बिलमुखः—पेसिओ ह्मि। (ग) ( इति[4] पूर्ववत् पठति )।

ककुभः—किं न जानीषे निष्ठितम[5]र्घं कार्यस्य।

बिलमुखः—[6]किं किम्।

(क) प्रेषितोऽस्मि महाराजेन सुग्रीवेण—आर्यरामस्य कृतोपकारप्रत्युपकारनिमित्तं सर्वासु दिशासु सीताविचयने प्रेषिताः सर्वे वानरा आगताः। तेषां दक्षिणापथमुखस्य कुमारस्याङ्गदस्य प्रवृत्तिं ज्ञात्वा शीघ्रमागच्छेति। तत् कुत्र नु खलु गतः कुमारः। एष आर्यककुभः। यावदेनं पृच्छामि, सुखमार्यस्य।

(ख) आर्य महाराजस्य शासनेन कुमारमङ्गदं प्रेक्षितुमागतोऽस्मि।

(ग) प्रेषितोऽस्मि।

अवन्तीं समतिक्रम्य ऋक्षवन्तं च पर्वतम्।
यो दक्षिणेन रेवायाः स देशो दक्षिणापथः॥

इत्युक्तलक्षणो दाक्षिणापथः।

कुत इति। कस्मात्प्रदेशादागच्छसीत्यर्थः।

आम इति। 'आं ज्ञातेऽथवा स्वीकारे' इति भरतः। आं शब्दो हलन्तोऽयमव्ययः।

कोऽभिप्राय इति। महाराजस्य कीदृशमभिप्रायं पुरस्कृत्य तत्किंकरस्य तवात्रागमनमित्यर्थः। किमर्थं महाराजेन त्वमत्र प्रेषित इति तात्पर्यम्।

किन्नेति। कार्यस्यार्द्धं सीताप्रवृत्तिविज्ञानरूपम् निष्ठितमनुष्ठितम्।

१ 'म्यावलोक्य' क. २ 'अम्मो ए' ख. ३ 'विलमुख कु' क. ४ 'ति पठति' क. ५ 'मर्थमार्य' क. ६ 'खः—किम्' क.

ककुभः—श्रूयताम्,

लब्ध्वा वृत्तान्तं रामपत्न्याः खगेन्द्रात्
आरुह्यागेन्द्रं सद्द्विपेन्द्रं महेन्द्रम् ।
लंकामभ्येतुं वायुपुत्रेण शीघ्रं
वीर्यप्राबल्याल्लङ्घितः सागरोऽद्य ॥ १ ॥

तस्मादागच्छ कुमारपादमूलमेव संश्रयावः ।

( निष्क्रान्तौ )

विष्कम्भकः ।

( ततः प्रविशति राक्षसीगणपरिवृता सीता )

सीता—हद्धि अदिधीरा खु ह्मि मन्दभाआ, जा अंअउत्तविरहिदा रक्खसराअभवणं आणीदा[1] अणिट्ठाणि अणरिहाणि जहमणोरहप्पवुत्ताणि वअणाणि साविअमाणा जीवामि[2] मन्दभाआ। आदु अंअउत्तसाअअप्पच्चएण कहं[3] वि अत्ताणं पंअवत्थावेमि । किंणु खु अज्ज पज्जालिअमाणे कम्मआरग्गिमण्डले[4] उदअप्पसेओ विअ किञ्चि हिअअप्पसादो समुप्पण्णो । किं णु खु मं अन्तरेण पसण्णहिअओ अंअउत्तो भवे । (क)

(क) हा धिक् अतिधीरा खल्वस्मि मन्दभागा । आर्यपुत्रविरहिता राक्षसराजभवनमानीताऽनिष्टान्यनर्हाणि यथामनोरथप्रवृत्तानि वचनानि श्राव्यमाणा जीवामि मन्दभागा अथवा आर्यपुत्रसायकप्रत्ययेन कथमप्यात्मानं पर्यवस्थापयामि, किन्नु खल्वद्य प्रज्वाल्यमाने कर्म्मकाराग्निमण्डले उदकप्रसेक इव किञ्चिद् हृदयप्रसादः समुत्पन्नः । किन्नु खलु मामन्तरेण प्रसन्नहृदय आर्यपुत्रो भवेत् ।

सीतायाश्च प्रवृत्तिः कथं केन विज्ञातेत्यादि कथयति—श्रूयतामिति ।

लब्ध्वेति । खगेन्द्राद् गृध्रात् जटायुषो मुखादित्यर्थः । रामपत्न्याः सीताया वृत्तान्तं लंकावासरूपं लब्ध्वा प्राप्य सद्द्विपेन्द्रं श्रेष्ठगजबहुलं महेन्द्रं महेन्द्राचलमारुह्य, सागरादौन्नत्यमचलस्येति अचलारोहणे सागरलंघनं सुकरमिति । वायुपुत्रेण हनुमता शीघ्रं विना विलम्बं लंकां रावणराजधानीं अभ्येतुं प्राप्तुं वीर्यप्राबल्यात् स्वपराक्रमविभवेन सागरः लवणोदधिः लंघितः ॥ १ ॥

हनुमतः सीतासन्दर्शनं, सीतासमक्षं रामवृत्तान्तविज्ञापनं च प्रस्तोतुं प्रथमं सीताप्रवेशमाह—तत इत्यादि । ततः राक्षसीगणपरिवृता रक्षार्थं रावणेन नियमि-

१ ‘दा जेण अ’ क. २ ‘मि आ’ क. ३ ‘हं चि अ’ ख. ४ ‘कमआ’ ख. ‘कमुआ’ ङ.

( ततः प्रविशति हनुमान्[1] अङ्गुलीयकहस्तः )

हनुमान्—(लङ्कां प्रविश्य) अहो रावणभवनस्य[2] विन्यासः ।

कनकरचिततचित्रतोरणाढ्या
मणिवरविद्रुमशोभितप्रदेशा ।
विमलविकृतसञ्चितैर्विमानैः-
र्वियति महेन्द्रपुरीव भाति लङ्का ॥ २ ॥

---

ताभीः राक्षसीभिः परिवृता । मन्दभागा भाग्यहीना अहं अतिधीरा खल्वस्मि । तस्मात् धिक् निन्द्या । 'आर्यपुत्रेति सम्बोध्यः पतिः पत्नीजनेन तु' इति भरतः । तत्र कारणमाह—येत्यात्यादि । अहं आर्यपुत्रविरहिता श्रीरामविरहिता । न केवलं भर्तृविरहिता अपि तु राक्षसराजस्य रावणस्य भवनं गृहमानीता हठादिति शेषः, यथामनोरथप्रवृत्तानि अनालोच्याविर्भूतानि विगीतानि वचनानि परिवृताभी राक्षसीभिः सदा श्राव्यमाणा । निस्सहायाहं एवंविधैर्दुःखैरपि पीड्यमाना जीवामि । तस्मादहमतिधीरैवास्मीति भावः । जीवितस्य पुनरपि भर्तृसमागमरूपं फलमस्तीत्याशंकते—अथवेति । आर्यपुत्रस्य श्रीरामस्य सायकेषु बाणेषु प्रत्ययेन विश्वासेन 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । श्रीरामप्रेषितैः सायकै रावणो हतो भवेदित्येवंरूपविश्वासेन कथमप्यात्मानं शोकाभितप्तं पर्यवस्थापयामि पुनः स्थिरीकरोमि । तादृशविश्वासस्य निमित्तभूतं स्वानुभवमुपक्षिपति—किन्विति । अद्य इदानीम् । अयस्तक्षणाद्यर्थं चत्वरप्रदेशस्थकर्मकारस्यायस्कारस्य अग्निमण्डले सम्यक् प्रज्वाल्यमाने सति तस्मिन्नुदकप्रसेकः जलसेचनं यथा शान्तिं उत्पादयेत् तद्वन्मम हृदयस्य प्रसादः समुत्पन्नः । प्रसादो दुःखाद्विरतिः । स च शुभसूचकः । हृदयप्रसादस्य कारणमुत्प्रेक्षते-किन्न्विति । मामन्तरेण मां प्रति ।

हनुमतः प्रवेशमाह--तत इति । अंगुलीयकहस्तः अंगुलीयकं हस्ते यस्य सः । 'अंगुलीयकमूर्मिका' इत्यमरः । अंगुलीयकानयनं च तद्दर्शनेन सीताया हनुमति रामदूत इति प्रत्ययो यथा स्यादिति । अन्यथा राक्षसः कश्चिद्वानरवेषेण प्रतारयितुमागत इति सा शंकेत । वस्तुतस्तु अंगुलीयकस्योपयोगः न कुत्राप्यस्मिन् रूपके प्रस्तुतः । तस्मात् अंगुलीयकहस्त इति विशेषणं नावश्यकम् ।

अहो इत्यादि । विन्यासः संविधानम् ।

कनकेत्यादि । कनकरचितैश्चित्रतोरणैः पत्रतोरणमकरतोरणादिभिराढ्या प्रभूता विशिष्टा वा । मणिवरैः श्रेष्ठैः मणिभिः विद्रुमैर्मुक्ताफलैश्च शोभितः प्रदेशः प्रान्तदेशो यस्या लंकायाः सा । विमलानि यानि विकृतानि कृत्रिमसौन्दर्याणि, तैः सञ्चिता आविष्कृतशोभा तैर्विमानैः वियति स्वर्गे महेन्द्रपुरीव अमरावतीव लंका भाति

---

1 'मान्—ल' क.    2 'णस्य भवनवि' ख. ङ.

अहो नु खलु ।

एतां प्राप्य दशग्रीवो राजलक्ष्मीमनुत्तमाम् ।
विमार्गप्रतिपन्नत्वाद् व्यापादयितुमुद्यतः ॥ ३ ॥

(सर्वतो गत्वा) विचरितप्राया मया लङ्का ।

गर्भागारविनिष्कुटेषु बहुशः शालाविमानादिषु
स्नानागारनिशाचरेन्द्रभवन[1]प्रासादहर्म्येषु च ।
पानागारनिशान्त[2]देशविवरेष्वाक्रान्तवानस्म्यहं
सर्वं भो विचितं न चैव नृपतेः पत्नी मया दृश्यते ॥ ४ ॥

अहो व्यर्थो मे परिश्रमः । भवतु, एतद्धर्म्याग्रमारुह्यावलोकयामि । ( तथा[3] कृत्वा ) अये अयं प्रमदवनराशिः ।

इमं प्रविश्य परीक्षिष्ये । ( प्रविश्यावलोक्य )

अहो प्रमदवनसमृद्धिः । इह हि,

कनकर[4]चितविद्रुमेन्द्रनीलै-
र्विकृतमहाद्रुमपङ्क्तिचित्रदेशा ।

शोभते । अमरावतीसादृश्यं लंकाया उक्तम् ।

एतामिति--अनुत्तमां सर्वश्लाघ्यां एतां राजलक्ष्मीं प्राप्य स्थितः दशग्रीवः रावणः विमार्गप्रतिपन्नत्वाद् दुराचाराभिनिवेशात् एतामेव राज्यसम्पदं व्यापादयितुं नाशयितुमुद्यतः बद्धकक्षो जातः ॥ ३ ॥

विचरितेत्यादि । प्रायेण लंकायां सर्वोऽपि प्रदेशः मया आहिण्डित इत्यर्थः ।

विचरितान् प्रदेशान् वर्णयति ।—**गर्भेत्यादि** । गर्भागारेषु गृहमध्यभागेषु ये विनिष्कुटा स्त्रीनिवासप्रदेशाः तेषु, शालाविमानादिषु शालासु शालोपरिभागेषु यानि विमानानि तेषु तदन्तर्भागेष्वित्यर्थः । स्नानागारेषु स्नानार्थं यानि गृहाणि तेषु निशाचरेन्द्रस्य रावणस्य भवने गृहे ये प्रासादाः सौधा हर्म्याणि उत्तुंगगृहाणि तेषु च, पानागारेषु पानीयशालिकासु निशान्तदेशविवरेषु अन्तःपुरप्रदेशेषु च, बहुशः अनेकवारं, बहुश इति सन्तापे अहमाक्रान्तवानस्मि प्रविष्टवानस्मि । सीतामन्वेष्टुमिति शेषः । भोः इति कष्टार्थे । तस्य च कारणं स्वप्रयत्नस्य विफलीभावः । सर्वं स्थानं विचितं, नृपतेः पत्नी सीता तु मया न दृश्यते ॥४॥

अहो इत्यादि । इमं प्रमदवनम् ।

प्रमदवनसमृद्धिं वर्णयति—कनकेति, कनकेन सुवर्णेन रचिता आरोपितसौन्दर्या ये विद्रुमाः प्रवाला इन्द्रनीला मणयश्च तैः, रुचिरतरनगा मनोज्ञतर-

१ 'वने प्रा' क. २ 'न्तरेषु वि' क. ३ 'आरुह्यावलोक्य' ख. घ.
४ 'रजत' क.

रुचिरतरङ्गा विभाति शुभ्रा
नभसि सुरेन्द्रविहारभूमिकल्पा ॥ ५ ॥

अपि च,
चित्रप्रस्तुतहेमधातुरुचिराः शैलाश्च दृष्टा मया
नानावारिचराण्डजैर्विरचिता दृष्टा मया दीर्घिकाः।
नित्यं पुष्पफलाढ्यपादपयुता देशाश्च दृष्टा मया
सर्वं दृष्टमिदं हि रावणगृहे सीता न दृष्टा मया ॥ ६ ॥

को नु खल्वेतस्मिन् प्रदेशे सप्रभ इव दृश्यते[4]। तत्र तावदवलोकयामि। (तथा कृत्वा) अये का नु खल्वियम्।

राक्षसीभिः परिवृता विकृताभिः सुमध्यमा।
नीलजीमूतमध्यस्था विद्युल्लेखेव शोभते ॥ ७ ॥

यैषा,
असितभुजगकल्पां धारयन्त्येकवेणीं

---

क्रीडापर्वतका, विकृता उद्यानपालकैः स्वयं वर्धिता ये महाद्रुमा सालादयः तेषां पंक्तिभिः चित्रदेशा विचित्रप्रदेशा शुभ्रा निर्मला प्रमदवनभूमिः नभसि सुरेन्द्रस्य या विहारभूमिः तद्वत् शोभते ॥ ५ ॥

चित्रेति। चित्रं नानाप्रकारेण प्रस्तुता प्रस्यन्दिता हेमधातवः हारिद्रधातवः तैः रुचिरा मनोज्ञा शैला मया दृष्टाः, नानावारिचराण्डजैर्विरचिताः विचरितेति स्यात्। नानाविधा ये जलसञ्चारिपक्षिविशेषाः सारसादयः नैर्विशिष्टा दीर्घिकाः तटाकाश्च मया अत्र प्रमदवने दृष्टाः, तथा नित्यं सदा पुष्पैः फलैश्च आढ्या प्रभूता ये पादपा वृक्षाः तैः सहिता प्रदेशाश्च मया दृष्टाः। रावणगृहे पूर्वोक्तं सर्वमिदं दृष्टम्। सीता तु मया न दृष्टा ॥ ६ ॥

को न्वित्यादि। एतस्मिन् प्रदेशे प्रमदवनप्रदेशे को नु खलु असाधारणो जनः सप्रभः कान्तिविशिष्ट इव दृश्यते। तत्र यत्र कान्तिवैशिष्ट्यं दृश्यते तस्मिन्प्रदेशे।

अवलोकनेन स्त्रीप्रकृतिं विदित्वाह—अये इत्यादि।

राक्षसीभिरिति। राक्षसस्त्रीभिः विकृताभि र्निन्द्यवेषाभिः परितो वृता, तस्मादेवास्या सुमध्यमात्वम्। नीलजीमूतमध्यस्था सजलजलधरस्य मध्ये वर्तमाना विद्युल्लेखेव तडिदिव शोभते। नीलजीमूतसादृश्यं राक्षसीनां, तडित्सादृश्यं सुमध्यमायाः। उपमा ॥ ७ ॥

सुमध्यमायास्तात्कालिकीमवस्थामाह—**असितेति**। असितभुजगः कृष्णसर्पः तत्तुल्यवर्णदीर्घां एकवेणीं केशपाशं धारयन्ती, करपरिमितमध्या मुष्टिग्राह्यमध्य-

---

१ 'तरुन' क. २ 'राजितैर्वि' क. ३ 'सा दर्शिता' घ. ४ 'ते' यैषा—असिते'त्यादि क.

करपरिमितमध्या कान्तसंसक्तचित्ता ।
अनशनकृशदेहा बाष्पसंसिक्तवक्त्रा
सरसिजवनमालेवातपे विप्रविद्धा ॥ ९ ॥

[1]अये कथं दीपिकावलोकः । ( विलो[2]क्य ) अये रावणः ।

मणिविरचितमौलिश्चारुताम्रायताक्षो
मद[3]सललितगामी मत्तमातङ्गलीलः ।
युवतिज[4]ननिकाये भात्य[5]सौ राक्षसेशो
हरिरिव हरिणीनामन्तरे चेष्टमानः ॥ १० ॥

[6]किमिदानीं करिष्ये । भवतु । दृष्टम् । एनमशोकपादपमारुह्य कोटरान्त[7]रितो भूत्वा दृढं वृत्तान्तं ज्ञास्यामि । ( त[8]था करोति ) ।

---

प्रदेशा, कान्ते श्रीरामे संसक्तं व्यापृतं चित्तं स्वान्तं यस्यास्तादृशी, अनशनेन आहाराभावेन कृशः देहः यस्याः सा, बाष्पैः नयनजलैः संसिक्तं वक्त्रं यस्याः सा, आतपे विप्रविद्धा दीना त्यक्ता वा सरसिजवनमालेव स्थिता वनपुष्पैः ग्रथिता माला वनमाला । लक्षणं तु,

आजानुलम्बिनी माला सर्वर्तुकुसुमोज्वला ।
मध्ये स्थूलकदम्बाढ्या वनमालेति कीर्तिता ॥ इति ।

अत्र नवमालेत्येव पाठः स्यात् । सरसिजैः ग्रथिता या नूतनमाला, सा यथा आतपे शोषमुपयाति तद्वदित्यर्थः । सरसिजवनमालेति यथाश्रुतपाठे तु वनोत्पन्नैः सरसिजैर्ग्रथिता मालेति अर्थः कल्प्यः ॥ ९ ॥

प्रमदवने रावणसन्निधानमाह—अये इत्यादि ।

मणीति—मणिभिर्विरचितः निर्मितः किरीटः यस्य सः, चारुताम्रायताक्षः चारुणी ताम्रे आयते चाक्षिणी यस्य सः, मदेन औद्धत्येन सललितं लीलासहितं यथा तथा गमनशीलं यस्य सः । मत्तमातंगलीलः मदोद्धतगजेन्द्रस्य लीलेव लीला यस्य सः । तादृशोऽयं राक्षसेन्द्रः रावणः हरिणीनामन्तरे मृगीणामन्तरे चेष्टमानः व्यर्थविगीतचेष्टाविशिष्टः हरिरिव सिंह इव युवतिजननिकाये तरुणीजनसमूहे चेष्टमानः भाति । यथा सिंहः हरिणीनां प्रतिभयकारी तद्वद् युवतीनां प्रतिभयकारी रावण इत्यर्थः ॥ १० ॥

किमित्यादि । कोटरान्तरितः वृक्षस्य गुहाद्वारं कोटरः तत्र अन्तरितः अन्तर्भूतः । यथान्ये न पश्येरन् तथेत्यर्थः । दृढं वृत्तान्तं तत्त्वेन वृत्तान्तं वर्तिष्यमाणम् । रावणः किं करिष्यतीति पश्यामीति तात्पर्यम् ।

---

१ 'अये' इति नास्ति. क. २ 'विलोक्य' इति नास्ति. क. ३ 'दविगलितगा' क. ४ 'नसमूहे' क. ग. 'नसमीपे' ङ. ५ 'त्ययं रा' क. ६ 'भवत्वेनमशोक' क. ७ 'न्तर्हितो' क. ८ 'था कृत्वा' क.

( ततः प्रविशति रावणः सपरिवारः )

रावणः—

दिव्यास्त्रैः सुरदैत्यदानवचमूविद्रावणं रावणं
युद्धे क्रुद्धसुरेभदन्तकुलिशव्यालीढवक्षःस्थलम् ।
सीता मामविवेकिनी न रमते सक्ता च मुग्धेक्षणा
क्षुद्रे क्षत्रियतापसे ध्रुवमहो दैवस्य विघ्नक्रिया ॥ १० ॥

( ऊर्ध्वमवलोक्य ) एष एष चन्द्रमाः,

रजतरचितदर्पणप्रकाशः
करनिकरैर्हृदयं ममाभिपीड्य,
उदयति गगने विजृम्भमाणः
कुमुदवनप्रियबान्धवः शशाङ्कः ॥ ११ ॥

( परिक्रम्य ) एषा सीता पादपमूलमाश्रित्य ध्यानसंवीतहृदयान-

रावणस्य प्रवेशमाह—तत इति ।

रावणः स्वश्लाघां स्फोरयति—दिव्येति । सुरदैत्यदानवचमूनां विद्रावणं नाशकरं, विद्रावयतीति विद्रावणः । द्रुवेगितायां गतौ । युद्धे क्रुद्धः यः देवेन्द्रस्य गजः तस्य दन्त एव कुलिशः वज्रं तेन व्यालीढं विद्धं वक्षःस्थलं यस्य तादृशं मां उद्दिश्येति शेषः । आविवेकिनी विवेकरहिता सीता न रमते मयि अनुरागयुक्ता न भवति, क्षुद्रे तुच्छे क्षत्रियतापसे रामे मुग्धेक्षणा सक्ता च अनुरक्ता च । ध्रुवं नूनम् । बलसम्पदादिविशिष्टे मयि न सक्ता तद्रहिते क्षुद्रपुरुषे आसक्ता चेतीदमहो आश्चर्यम् । दैवस्य विघ्नक्रिया, मय्यासक्ता न भवतीत्यत्र कारणं दैवस्य विघ्नक्रियेत्यर्थः ॥ १० ॥

चन्द्रोऽपि स्वस्य सन्तापकर इत्याह—रजतेति । दर्पणः स्वत एव श्वेतः ततोपि रजतपट्टिकायां निबद्धो मुकुरः श्वेततरः तस्य प्रकाश इव प्रकाशो यस्य सः । करनिकरैः किरणसमूहैः मम चित्तं तापयित्वा अभिपीड्य समानकाले क्त्वा प्रत्ययः । वक्त्रं व्यादाय स्वपितीति वत् । गगने विजृम्भमाणः आकाशमण्डले कृतप्रसारः । कुमुदवनप्रियबन्धुः, चन्द्रोदये हि कुमुदा विकसन्ति । शशांकः चन्द्रः उदयति । अत्र शशांक इति विशेष्यपदसत्वाद् वाक्यखण्डस्थचन्द्रमा इति पदस्यान्वयः कुत्रेति चिन्त्यम् ॥ ११ ॥

एषेत्यादि । ध्यानसंवीतहृदया ध्यानैकाग्रचित्ता अनाहारेण दीनं वदनं यस्याः सा, स्वदेहमिव प्रवेष्टुकामा अन्यासंगं परिहर्तुकामा इत्यर्थः । संगूढौ संगुप्तौ

१ 'शक्रो त्कृष्टवक्षःस्थले' क २ 'नरपते'. क. ३ 'क्षणे क्षु'. क. ४ 'क्व एष चन्द्रः'. क. ५ ( परिक्रम्य ) इति नास्ति. क. ६ 'पमा'. क.

शनक्षामवदना स्वदेहमिव प्रवेष्टुकामा सङ्गूढस्तनोदरी दुर्दिनान्तर्गता चन्द्रलेखेव राक्षसीगणपरिवृतोपविष्टा । यैषा,

अपास्य भोगान् मां चैव श्रियं च महतीमिमाम् ।
मानुषे न्यस्तहृदया नैव वश्यत्वमागता ॥ १२ ॥

हनुमान्—हन्त सुविज्ञातम् ।

इयं सा राजतनया पत्नी रामस्य मैथिली ।
सिंहदर्शनवित्रस्ता मृगीव परितप्यते ॥ १३ ॥

रावणः—( उपेत्य[1] )

सीते त्यज त्वं व्रतमुग्रचर्यं
भजस्व मां भामिनि सर्वगात्रैः ।
अपास्य तं मानुषमद्य भद्रे
गतायुषं कामपथान्निवृत्तम् ॥ १४ ॥

सीता—हस्सो खु[2] रावणओ, जो वअणगअसिद्धिं वि ण जाणादि । ( क )

हनुमान्—( सक्रोधं ) अहो रावणस्यावलेपः ।

---

( क ) हास्यः खलु रावणकः, यो वचनगतसिद्धिमपि न जानाति ।

---

स्तनौ संगुप्तमुदरं च यस्याः सा । दुर्दिनान्तर्गता 'मेघच्छन्नेऽह्नि दुर्दिन' मित्यमरः । चन्द्रलेखेव ।

अपास्येति । भोगान् भोगयोग्यान् विषयान् इमां मत्संलग्नां महतीं श्रियं ऐश्वर्यसम्पदं अपास्य त्यक्त्वा मानुषे रामे न्यस्तं हृदयं यया सा तथाभूता सीता मम वश्यत्वं नैवागता । ममैतादृशं भाग्यं ज्ञात्वापि न मम वशमागता इत्यर्थः ॥१२॥

सीताविषयकं रावणजल्पितं श्रुत्वा हनुमान् सुमध्यमां तां सीतामवगच्छति—हन्तेति ।

इयमिति । इयं सन्निहिता पादपमूलमाश्रित्य स्थिता सिंहदर्शनेन भयविह्वला मृगी यथा परितप्येत तद्वदियं सीता रावणदर्शनेन भयविह्वला परितप्यते ।

सीते इति । उग्रचर्यं उग्रा चर्या यस्याः । दुरनुष्ठेयमित्यर्थः । व्रतं स्वभर्तृध्यानरूपं, सर्वगात्रैः मनसा वाचा कर्मणा च इत्यर्थः । कामपथात् ऐहिकान्निवृत्तं, गतायुषमित्याशाभंजनार्थमुक्तिः ।

हस्सो इत्यादि । वचनं शापवाक्यं आशीर्वाक्यं वा गता आश्रिता सिद्धिः अशुभनिष्पत्तिः शुभनिष्पत्तिर्वा यस्यास्तां वचनगतसिद्धिम् । पातिव्रत्यमाहिम्ना वाङ्मा

---

१ 'उपेत्य' इति नास्ति. क. २ 'खु सिरा' ख. ग. घ. च. 'खु लावणो'. क.

तौ च बाहू न विज्ञाय तच्चापि सुमहद् धनुः।
सायकं चापि रामस्य गतायुरिति भाषते ॥ १५ ॥

न[1] शक्नोमि रोषं धारयितुम्। भवतु, अहमेवार्यरामस्य कार्यं साधयामि। अथवा,

यद्यहं रावणं हन्मि कार्यसिद्धिर्भविष्यति।
यदि मां प्रहरेद् रक्षो महत् कार्यं विपद्यते ॥ १६ ॥

रावणः—वरतनु तनुगात्रि कान्तनेत्रे
कुवलयदाम[2]निभां विमुच्य वेणीम्।
बहुविधमणिरत्नभूषिताङ्गं
दशशिरसं[3] मनसा भजस्व देवि ॥ १७ ॥

सीता—हं विपरीओ खु धम्मो, जं जीवदि खु अअं पावरक्खसो। (क)

रावणः—ननु देवि।

सीता—सत्तो सि। (ख)

रावणः—हहह, अहो पतिव्रतायास्तेजः।

देवाः सेन्द्रादयो भग्नाः दानवाश्च मया रणे।
सोऽहं मोहं गतोऽस्म्यद्य सीतायास्त्रिभिरक्षरैः ॥ १८ ॥

---

(क) हं विपरीतः खलु धर्मः। यद् जीवति खल्वयं पापराक्षसः।

(ख) शप्तोऽसि।

---

नेण दुर्जननिग्रहणाशक्तां मामिति शेषः। वचनगतां सिद्धिं। साधुव्यवहारे अनुग्रहो भवति। असद्व्यवहारे न इति न जानातीत्यर्थः।

अहो इत्यादि। अवलेपो गर्वः।

तौ चेति। बाहू श्रीरामस्येति शेषः ॥ १५ ॥

सीते त्वमित्यादि श्लोकगतं गतायुषमित्यसत्यवचनं रावणस्य श्रुत्वा हनुमान् अतीव क्रुद्धः रावणहननं चिन्तयति—न शक्नोमीत्यादि। धारयितुं नियन्तुम्। आर्यरामस्य कार्यं रावणवधेन सीताप्रत्यानयनरूपम्।

इदानीं रावणहनने अभिलषितफलप्राप्तेर्विरोधोस्तीति चिन्तयन्नाह—अथवा इति। त्यक्त ॥ १६ ॥

वरतनुरिति। कुवलयपुष्पैः यद्दाम माल्यम्। कुवलयपुष्पं नीलवर्णम्। दशशिरसं मामिति शेषः। मय्यनुरक्ता भवेति तात्पर्यम् ॥ १७ ॥

हमित्यादि संवादचतुष्टयम्।

देवा इति। त्रिभिरक्षरैः सीतोच्चारितैः सत्तोसि इत्येवंरूपैः ॥ १८ ॥

---

१ 'न' इति नास्ति. क. २ 'दामनिभां वर्णि' क. ३ 'सं सुमना' क.

( नेपथ्ये ) [1]जयतु देवः । जयतु लङ्केश्वरः । जयतु स्वामी । जयतु महाराजः । दश नाडिकाः पूर्णाः । अतिक्रामति स्नानवेला । इत इतो महाराजः ।

( निष्क्रान्तः[2] सपरिवारो रावणः )

हनुमान्—हन्त[3] निर्गतो रावणः, सुप्ताश्च राक्षसस्त्रियः । अयं कालो देवीमुपसर्पितुम् । ( कोटरा[4]दवरुह्य ) जयत्वविधवा ।

प्रेषितोऽहं नरेन्द्रेण रामेण विदितात्मना ।
त्वद्गतस्नेहसन्ता[5]पविक्लबीकृतचेतसा ॥ १६ ॥

सीता—( आत्मगतं ) [6]कोणु खु अअं, पापरक्खसो अअउत्तकेरओ त्ति अत्ताणं ववदिसिअ वाणररूवेण मं वञ्चिदुकामो भवे । भोदु, तुण्हिआ भविस्सम् । ( क )

हनुमान्—कथं न प्र[7]त्येति भवती । अलमन्यशङ्कया । श्रोतुमर्हति भवती ।

इक्ष्वाकुकुलदीपेन सन्धाय हरि[8]णा त्वहम् ।

( क ) को नु खल्वयं, पापराक्षस आर्यपुत्रसम्बन्धीत्यात्मानं व्यपदिश्य वानररूपेण मां वञ्चयितुकामो भवेत् । भवतु, तूष्णीका भविष्यामि ।

किंकरस्य स्नानवेलाबोधिकां नेपथ्यवाचमाह—जयत्विति । दशनाडिकाः उदयात्प्रभृतीत्यार्थम् ।

प्रेषित इति । त्वद्गतेन स्नेहेन प्रेम्णा सन्तापेन दुःखेन, पूर्वानुभूतदाम्पत्यसुखत्वात् स्नेहः, वियोगाद् दुःखं, विक्लबीकृतः व्याकुलीकृतः चेतश्चित्तं यस्य तेन ॥ १६ ॥

कोणुखु इत्यादि । तस्येदमित्यर्थे केरकं, व्यपदिश्य अलीकमुक्त्वा ।

कथमित्यादि । प्रत्येति विश्वसिति । अलमन्यशंकया राक्षसा वानरवेषेण प्रतारयन्तीति शंकया अलमित्यर्थः । श्रोतुमर्हति कोहमिति शेषः ।

स्वात्मानं निवेदयति—इक्ष्वाकुकुलेति । इक्ष्वाकुकुलदीपेन रामेण । इक्ष्वाकु-

१ 'दश नाडिकाः पूर्णाः । गतः पूर्वीयामः, अति' ग. घ. ङ. च. 'दश नाडिकाः पूर्णाः । अतिक्रामति स्नानवेला । प्रध्वनन्ति शंखपटहाः । इत' क. २ 'ष्क्रान्तो रावणः सपरिवारः. क. ३ 'हन्त' इति नास्ति. क. ४ 'कोटराद्' इति नास्ति. क. ५ 'न्तापाद् वि'. क. ख. ग. ङ. ६ 'किंणु' क. ७ 'कथमप्रत्याख्यायति'. क. 'प्रत्याययति भ'. ग. 'प्रत्याययति देवा' ख. च. ८ 'हरिरित्यहं' क.

प्रेषितस्त्वद्विचित्यर्थं हनूमान् नाम वानरः ॥ २० ॥

**सीता**—( आत्मगतं ) जो वा को वा भोदु । अअउत्तणासङ्कीत्तणेण अहं एदेण अभिभासिस्सम् । ( प्रकाशं ) भद्द को वुत्तन्तो अअउत्तस्स ।

**हनुमान्**—भवति श्रूयताम्,

अनशनपरितप्तं पाण्डु स[1] क्षामवक्त्रं
तव वरगुणचिन्तावीतलावण्य[2]लीलम् ।
वहति विगतधैर्यं हीयमानं शरीरं
मनसिजशरदग्धं बाष्पपर्याकुलाक्षम् ॥ २१ ॥

**सीता**—( [3]आत्मगतं ) [4]हद्धि वीलिआ खु हिम मन्दभाआ एवं सोअन्तं अअउत्तं सुणिअ । अअउत्तस्स विरहपरिस्समो वि मे सफलो सव्वुत्तो[5] त्ति पेक्खामि, जदि खु अअं वाणरो सच्चं मन्तेदि । अअउत्तस्स इमस्सिं जणे अणुक्कोसं परिस्समं च सुणिअ सुहस्स दुक्खस्स अ अन्तरे डोलाअदि

---

नाम रामकुलकूटस्थो राजविशेषः । तत्सम्बन्धात्तद्वंश्या अपीक्ष्वाकवः । हरिणा सुग्रीवेण सन्धाय सन्धिं कृत्वा अहं त्वद्विचित्यर्थं त्वामन्वेष्टुं नाम्ना हनुमान् वानरः प्रेषितोऽस्मि ॥ २० ॥

भवतीत्यादि । श्रूयतां श्रीरामवृत्तान्त इति शेषः ।

अनशनेति । अनाहारेण परितप्तं शुष्कं पाण्डुवर्णं तव वरगुणानां श्रेष्ठगुणानां चिन्तया वीता गता लावण्यलीला यस्य तत् । लावण्यलक्षणं तु,

मुक्ताफलेषु छायाया तरलत्वमिवान्तरा ।
प्रतिभाति यदंगेषु तल्लावण्यमिहोच्यते ॥ इति ।

क्षमावक्त्रं दीनमुखं, मनसिजशरदग्धं मन्मथशरेण दग्धं । मनसिजस्य शराः पञ्चेषवः,

अरविन्दमशोकं च चूतं च नवमल्लिका ।
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥ इति ।

यद्वा मोहनशोषणादयः शराः तैर्दग्धम् । सीतावियोगोऽत्र कारणम् । बाष्पजलैराकीर्णनेत्रं, हीयमानं प्रतिदिनमपचीयमानं विगतधैर्यं गतधीरस्वभावं शरीरं वहति धारयति राम इत्यार्थम् । इति स्वभावोक्तिः ॥ २१ ॥

हद्धीत्यादि । व्रीडिता लज्जिता । एवं शोचन्तं मदर्थे एवमनुतप्यमानं, विरहप-

---

१ 'संक्षा'. क. २ 'ण्यलील'. क. ३ ( स्वगतं ) बी. ग. ४ 'पीडिता खु'. क. च. 'अदिघीरा खु' ५ 'त्तो, जदि'. ग.

विअ मे हिअअम् । ( प्रकाशं ) भद्द कहं तुह्मेहिं अअउत्तस्स संगमो जादो । ( क )

हनुमान्—भवति श्रूयताम् ।

हत्वा वालिनमाहवे कपिवरं त्वत्कारणादग्रजं
सुग्रीवस्य कृतं नरेन्द्रतनये राज्यं हरीणां ततः ।
राज्ञा त्वद्विचयाय चापि हरयः सर्वा दिशः प्रेषिताः
तेषामस्म्यहमद्य गृध्रवचनात् त्वां देवि सम्प्राप्तवान् ॥ २२ ॥

अपि च ईदृशमिव ।

सीता—अहो अअरुणा क्खु इस्सरा एव्वं सोअन्तं अंअउत्तं करअन्तो । (ख)

हनुमान्—भवति मा विषादेन । रामो हि,

( क ) हा धिग् व्रीडिता खल्वस्मि मन्दभागा एवं शोचन्तमार्यपुत्रं श्रुत्वा । आर्यपुत्रस्य विरहपरिश्रमोऽपि मे सफलः संवृत्त इति पश्यामि, यदि खल्वयं वानरः सत्यं मन्त्रयते । आर्यपुत्रस्यास्मिन् जनेऽनुक्रोशं परिश्रमं च श्रुत्वा सुखस्य दुःखस्य चान्तरे दोलायत इव मे हृदयम् । भद्र कथं युष्माभिरार्यपुत्रस्य संगमो जातः ।

(ख) अहो अकरुणाः खल्वीश्वरा एवं शोचन्तमार्यपुत्रं कुर्वन्तः ।

रिश्रमः मत्प्रत्यानयनरूपफलसहित एव भवेत्, यद्ययं वानरः आर्यपुत्रेण प्रेषित एव सन् सत्यं ब्रूते अनुक्रोशं पश्चात्तापं विदित्वा ।

सुग्रीवसख्यस्य कारणादिकमाह—भवतीत्यादि ।

हत्वेति । हे नरेन्द्रतनये जनकपुत्रि सीते त्वत्कारणात् त्वन्निमित्तात् त्वां प्रत्यानेतुं सुग्रीवसाहाय्यस्यावश्यकत्वात् । सुग्रीवस्येति पदं मध्यमणिन्यायेन पूर्वत्र परत्र च सम्बध्यते । सुग्रीवस्याग्रजं ज्येष्ठं कपिवरं कपिश्रेष्ठं वालिनं आहवे युद्धे हत्वा ततः हरीणां वानराणां राज्यं सुग्रीवस्य कृतम् । सुग्रीवो रामेण वालिस्थाने अभिषिक्त इत्यर्थः । राज्ञा चापि सुग्रीवेण च त्वद्विचयाय त्वदन्वेषणार्थं हरयः वानराः सर्वास्वपि दिक्षु प्रेषिताः । तेषां वानराणां मध्ये अहं गृध्रवचनात् जटायुवचनात् त्वामिदानीं सम्प्राप्तवानस्मि ॥ २२ ॥

अपि चेत्यादि । ईदृशमिवेत्यनेन श्रीरामस्यावस्थां स्वैरमाह ।

अहो इति । देवानां कारुण्याभावाद् भाग्यरिष्टस्यावारणीयतया च स्वभर्तुरीदृशी शोच्यावस्था जातेति भावः ।

भवतीत्यादि । मा विषादेन दुःखेनालमित्यर्थः ।

१ 'णाद्र भामिनि' क. ख. ग. ङ. च.

प्रगृहीतमहाचापो वृतो वानरसेनया।
समुद्धर्त्तुं दशग्रीवं लङ्कामेवाभियास्यति ॥ २३ ॥

सीता—किएणु खु सिविणो मए दिट्ठो[2]। भद्द[3] अवि सच्चं। ए आ-णामि। (क)

हनुमान्—[4]( स्वगतं ) भोः कष्टम्।

एवं गाढं परिज्ञाय भर्तारं भर्तृवत्सला।
न प्रत्यायति शोकार्त्ता यथा देहान्तरं गता ॥ २४ ॥

( [5]प्रकाशं) भवति अयमिदानीं।

समुदितवरचापबाणपाणिं
पतिमिह राजसुते तवानयामि।

---

(क) किन्नु खलु स्वप्नो मया दृष्टः। भद्र अपि सत्यम्। न जानामि।

---

प्रगृहीतेति। प्रकर्षेण गृहीतः महाचापः येन सः, वानरसेनया परिवृतः, मन्निवेदितवृत्तान्तः सन् दशग्रीवं समुद्धर्तुं लोकोपप्लवकारिणो दशग्रीवस्य कण्टकरूपत्वात् तं मूलतो निहन्तुं रामः अचिरेण लंकामेवागमिष्यति ॥ २३ ॥

द्वीपान्तरेऽस्मिन् स्वाभिजनप्रदेशाद् बह्वन्तरिते स्वानुकूलवाक्यश्रवणमसम्भावितं निश्चिन्वाना सर्वमपीदानीं श्रुतं प्रियवाक्यं सीता स्वप्न इत्याह—किएणु इत्यादि। न जानामि इदं सत्यं वा नवेति न जानामीत्यर्थः।

एवमिति। भर्तृवत्सला एवं भर्त्तारं गाढं दृढं परिज्ञाय विज्ञाय शोकार्ता दुःखपीडिता देहान्तरं गतेव न प्रत्यायति। प्रत्यायनीति प्रत्याङ्पूर्वोऽयतिः प्रत्येतीत्यर्थे। न विश्वसिति।

समुदितेति। चापश्च बाणाश्च चापबाणाः समुदिताः समुद्धृताः श्रेष्ठा ये चापबाणाः पाणौ यस्य तादृशं तव पतिमिह शीघ्रमानयामि। मयि त्वं विगतसंशया त्यक्तराक्षससन्देहा भव। त्वमचिराद् विनीतशोका अपगतदुःखा नरवरपार्श्वगता श्रीरामसमीपगता च भविष्यसीति शेषः। भवसि इति पाठे वर्त्तमानसामीप्ये वर्त्तमानवद्वा ॥ २४ ॥

रामदूतः कश्चित्सीतां विचेतुमागत इति रावणमवबोधयितुमुपायमन्विष्यन्नाह—कथमित्यादि।

उपायो दृष्ट इत्याह—भवत्वित्यादि।

परभृतेति। परभृतगणैः पिकसमूहैः जुष्टं पिकस्यशब्दः कुहू इति। परेणभृतः

---

१ 'विगृ' क. २ 'ट्ठो, अ' ख. ग. च. ३ 'द्द स' क. ४ 'मान्—भोः' क.
५ 'प्रकाशं' इति नास्ति क.

भव हि[1] विगतसंशया मयि त्वं
नरवरपार्श्वगता विनीतशोका ॥ २५ ॥

सीता—भद्द एदं मे अवत्थं सुणिअ अंअउत्तो जह सोअपरवसो ण होइ, तह मे वुत्तन्तं भणेहि । (क)

हनुमान्—यदाज्ञापयति भवती[2] ।

सीता—गच्छ कंअसिद्धी होदु । (ख)

हनुमान्—अनुगृहीतोऽस्मि, ( परिक्रम्य ) कथमिदानीं ममागमनं रावणाय निवेदयामि । भवतु, दृष्टम् ।

परभृतगणजुष्टं पद्मषण्डाभिरामं
सुरुचिरतरुषण्डं तोयदाभं[3] त्रिकूटम् ।
करचरणविमर्दैः काननं चूर्णयित्वा
विगतविषयदर्पं राक्षसेशं करोमि ॥ २६ ॥ ( निष्क्रान्तौ[4] )

द्वितीयोऽङ्कः ।

---

(क) भद्र एतां मेऽवस्थां श्रुत्वार्यपुत्रो यथा शोकपरवशो न भवति, तथा मे वृत्तान्तं भण ।

(क) गच्छ कार्यसिद्धिर्भवतु ।

---

पोषितः परभृतः । काकपिकयोः स्वरूपतो नास्ति भेदः । मन्दबुद्धिः काकः पिकशिशुं स्वापत्यमिति मत्वा आहारादिदानेन स्वनीडावस्थापनेन च पालयति । वसन्तकाले प्राप्ते सति जातस्वातन्त्र्यः पिकः काककृतमुपकारं विस्मृत्य यथेच्छं विहरति, श्लोकोपि चास्मिन्नर्थे—

काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः ।
वसन्तकाले सम्प्राप्ते काकः काकः पिकः पिकः ॥ इति ।

पद्मषण्डैः कमलसमूहैः अभिरामं मनोज्ञं सुरुचिरतरुषण्डं मनोज्ञतरुगणयुतं तोयदाभं जलधरशोभं त्रिकूटं अस्मिन् भग्ने त्रिकूट एव भग्नो भवति इति त्रिकूटमित्युक्तम् काननं करविमर्दैः चरणविमर्दैश्च चूर्णीकृत्य राक्षसेशं रावणं भोग्यविषयगताभिमानरहितं करोमि ॥ २६ ॥

द्वितीयेस्मिन्नङ्के. सीतामन्वेष्टुं सर्वासु दिशासु सुग्रीवकृतं वानरप्रेषणं, हनुमद्वर्जमन्येषां वानराणां सीतामदृष्ट्वैव प्रत्यागमनं, गृध्रवचनाद्विदितसीतावृत्तान्तस्य हनुमतः सागरलंघनेन लंकाप्राप्तिः, सर्वेष्वपि प्रदेशेषु सीताविचयनं, प्रमदवनस्थपादपमूले सीतादर्शनं, श्रीरामवृत्तान्तनिवेदनं, रामदूतस्य स्वस्यागमनवृत्तान्तं रावणमवबोधयितुं उपायचिन्ता, प्रमदवनस्य भंजने सति रावणः स्वागमनं स्वयमेव अवबुध्येतेति तथा कर्तुं हनुमता निश्चयकरणं च, प्रतिपाद्यं वस्तु ॥

इति द्वितीयोऽङ्कः ॥

---

१ 'सि' ख. 'ति' ङ. च. २ 'ती, साधयतु मां भवती, सी' ख. ३ 'दामभ्रि'. क. ४ ( इति निष्क्रान्ताः सर्वे ). क.

# अथ तृतीयोऽङ्कः ।

( ततः प्रविशति शंकुकर्णः )

**शंकुकर्णः**—क इह भोः काञ्चनतोरणद्वारमशून्यं कुरुते । (प्रविश्य)

**प्रतिहारी**—अज्ज अहं विजआ । किं करीअदु । ( क )

**शंकुकर्णः**—विजये निवेद्यतां निवेद्यतां महाराजाय लङ्केश्वराय—भग्नप्रायाशोकवनिकेति, कुतः,

यस्यां ( नः ? न ) प्रियमण्डनापि महिषी देवस्य मण्डोदरी
स्नेहाल्लुम्पति पल्लवान्न च पुनर्वीजन्ति यस्यां भयात् ।
वीजन्तो मलयानिला अपि करैरस्पृष्टबालद्रुमाँ
सेयं शक्ररिपोरशोकवनिका भग्नेति विज्ञाप्यताम् ॥ १ ॥

---

( क ) आर्य अहं विजया, किं क्रियताम् ।

---

हनुमता प्रमदवनमर्दनं कृतमिति वृत्तान्तं निवेदयितुं पात्रप्रवेशमुपक्षिपति—तत इत्यादि ।

क इहेत्यादि । क इह भो इति रावणभवनस्य बहिर्द्वारं पालयन् कः अत्र इत्यन्वेष्टुं उच्चैरुच्चारणम् । काञ्चनमयैस्तोरणैर्विन्यासैः सहितं द्वारं अशून्यं सनाथम् ।

प्रतीहारी प्रविश्य द्वारपालकमात्मानं निवेदयति—अज्ज इत्यादि । किं क्रियतां मया किं कर्तव्यम् । यत्कर्तुमवसरः प्राप्तस्तदुच्यतामित्यर्थः ।

विजये इत्यादि । प्रायेण भग्ना भग्नप्राया,

अशोकवनिकापारम्यं वर्णयति--यस्यामिति । प्रियमण्डना अलंकारप्रिया सत्यपि देवस्य रावणस्य महिषी पत्नी मण्डोदरी यस्यामशोकवनिकायां स्नेहात् प्रीतिविशेषात् पल्लवान् प्रवालान् न लुम्पति, पल्लवावचयं न करोति । पल्लवावचय-करणे शोभाया हानिः स्यादिति तमपि न करोतीत्यर्थः । यस्यामशोकवनिकायां भयाद् वस्तुतो रावणे एव भीतिः तन्निरूपिता भीतिः अशोकवनिकायामपीति बोध्यम् । वीजन्तश्चलन्तः मलयानिला अपि दाक्षिणात्यो वायुरपि न वीजन्ति-यथेष्टं न चलन्ति । वीजन्तीति पचाद्यजन्ताद् वीजशब्दादाचारक्विपं कृत्वा । करैः हस्तैरस्पृष्टा न स्पृष्टा बालद्रुमा विटपा यस्यां सा । करस्पर्शे सति विटपाणां शोभाहानिः स्यादिति । सेयं प्रसिद्धा प्रभूतविभवा शक्ररिपो रावणस्य अशोक-वनिका भग्ना भंजिता केनापि वानरेणेति शेषः । इति विज्ञाप्यतां निवेद्यतां रावण इत्यार्थम् ॥ १ ॥

---

१ 'करिम्र'. क. २ 'तां म'. क. ३ 'ला रविकरै'. क. ४ 'मास्सेयं'. क.

**प्रतिहारी**—अय्य[1] णिच्चं भट्टिपादमूले वत्तमाणस्स जणस्स अदिट्ठपुरुवो अअं सम्भमो । किं[2] एदं । (क)

**शंकुकर्णः**[3]—भवति अतिपाति कार्यमिदम् । शीघ्रं निवेद्यताम्[4] ।

**प्रतिहारी**—अय्य इयं णिवेदेमि । (ख) ( निष्क्रान्ता )

**शंकुकर्णः**[5]—( पुरतो विलोक्य ) अये अयं महाराजो लङ्केश्वर इत एवाभिवर्त्तते । य एषः,

अमलकमलसन्निभोग्रवेषः[6]
कनकमयोज्वलदीपिकैःपुरोगः[7] ।
त्वरितमभिपतत्यसौ सरोषो
युगपरिणामसमुद्यतो यथार्कः ॥ २ ॥

( ततः प्रविशति यथानिर्दिष्टो रावणः )

**रावणः**—कथं कथं भो नववाक्यवादिन्
शृणोमि शीघ्रं वद केन चाद्य ।

---

(क) आर्य नित्यं भर्तृपादमूले वर्तमानस्य जनस्यादृष्टपूर्वोऽयं सम्भ्रमः । किमेतद् ।

(ख) आर्य इयं निवेदयामि ।

---

अय्य इत्यादि । एतावान् त्वराविशेषः इतः पूर्वं न दृष्ट इत्यर्थः ।

कार्यगौरवप्रयुक्त एव त्वराविशेष इत्याह—भवतीत्यादि, अतिपाति विलम्बनासहम् । यदि निवेदने विलम्बः स्यात्तर्हि न केवलमशोकवनिकायाः अन्येषामपि भंजनं भवेदिति ।

अय्य इत्यादि ।

रावणस्यागमनमेव निवेदयति—अये इत्यादि ।

तं वर्णयति—य एष इति । दृश्यत इति शेषः ।

अमलेति । अमलकमलसन्निभे निर्मलपद्मतुल्ये उग्रे च नेत्रे यस्य सः । कनकमये पात्रे उज्वला कान्तिमती या दीपिका तयानुगम्यमानः दीपिकाहस्तैः यः पुरोगम्यते तादृशः । सरोषः सीताविषयकस्याभिप्रायस्यानिर्वाहात् ( अशोकवनिका भग्नेति वाक्यश्रवणाद्वा) क्रुद्धः कल्पान्तकालोद्यतः सूर्य इव त्वरितमित एवाभिपतति॥२॥

कथमिति । रावणस्य त्रिलोकविजयिनः दोषं कुर्वन् कश्चिदेतावत्पर्यन्तं न दृष्टः श्रुतो वा, इदं तु अशोकवनिकाभंजनश्रवणं असाधारणं विद्यते । कथं कथं उक्तमिति

---

१ 'अ भ'. क. २ 'अय्य किं'. क. ३ 'र्णः—अ' ग. ४ 'तां निवेद्यताम्'. ख. ५ 'र्णः—अये'. क. छ. च. ६ 'ग्रनेत्रः क. ७ 'पिकापु' क.

मुमूर्षुणा मुक्तभयेन धृष्टं
वनाभिमर्दात् परिधर्षितोऽहम् ॥ ३ ॥

शंकुकर्णः[1]—( उपसृत्य ) जयतु महाराजः । अविदितागमनेन केनचिद् वानरेण ससंरम्भमभिमृदिताशोकवनिका[2] ।

रावणः—( सावज्ञं ) कथं वानरेणेति । गच्छ, शीघ्रं निगृह्यानय ।

शंकुकर्णः—यदाज्ञापयति महाराजः । ( निष्क्रान्तः )

रावणः—भवतु[3] ।

युधि जगत्त्रयभीतिकृतोऽपि मे
यदि कृतं त्रिदशैरिदमाप्रियम् ।
अनुभवन्त्वचिरादमृताशिनः
फलमतो निजशाठ्यसमुद्भवम् ॥ ४ ॥

( प्रविश्य )

शंकुकर्णः—जयतु महाराजः । महाराज महाबलः खलु स वानरः । तेन खलु मृणालवदुत्पाटिताः सालवृक्षाः, मुष्टिना भग्ना[4] दारुपर्वतकाः[5], पाणितलाभ्यामभिमृदितानि लतागृहाणि, नादेनैव विसंज्ञीकृताः प्रमदवनपालाः । तस्य ग्रहणसमर्थं बलमाज्ञापयितुमर्हति महाराजः ।

रावणः[6]—तेन हि किङ्कराणां सहस्रं बलमाज्ञापय वानरग्रहणाय ।

---

शेषः । नववाक्यवादिन् दूत कथं मर्तुमिच्छुः मुमूर्षुः तेन, मुक्तभयेन त्यक्तभयेन केन पुरुषेण चाद्य प्रमदवनभंजनाद्धेतोः अहं परिधर्षितोऽस्मि पराभूतो भवामि । धृष्टं निश्शंकम् ॥ ३ ॥

जयत्वित्यादि । अभिमृदिता मर्दिता ।

वानरेण तुच्छरूपेणाभिमृदिताशोकवनिकेति श्रुत्वा जातलज्जः तं निगृह्यानेतुं किंकरमाज्ञापयति—कथमित्यादि ।

युधीति । देवा एव मदैश्वर्यासहिष्णवः मां निगृहीतुं एवं तुच्छानुपायान् प्रयुञ्जते । यदि ते अचिरादस्य फलमनुभवन्त्वित्याह—युधि युद्धे जगत्त्रयस्यापि भीतिं करोतीति भीतिकृत् तादृशस्य । यदि इदमाप्रियं धृष्टदूतप्रेषणेन कृतं प्रमदवनसम्मर्दरूपं अप्रियं तर्हि अमृताशिनः अमृतभुजो देवाः अचिराच्छीघ्रं निजशाठ्यसमुद्भवं एतादृशशाठ्यगुणप्रादुर्भूतं फलं दुःखात्मकं अनुभवन्तु अनुभविष्यन्तीत्यर्थः ॥ ४ ॥

---

१ 'र्णः–ज' क. २ 'निकेति' क. ३ 'तु भवतु' ख. ४ 'भग्नो' क. ५ 'तकः' क. ६ 'णः–अस्तितु ते' क. 'णः–तेन हि अस्ति तु किं'. ग. ङ.

**शंकुकर्णः**—यदाज्ञापयति महाराजः । ( निष्क्रम्य प्रविश्य ) जयतु महाराजः ।

अस्मदीयैर्महावृक्षैरस्मदीया महाबलाः ।
क्षिप्रमेव हतास्तेन किङ्करा द्रुमयोधिना[1] ॥ ५ ॥

**रावणः**[2]—कथं हता इति । तेन हि कुमारमक्षमाज्ञापय वानरग्रहणाय ।

**शंकुकर्णः**—यदाज्ञापयति महाराजः । ( निष्क्रान्तः[3] )

**रावणः**—( विचिन्त्य )

कुमारो हि कृतास्त्रश्च शूरश्च बलवानपि ।
प्रसह्य चापि गृह्णीयाद्धन्याद्वा तं वनौकसम् ॥ ६ ॥

( प्रविश्य )

**शंकुकर्णः**[4]—अनन्तरीयं बलमाज्ञापयितुमर्हति महाराजः ।

**रावणः**—किमर्थम् ।

**शंकुकर्णः**—श्रोतुमर्हति महाराजः, कुमारं[5] वानरमभिगच्छन्तं

---

जयत्वित्यादि । मृणालं बिसं । स यथा अनायासेन उत्पाटयितुं शक्यते तद्वदित्यर्थः । क्रीडार्थं निर्मितः दारुमयः अल्पः पर्वतः पर्वतकः अल्पार्थे कप्रत्ययः । विसंज्ञीकृताः विचेतनीकृताः । तस्य ग्रहणसमर्थं अतिशक्तिमतः तस्य वानरस्य ग्रहणे शक्तिमन्तं बलमाज्ञापयितुमर्हसीत्यर्थः ।

तादृशं बलमाज्ञापयितुमाह—तेन हि असाधारणशक्तिविशिष्टत्वाद्वानरस्य । सहस्रं अनेकं 'विश्वं शतं सहस्रं च सर्वमक्षय्यवाचकं' इत्युक्तेः ।

प्रेषितं सर्वमपि बलं नष्टमिति पुनः प्रविश्य विज्ञापयति—**अस्मदीयैरिति** । अस्मदीयपदार्था एव अस्मद्वधकारणं अभूवन्नित्यर्थः । द्रुमयोधिना अचेतनैः द्रुमैः सहापि युद्धं कर्तुं द्रुमाननायासेनोत्पाटयितुं शक्तः इति पराक्रमश्लाघा ॥ ५ ॥

वानरग्रहणे कुमारमक्षं नियोजयन्नाह—कथमित्यादि ।

क्षत्रियधर्मविद्यासु अस्त्रशस्त्रादिषु परां काष्ठां प्राप्तः कुमारः कथमपि वानरं गृह्णीयादित्याह—**कुमारो हीति,** कृतास्त्रः परिशीलितास्त्रविद्यः । प्रसह्य हठात्, यदि ग्रहीतुं न शक्नोति तर्हि हन्याद् वनौकसं वानरम् ॥ ६ ॥

---

१ 'धिनः' क. २ 'णः—ते' क. ३ '( निष्क्रम्य प्रविश्य) आनन्तर्यं' च. ४ 'णः—जयतुमहाराजः। आनन्तर्यं ब'क. ङ. च. ५ 'रमक्षं वानरमभि' क.

दृष्ट्वा महाराजेनानाज्ञापिता अप्यनुगताः पञ्च सेनापतयः ।

रावणः—ततस्ततः ।

शंकुकर्णः—ततस्तानभिद्रुतान् दृष्ट्वा किञ्चिद् भीत इव तोरणमाश्रित्य काञ्चनपरिघमुद्यम्य निपातितास्तेन हरिणा पञ्च सेनापतयः ।

रावणः—ततस्ततः ।

शंकुकर्णः—ततः कुमारमक्षं,

क्रोधात्संरक्तनेत्रं त्वरिततरहयं स्यन्दनं वाहयन्तं
प्रावृट्कालाभ्रकल्पं परमलघुतरं बाणजालान् वमन्तम् ।
तान् बाणान् निर्विधून्वन् कपिरपि सहसा तद्रथं लंघयित्वा
कण्ठे संगृह्य धृष्टं मुदिततरमुखो मुष्टिना निर्जघान ॥ ७ ॥

रावणः—( सरोषं ) आः कथं कथं निर्जघानेति ।

---

अनन्तरीयमिति । अनन्तरीयं प्रभूतम् । आनन्तर्यमित्यपि पाठः । अनन्तरेभवं, कुमारनियोगानन्तरयोग्यम् ।

श्रोतुमर्हतीत्यादि । कुमारमक्षम् । महाराजेनानाज्ञापिता अपि पञ्च सेनापतयः स्वयमेव कुमारमनुगताः ।

तेषां वृत्तान्तजिज्ञासयाह--ततस्तत इति । शीघ्रं वदेत्यर्थः ।

सर्वेपि हता इति विज्ञापयति--तत इत्यादि । अभिद्रुतान् वानरमिति शेषः । भीत इव भयादिव भीहेतोः भीत इति तसिलन्तं, पञ्चमी । काञ्चनपरिघं काञ्चनमयं सुवर्णमयं सालप्रान्तप्रदेशे वर्त्तमानं गर्तप्रदेशं, एवं सेनापतयः पञ्चापि नष्टाः ।

कुमारस्याक्षस्य वृत्तान्तजिज्ञासयाह--ततस्तत इति ।

तदेव निवेदयति--तत इत्यादि ।

**क्रोधादिति** । क्रोधाद् रोषात् संरक्तनेत्रं त्वरिततरहयं इति क्रियाविशेषणम् । शीघ्रगमनशीलवाजिविशिष्टं स्यन्दनं रथं वाहयन्तं परमलघुतरं अनायासेनैव बाणसमूहान् वर्षन्तं, जालमित्यपि पाठः । एवं कुमारेण प्रेषितान् बाणान् स्वकीयकम्पनेन पार्श्वतः प्रेषयन् कपिरपि सहसा शीघ्रं तद्रथं कुमारस्य रथं अतिक्रम्य मुदिततरमुखः विकसितमुखः सन् धृष्टं यथा तथा स्वकीयमुष्टिना कण्ठे संगृह्य कुमारं निर्जघान हतवान् ॥ ७ ॥

कुमारमक्षं निहतं श्रुत्वा कुपित आह--आः इत्यादि, 'आस्तु स्यात्कोपपीडयो' रित्यमरः ।

---

१ 'जेन नाज्ञा' क. २ 'ता ह्यनु' क. ३ 'ह्मनार्गळमु' क. ४ 'रोषात्सं' क. ५ 'णः—कथं जघा' क. ' णः–(सक्रोधं) तिष्ठ' ङ. च.

तिष्ठ त्वमहमेवैनमासाद्य कपिजन्तुकम्[1] ।
एष भस्मीकरोम्यस्मत्क्रोधानलकणैः क्षणात् ॥ ८ ॥

शंकुकर्णः—प्रसीदतु प्रसीदतु महाराजः । कुमारमक्षं निहतं श्रुत्वा क्रोधाविष्टहृदयः कुमारेन्द्रजिदभिगतवांस्तं[2] वनौकसम् ।

रावणः—तेन हि[3] गच्छ । भूयो ज्ञायतां वृत्तान्तः ।

शंकुकर्णः—यदाज्ञापयति महाराजः[4] । ( निष्क्रम्य प्रविश्य ) जयतु महाराजः । जयतु लङ्केश्वरः । जयतु भद्रमुखः ।

संवृत्तं तुमुलं युद्धं कुमारस्य च तस्य च ।
ततः स वानरः शीघ्रं बद्धः पाशेन साम्प्रतम् ॥ ९ ॥

रावणः—कोऽत्र विस्मय इन्द्रजिता शाखामृगो बद्धः[5] इति । कोऽत्र[6] भोः ।

( प्रविश्य )

राक्षसः—जयतु महाराजः ।

रावणः—गच्छ, विभीषणस्तावदाहूयताम् ।

राक्षसः—यदाज्ञापयति महाराजः । ( निष्क्रान्तः )

रावणः—त्वमपि तावद् वानरमानय ।

शंकुकर्णः—यदाज्ञापयति महाराजः । ( निष्क्रान्तः )

रावणः—( विचिन्त्य ) भोः कष्टम् ।

अचिन्त्या मनसा लङ्का सहितैः सुरदानवैः ।
अभिभूय दशग्रीवं प्रविष्टः किल वानरः ॥ १० ॥

---

तिष्ठेति—कपिजन्तुकं निकृष्टं वानरम् । क्रोधानलस्य रोषवह्नेः कणैरेव अहं क्षणाद्भस्मी करोमि । क्रोधानलस्य कणैरेव क्षणाद् भस्मीकरोमीति वानरस्य तुच्छताद्योतनाय ॥ ८ ॥

वृत्तान्तशेषं कथयितुमाह—प्रसीदत्वित्यादि ।

संवृत्तमिति । तुमुलं घोरम् । तस्य वानरस्य । पाशेनेन्द्रजिता साम्प्रतमिदानीं बद्धः । कोऽत्र इत्यादि । शाखामृगो वानरः ।

विभीषणमानेतुमाज्ञापयति—गच्छेत्यादि । अचिन्त्येत्यादि—मनसा प्रवेष्टुमिति शेषः ॥ १० ॥

---

१ 'पिकीटकम्' क. ग. ङ. च. २ 'मार इ' क. ३ 'हि ज्ञा' क. ४ 'जः। (निष्क्रान्तः) रावणः—कुमारो हि कृतास्त्रश्च, अवश्यं युधि वीराणां वधो वा विजयोऽथवा । तथापि क्षुद्रकमेदं 'मह्यमीषन्मनीज्वरः' इति स्यात्, शंकुकर्णः—जयतु' ख. ५ 'बद्धयत इ' क. ६ 'त्र' क. ख. च.

अपि च,

जित्वा त्रैलोक्यमाजौ ससुरदनुसुतं यन्मया गर्वितेन
क्रान्त्वा कैलासमीशं स्वगणपरिवृतं साकमाकम्प्य देव्या ।
लब्ध्वा तस्मात्प्रसादं पुनरगसुतया नन्दिनानादृतत्वाद्
दत्तं शप्तं च ताभ्यां यदि कपिविकृतिच्छद्मना तन्मम स्यात् ॥११॥

( ततः प्रविशति विभीषणः )

विभीषणः[1]—( सविमर्शं ) अहो नु खलु महाराजस्य विपरीता खलु बुद्धिः संवृत्ता । कुतः,

मयोक्तो मैथिली तस्मै बहुशो दीयतामिति ।
न मे शृणोति वचनं सुहृदां शोककारणात् ॥ १२ ॥

( उपेत्य )

जयतु महाराजः ।

रावणः—विभीषण[2] एह्येहि । उपविश ।

---

स्वकृतकैलासोद्धारमाह—आजौ युद्धे त्रैलोक्यं लोकत्रयं त्रयाणां लोकानां समाहारस्त्रिलोकी त्रैलोक्यम् त्रिलोक्येव त्रैलोक्यं चतुर्वर्णादित्वात् ष्यन् । जित्वा गर्वितेन मया सुरदानवयुतं कैलासपर्वतं क्रान्त्वा स्वगणपरिवृतं ईशं परमेश्वरं देव्या पार्वत्या साकमाकम्प्य कम्पयित्वा पुनः तस्मात् प्रसादं लब्ध्वा अगसुतया दत्तं अनादृतत्वाद्धेतोः नन्दिनाशप्तं च । तादृशशापफलमेवेदानीं मम पुरतः प्रादुर्भूतमित्यर्थः । तस्मात् प्रसादं लब्ध्वा पुनः अनादृतत्वात् अत्रानादरः उत्तरकालक्रिया, लाभः पूर्वकालक्रिया, तयोः मयेत्येककर्तृकत्वम् । अनादृतत्वादिति कर्मणि निर्देशात् । शप्तं दत्तमिति शापादनक्रियां प्रति कर्तृत्वात् भिन्नकर्तृकत्वभ्रमः । प्रसादं लब्ध्वा मया अनादरः कृत इत्यर्थाद्वाक्यविश्रान्तिः । स्यादिति संप्रश्ने लिङ् । शप्तमिति भावे निष्ठा॥११॥

रामभक्तो धार्मिकश्च विभीषणः सीतानयनात् प्रभृति स्वभ्रातरि रावणे अधर्मपरायणे द्विषन् स्वस्य रामसेवनमेव महदिति चिन्तयन्नास्त । आज्ञानुसारेण रावणं द्रष्टुं विभीषणस्यागमनमाह—तत इति ।

अहो नु खल्वित्यादि । अहो नु खल्विति विस्मये कृच्छ्रे च । विपरीता बुद्धिः विनाशकालस्य सन्निहितत्वादित्यर्थः ।

मयोक्त इति । मैथिली मिथिला नाम विदेहराजधानी तत्सम्बन्धाद्वैदेही मैथिली । तस्मै रामाय प्रदीयतामिति मया बहुश उक्तः । तथापि स रावणः न हि मे वचनं शृणोति । तस्मात्सुहृदां बन्धूनां शोककारणमस्तीति मन्ये । रावणस्य विनाशकाल आगत इति मन्ये इति भावः ॥ १२ ॥

---

[1] 'णः—अहो म' क. 'णः—( सविस्मयं ) अहोतुखलु म' ग. [2] 'ण एह्युप' क.

विभीषणः[1]—एष एष उपविशामि । ( उपविशति )

रावणः—विभीषण निर्विण्णमिव[2] त्वां लक्षये ।

विभीषणः—निर्वेद एव खल्वननुग्रा[3]हिणं स्वामिनमुपाश्रितस्य[4] भृत्यजनस्य ।

रावणः—छिद्यतामेषा कथा । त्वमपि तावद् वानरमानय ।

विभीषणः—यदाज्ञापयति महाराजः ( निष्क्रान्तः[5] )

( ततः प्रविशति राक्षसैर्गृहीतो हनुमान् )

सर्वे[6]—आः इत इतः ।

हनुमान्—नैवाहं धर्षितस्तेन नैर्ऋतेन दुरात्मना ।
स्वयं ग्रहणमापन्नो राक्षसेशदिदृक्षया ॥ १३ ॥

( उपगम्य ) भो राजन् अपि कुशली भवान् ।

रावणः—( सावज्ञं ) विभीषण किमस्य तत् कर्म ।

विभीषणः—महाराज अतोऽप्यधिकम्[7] ।

रावणः—कथं[8] त्वमवगच्छसि ।

विभीषणः—प्रष्टुमर्हति महाराजः कस्त्वमिति ।

रावणः—भो वानर कस्त्वम् । केन कारणेन धर्षितोऽस्माकमन्तःपुरं प्रविष्टः ।

हनुमान्—भोः श्रूयताम् ।

अञ्जनायां समुत्पन्नो मारुतस्यौरसः सुतः ।
प्रेषितो राघवेणाहं हनुमान् नाम वानरः ॥ १४ ॥

---

विभीषणेत्यादि । निर्विण्णमिव दुःखितमिव । त्वां लक्षये विभावये ।

निर्वेद इत्यादि । स्वामिनं त्वादृशमिति गम्यम् । छिद्यतामित्यादिसंवादत्रयम् ।

हनुमान् वानरैः शौर्येण बलेन वा न बद्धः किन्तु रावणं द्रष्टुमिच्छुः हनुमान् स्वयमेव बन्धनं प्राप्त इत्याह—नैवाहमित्यादि ।

विभीषणेत्यादिसंवादचतुष्टयम् ।

भो इत्यादि । धर्षितः धृष्ट इत्यर्थः ॥

अञ्जनायामिति । अञ्जना हनुमन्माता, औरसः उरस उत्पन्नः । साक्षात्पुत्र इत्यर्थः ॥ १४ ॥

---

१ 'णः—एष उ' क. २ 'ण्ण इव' क. ३ 'ल्वयुक्त' क. ४ 'नमाश्रित्य भृ' क. ५ 'निष्क्रम्य' क. ६ 'र्वे—इतः ।' क. ७ 'तोपिचाधि' क. ङ. ८ 'यं भवाञ्जानाति' च.

विभीषणः—महाराज किं श्रुतम् ।

रावणः—किं श्रुतेन ।

विभीषणः—हनुमन् किमाह तत्रभवान् राघवः ।

हनुमान्—भोः श्रूयतां रामशासनम् ।

रावणः—कथं कथं रामशासनमित्याह । आः[1] हन्यतामयं वानरः ।

विभीषणः—प्रसीदतु प्रसीदतु महाराजः । सर्वापराधेष्ववध्याः खलु दूताः । अथवा रामस्य वचनं श्रुत्वा पश्चाद् यथेष्टं[3] कर्तुमर्हति महाराजः ।

रावणः—भो वानर किमाह स मानुषः ।

हनुमान्—भोः श्रूयताम्,

वरशरणमुपेहि शंकरं वा
प्रविश च दुर्गतमं रसातलं वा ।
शरवरपरिभिन्नसर्वगात्रं
यमसदनं प्रतियापयाम्यहं त्वाम् ॥ १५ ॥ इति ।

रावणः—हहह ।

दिव्यास्त्रैस्त्रिदशगणा मयाभिभूता
दैत्येन्द्रा मम वशवर्तिनः समस्ताः ।
पौलस्त्योऽप्यपहृतपुष्पकोऽवसन्नः[4]
भो रामः कथमभियाति मानुषो माम् ॥ १६ ॥

हनुमान्—एवंविधेन भवता किमर्थं[5] प्रच्छन्नं तस्य दारापहरणं कृतम् ।

---

महाराज इत्यादि संवादसप्तकम् ।

वरेति । वरशरणं श्रेष्ठं रक्षितृ, शरवरैः श्रेष्ठबाणैः परिभिन्नसर्वगात्रं विशकलितसर्वावयवं प्रतियापयामि । यमसदनं प्रति त्वां यापयामीति वा । उपेहीति उपपूर्वादिण् गतावित्यस्माद् लोटि मध्यमपुरुषैकवचनम् ॥ १५ ॥

दिव्येति । अभिभूता अभिभवं पराभवं प्राप्ताः । पौलस्त्योपि कुबेरोपि, पुष्पकं विमानम् । तत्तादृशं मां मानुषत्वात्तुच्छो रामः कथमभियातीत्यर्थः ॥ १६ ॥

एवंविधेत्यादि । प्रच्छन्नं रहसि ।

---

१ 'णः-कथं रा' क. २ 'ह' क. ३ 'ष्टं हन्तुम' क. ४ 'को विपन्नः' क. ५ 'र्थेत' क.

विभीषणः—सम्यगाह हनुमान्।

अपास्य मायया रामं त्वया राक्षसपुंगव।
भिक्षुवेषं समास्थाय छलेनापहृता हि सा॥ १७॥

रावणः—विभीषण विपक्षपक्षमवलम्बसे।[1]

विभीषणः—प्रसीद राजन् वचनं हितं मे
प्रदीयतां राघवधर्मपत्नी।
इदं कुलं राक्षसपुंगवेन
त्वया हि नेच्छामि विपद्यमानम्॥ १८॥

रावणः—विभीषण अलमलं भयेन।

कथं लम्बसटः सिंहो मृगेण विनिपात्यते।
गजो वा सुमहान् मत्तः शृगालेन निहन्यते॥ १९॥

हनुमान्—भोः रावण विपद्यमानभाग्येन भवता किं युक्तं राघवमेवं[2] वक्तुम्[3]। मा तावद् भोः,

नक्तञ्चरापसद रावण राघवं तं
वीराग्रगण्यमतुलं त्रिदशेन्द्रकल्पम्।
प्रक्षीणपुण्य भवता भुवनैकनाथं
वक्तुं किमेवमुचितं गतसार नीचैः॥ २०॥

---

प्रच्छन्नं कथमपहृतेत्याह—अपास्येति। अपास्य त्यक्त्वा, छलेन कपटेन, पुमांश्चासौ गौश्च पुंगवः 'गोरतद्धितलुकि' इति टच्, राक्षसानां पुंगवः तस्य सम्बुद्धिः। त्वयेति हेतुतृतीया॥ १७॥

विभीषणेत्यादि। विपक्षपक्षं शत्रुपक्षं, अर्थात् श्रीरामपक्षम्।

प्रसीदेति। वचनं हितं मे शृणु इति शेषः। यदि त्वं सीतां रामाय न प्रददासि त्वत्कारणात् इदं राक्षसकुलं नश्येदित्यर्थः॥ १८॥

तादृशं भयं नास्तीत्याह—विभीषणेत्यादि।

एतदर्थे अप्रस्तुतप्रशंसामाह—कथमिति। यदि हरिणः उद्धतं सिंहं विनिपातयितुं समर्थो भवति यदि वा मत्तं गजं निहन्तुं प्रभवति शृगालः तर्हि मानुषो रामः मां हन्तुं शक्नोति। तस्मादशक्यमिदं कार्यमित्यर्थः। मा तावदिति—मा एवं वक्तुं योग्यं, नीचैः मन्दं वक्तुम्।

एवं विगीतैर्वचनैरामनिन्दामसहमानः हनुमान् तादृशैरेव वचनै रावणं परुषयति—नक्तञ्चरेति। नक्तं रात्रौ चरन्ति ये तेषां तेषुवापसदः नीचः। रे नीच राक्षस रावण। कल्पशब्दस्तुल्यवाची। भुवनैकनाथं श्रीराममिति शेषः। नीचैर्वाग्भिरिति गम्यम्॥ २०॥

---

१ 'ण किं शत्रुपक्षं'. क. २ 'मेवं वक्तुं'(?) किं. क. ३ 'वक्तुम्। नक्त'. क.

रावणः—कथं कथं नामाभिधत्ते । हन्यतामयं वानरः । अथवा दूतवधः खलु वचनीयः । शंकुकर्ण लांगूलमादीप्य विसृज्यतामयं वानरः ।

शंकुकर्णः—यदाज्ञापयति महाराजः । इत इतः ।

रावणः[1]—अथवा एहि तावत् ।

हनुमान्—अयमस्मि ।

रावणः[2]—अभिधीयतां मद्वचनात् स[3] मानुषः ।

अभिभूतो मया राम दारापहरणादसि[4] ।
यदि तेऽस्ति धनुःश्लाघा दीयतां मे रणो महान् ॥ २१ ॥

हनुमान्—अचिराद् द्रक्ष्यसि ।

अभिहतवरवप्रगोपुराट्टां
रघुवरकार्मुकनादनिर्जितस्त्वम् ।
हरिगणपरिपीडितैः समन्तात्
प्रमदवनैरभिसंवृतां स्वलंकाम् ॥ २२ ॥

रावणः—आः निर्वास्यतामयं वानरः ।

राक्षसाः—इत इतः । ( र[5]क्षोभिः सह निष्क्रान्तो हनुमान् )

विभीषणः[6]—प्रसीदतु प्रसीदतु महाराजः । अस्ति काचिद् विवक्षा महाराजस्य हितमन्तरेण ।

---

नामाभिधानेन जातापमानः हनुमतो दण्डमादिशति—कथमित्यादि । दूताः सर्वापराधेष्वप्यवध्याः, तेषां दण्डदाने दण्डनिदेशकः वचनीयो निन्द्यो भवेत् ।

यदाज्ञापयतीत्यादि । आज्ञानुसारेण लांगूलमादीप्य विसृज्यत इत्यर्थः ।

श्रीरामस्य प्रतिसन्देशं मनसि चिन्तयन्नाह—अथवेत्यादि ।

अभिभूत इति । दारापहरणाद्धेतोः तव मया सह युद्धं कर्तुं कारणमस्ति, तस्माद् यदि ते चापनिरूपितो गर्वोऽस्ति तर्हि भवान् मया सह युद्धाय सन्नह्यतु इत्यर्थः ॥ २१ ॥

अभिहतेति । अभिहताः सम्मर्दिताः श्रेष्ठा वप्राः प्राकाराः गोपुराणि अट्टाः सौधाः यस्यास्तां, समन्तात् हरिगणपरिपीडितैः वानरसैन्यनिर्दालितैः प्रमदवनैः परिवृतां आत्मीयां लंकाराजधानीं श्रीरामस्य धनुष्टंकारमात्रेण पराजितस्त्वं अचिराद् द्रक्ष्यसीति पूर्वेणान्वयः ॥ २२ ॥

आः इत्यादि । निर्वास्यतां नगरात् त्यज्यताम् ।

---

१ 'णः—ए'. क. २ 'णः—अभि'. क. ३ 'सरामः'. ग. ङ. च. ४ 'दपि'. क. ५ 'राक्षसैर्गृहीतो हनुमान्निष्क्रान्तः'. क. ६ 'णः—अस्तितुका'. क.

रावणः—उच्यतां तच्छ्रेयो, वयमपि श्रोतारः ।

विभीषणः—सर्वथा[1] राक्षसकुलस्य विनाशोऽभ्यागत इति मन्ये ।

रावणः—केन कारणेन ।

विभीषणः—महाराजस्य विप्रतिपत्त्या ।

रावणः—का मे विप्रतिपत्तिः ।

विभीषणः—ननु सीतापहरणमेव ।

रावणः—सीतापहरणेन को दोषः स्यात् ।

विभीषणः—अधर्मश्च ।

रावणः—च शब्देन सावशेषमिव[2] ते वचनम्, तद् ब्रूहि ।

विभीषणः—तदेव ननु ।

रावणः—विभीषण किं गूहसे । मम खलु प्राणैः शापितः स्याः, यदि सत्यं न ब्रूयाः ।

विभीषणः—अभयं दातुमर्हति महाराजः ।

रावणः—दत्तमभयम् । उच्यताम् ।

विभीषणः—बलवद्विग्रहश्च ।

रावणः—(सरोषं) कथं कथं बलवद्विग्रहो नाम ।

शत्रुपक्षमुपाश्रित्य मामयं राक्षसाधमः ।
क्रोधमाहार[3]यंस्तीव्रमभीरुरभिभा[4]षते ॥ २३ ॥

कोऽत्र ।

---

प्रसीदत्वित्यादि । विवक्षा वक्तुमिच्छा । हितमन्तरेण हितं प्रति ।

महाराजस्येत्यादि । विप्रतिपत्त्या विपरीतबुद्ध्या ।

नन्वित्यादि । विपरीतबुद्ध्यैव सीतापहरणं कृतमित्यर्थः । चशब्देनेति । अधर्मश्चेत्यत्र चशब्देनेत्यर्थः । विभीषणेत्यादि ।

अभयमित्यादिसंवादत्रयम् ।

शत्रुपक्षेति । शत्रुपक्षं श्रीरामपक्षं आश्रित्य अयं राक्षसाधमः नीचराक्षसः अभीरुः भयरहितः मम क्रोधमाहारयन् उद्भावयन् मम इति शेषपूरणम् । मम क्रोधं स्वस्य आहारं कुर्वन्, मत्क्रोधस्य पात्रीभवन्नित्यर्थः । तीव्रं कठिनं यथा तथा मां अभिभाषते ॥ २३ ॥

---

१ 'त्वर्था'. क. २ 'व व'. क. ३ 'यत्तीव्र'. क. ४ 'षसे'. क.

ममानवेद्य सौभ्रात्रं शत्रुपक्षमुपाश्रितम् ।
नोत्सहे पुरतो द्रष्टुं तस्मादेष निरस्यताम् ॥ २४ ॥

विभीषणः--प्रसीदतु प्रसीदतु महाराजः । अहमेव यास्यामि ।

शासितोहं त्वया राजन् प्रयामि न च दोषवान् ।
त्यक्त्वा रोषं च कामं च यथा कार्यं तथा कुरु ॥ २५ ॥

(परिक्रम्य) अयमिदानीम्--

अद्यैव तं कमललोचनमुग्रचापं
रामं हि रावणवधाय कृतप्रतिज्ञम् ।
संश्रित्य संश्रितहितप्रथितं नृदेवं
नष्टं निशाचरकुलं पुनरुद्धरिष्ये ॥ २६ ॥

(निष्क्रान्ताः)

रावणः--हन्त निर्गतो विभीषणः । यावदहमपि नगररक्षां सम्पादयामिः । (निष्क्रान्तः[1])

तृतीयोऽङ्कः ॥

---

ममेत्यादि--मम सौभ्रात्रं सुभ्रातृत्वं अनवेद्याज्ञात्वैव मयास्य विभीषणस्य भ्रातृप्रेम्णा पूर्वं यदुपकृतमासीत्तत् सर्वमपि विस्मृत्येत्यर्थः । न केवलमनेन ममोपकारं विस्मृतमपि तु अनेन मां विहाय शत्रुपक्षमुपाश्रितमाश्रितम् । अयं विभीषणः भ्रातरं मां विहाय शत्रुं मे रामं शरणङ्गत इत्यर्थः । एनमहं पुरतो ममाग्रतो द्रष्टुं नोत्साहे । अत एष विभीषणः निरस्यताम् ॥ २४ ॥

शासितोहमिति । नगरान्निर्वासनाय त्वया आज्ञप्तः अहं, नगरान्मां त्यक्तुं मयि न कोपि दोषो विद्यते । तथाप्यहं तवाज्ञानुसारेण प्रयामि । त्वं तु कामरोषौ त्यक्त्वा-यत्कर्तव्यं तत् कुर्वित्यर्थः ।

नगरान्निर्वासनायाऽऽज्ञप्तो विभीषणः इतः करणीयं चिन्तयति—अद्यैवेति । संश्रिता आश्रिता ये जनाः तेषां हितकरणविषये प्रसिद्धम् ।

तृतीयेऽस्मिन्नंके, हनुमत्कृतमशोकवनिकाभञ्जनं, तत् श्रुत्वा रावणेन वानरग्रहणाय किंकरप्रेषणं, किंकराणां नाशः, सेनापतिसहितस्य कुमारस्याक्षस्य वानरग्रहणाय गमनं, तस्यापि हननं, रावणादिदृक्षया इन्द्रजिद्धस्ते स्वयं ग्रहणमापन्नस्य हनुमतो रावणदर्शनं श्रीरामशासनविज्ञप्तिः, रावणस्य प्रतिसन्देशः, ज्येष्ठे विरक्तहृदयस्य विभीषणस्य रावणं प्रति हितोपदेशः, रावणकृतं विभीषणनिर्वासनं, श्रीरामं शरणमुपेतुं विभीषणस्य चिन्ता च प्रतिपाद्यं वस्तु ।

इति तृतीयोऽङ्कः ॥

---

[1] (निष्क्रान्तः । इति निष्क्रान्ताः सर्वे). क.

# अथ चतुर्थोऽङ्कः ।

(ततः प्रविशति[1] वानरकाञ्चुकीयः)

काञ्चुकीयः--भो भो बलाध्यक्ष सन्नाहमाज्ञापय वानरवाहिनीम् ।

(प्रविश्य)

बलाध्यक्षः—आर्य किंकृतोऽयं समुद्योगः ।

काञ्चुकीयः--तत्रभवता हनूमतानीतः खल्वार्यरामस्य देव्याः सीतायां[2] वृत्तान्तः ।

बलाध्यक्षः[3]--किमिति किमिति ।

काञ्चुकीयः--श्रूयताम्,

लंकायां किल वर्तते नृपसुता शोकाभिभूता भृशं
पौलस्त्येन विहाय धर्मसमयं संक्लेश्यमाना ततः ।
श्रुत्वैतद् भृशशोकतप्तमनसो रामस्य कार्यार्थिना
राज्ञा वानरवाहिनी प्रतिभया सन्नाहमाज्ञापिता ॥ १ ॥

बलाध्यक्षः—एवम् । यदाज्ञापयति महाराजः ।

काञ्चुकीयः—यावदहमपि सन्नद्धा वानरवाहिनीनि महाराजाय[4] नि-

सुग्रीवाज्ञया वानरसैन्यस्य प्रस्थानमवबोधयितुं विष्कम्भः प्रस्तूयते—ततः प्रविशतीत्यादि । वानरश्चासौ काञ्चुकीयश्च ।

भो इति । बलाध्यक्षः सेनापतिः । वानरवाहिनी कपिसैन्यं यथा प्रस्थानाय सन्नद्धा भवेत्तथाऽऽज्ञापयेत्यर्थः ।

आर्येति । समुद्योगः प्रस्थानयत्नः किंकृतः किमर्थमित्यर्थः ।

तत्रभवतेत्यादि संवादद्वयम् ।

लंकायामिति । भृशं नितरां शोकाभिभूता दुःखिता, पौलस्त्येन रावणेन धर्मसमयं धर्मपथं विहाय त्यक्त्वा संक्लेश्यमाना पीडयमाना नृपसुता जानकी लंकायां वर्तते किल । एतत् सीताया लंकावासरूपं वृत्तान्तं श्रुत्वा भृशशोकतप्तमनसः नितरां दुःखेन सन्तप्तहृदयस्य रामस्य कार्यार्थिना रावणवधद्वारा सीताप्रत्यानयनरूपं कार्यम् । राज्ञा सुग्रीवेण प्रतिभया भीमा वानरवाहिनी सन्नाहं प्रस्थानाय सन्नद्धं यथा तथा यथा भवेत् तथा आज्ञापिता ॥ १ ॥

एवमित्यादि संवादद्वयम् ।

१ 'ति का'. क. ख. ग. ङ. च. २ 'तान्तु'. क ३ 'क्षः—किम्'. क. ४ 'राजस्य नि'. क.

वेदयामि । (निष्क्रान्तौ)

विष्कम्भकः ।

(ततः प्रविशति रामो लक्ष्मणः सुग्रीवो हनुमांश्च)

रामः—आक्रान्ताः पृथुसानुकुञ्जगहनाः मेघोपमाः पर्वताः
सिंहव्याघ्रगजेन्द्रपीतसलिला नद्यश्च तीर्णा मया ।
क्रान्तं पुष्पफलाढ्यपादपयुतं चित्रं महत्काननं
सम्प्राप्तोऽस्मि कपीन्द्रसैन्यसहितो वेलातटं साम्प्रतम् ॥ २ ॥

लक्ष्मणः—एष एष भगवान् वरुणः,
सजलजलधरेन्द्रनीलनीरो[1] विलुलितफेनतरंगचारुहारः[2] ।
समधिगतनदीसहस्रबाहुर्हरिरिव भाति सरित्पतिः शयानः ॥३॥

रामः—कथं कथं भोः,
रिपुमुद्धर्तुमुद्यन्तं मामयं सक्तसायकम् ।
सजीवमद्य तं कर्तुं निवारयति सागरः ॥ ४ ॥

---

श्रीरामादीनां कपीन्द्रसैन्यसहितानां समुद्रतीरस्थसुवेलपर्वतप्राप्तिं सागरलंघनोपायं लंकागमनं च प्रतिपादयितुं तेषामेव प्रवेशमाह—तत इत्यादि ।

आक्रान्ता इति । पृथुभिः सानुभिः कुञ्जैश्च गहना दुर्गमाः पृथुसानुकुञ्जगहनानि यस्मिन् सन्ति स पृथुसानुकुञ्जगहनः ते पृथुसानुकुञ्जगहनाः इति वा । मेघतुल्याः पर्वताः आक्रान्ता लंघिताः सिंहैः व्याघ्रैः गजेन्द्रैश्च पीतं सलिलं यासां ता नद्यश्च मया तीर्णा अतिक्रान्ताः, तद्वद् पुष्पैः फलैश्च आढ्या प्रभूता ये पादपा वृक्षाः तैः सहितं महत्काननं चाक्रान्तं मयेति शेषः। एवमिमान् देशान् क्रान्त्वा अहं कपीन्द्रस्य सुग्रीवस्य सैन्यसहितः वेलातटं समुद्रतीरं साम्प्रतमिदानीं सम्प्राप्तोऽस्मि प्राप्तवानस्मि॥२॥

**सजलेति** । सजलः जलगर्भः यः जलधरेन्द्रः मेघश्रेष्ठः तद्वत् नीलं नीलवर्णं नीरं जलं यस्य तादृशः सजलजलधर इव इन्द्रनील इव नीरं यस्येति बहुव्रीहिः । सजलजलधरेन्द्रनीलनील इति वा पाठः । विलुलितः चलन् यः फेनविशिष्टः तरंगः स इव चारुहारः मनोज्ञमालासहितः । चारुहास इति पाठः स्यात् । 'धवलता वर्ण्यते हासकीर्त्योः' इति कविसमयानुसारेण फेनतरंगाणां श्वैत्यात्तदारोपो हासे उपपद्यते । समधिगतं सम्प्राप्तं यन्नदीसहस्रं तदेव बाहुर्यस्य । सर्वासामपि नदीनां प्राप्तिः समुद्र एव, तादृशः सरित्पतिः शयानः हरिरिव भाति । हरेरपि इन्द्रनीलमाणिक्यविशिष्टत्वं तरंगवद्धवलस्य हारस्य धारणं सहस्रबाहुत्वं च प्रसिद्धम् । सजलजलधरेन्द्रनीलनीलः इति यदि पाठः तर्हि सजलजलधरवत् इन्द्रनीलवच्च नीलवर्ण इत्यर्थः । उपमितरूपकसमासौ हरिवरुणपक्षयोर्योज्यौ ॥३॥

रिपुमिति । कण्टकवत् रिपुं रावणमुद्धर्त्तुं धनुषि आसज्जितबाणः सन् अह-

---

१ 'रोद्धि'. क. २ 'हासैः'. ङ.

# अथ चतुर्थोऽङ्कः ।

(ततः प्रविशति वानरकाञ्चुकीयः)[1]

**काञ्चुकीयः**--भो भो बलाध्यक्ष सन्नाहमाज्ञापय वानरवाहिनीम् ।

(प्रविश्य)

**बलाध्यक्षः**—आर्य किंकृतोऽयं समुद्योगः ।

**काञ्चुकीयः**--तत्रभवता हनूमतानीतः खल्वार्यरामस्य देव्याः सीतायां[2] वृत्तान्तः ।

**बलाध्यक्षः**[3]--किमिति किमिति ।

**काञ्चुकीयः**--श्रूयताम्,

लंकायां किल वर्तते नृपसुता शोकाभिभूता भृशं
पौलस्त्येन विहाय धर्मसमयं संक्लेश्यमाना ततः ।
श्रुत्वैतद् भृशशोकतप्तमनसो रामस्य कार्यार्थिना
राज्ञा वानरवाहिनी प्रतिभया सन्नाहमाज्ञापिता ॥ १ ॥

**बलाध्यक्षः**—एवम् । यदाज्ञापयति महाराजः ।

**काञ्चुकीयः**—यावदहमपि सन्नद्धा वानरवाहिनीति महाराजाय[4] नि-

---

सुग्रीवाज्ञया वानरसैन्यस्य प्रस्थानमवबोधयितुं विष्कम्भः प्रस्तूयते—ततः प्रविशतीत्यादि । वानरश्चासौ काञ्चुकीयश्च ।

भो इति । बलाध्यक्षः सेनापतिः । वानरवाहिनी कपिसैन्यं यथा प्रस्थानाय सन्नद्धा भवेत्तथाऽऽज्ञापयेत्यर्थः ।

आर्येति । समुद्योगः प्रस्थानयत्नः किंकृतः किमर्थमित्यर्थः ।

तत्रभवतेत्यादि संवादद्वयम् ।

लंकायामिति । भृशं नितरां शोकाभिभूता दुःखिता, पौलस्त्येन रावणेन धर्मसमयं धर्मपथं विहाय त्यक्त्वा संक्लेश्यमाना पीड्यमाना नृपसुता जानकी लंकायां वर्तते किल । एतत् सीताया लंकावासरूपं वृत्तान्तं श्रुत्वा भृशशोकतप्तमनसः नितरां दुःखेन सन्तप्तहृदयस्य रामस्य कार्यार्थिना रावणवधद्वारा सीताप्रत्यानयनरूपं कार्यम् । राज्ञा सुग्रीवेण प्रतिभया भीमा वानरवाहिनी सन्नाहं प्रस्थानाय सन्नद्धं यथा तथा यथा भवेत् तथा आज्ञापिता ॥ १ ॥

एवमित्यादि संवादद्वयम् ।

---

१ 'ति का'. क. ख. ग. ङ. च. २ 'तावृ'. क ३ 'क्षः—किम्'. क. ४ 'राजस्य नि'. क.

वेदयामि । (निष्क्रान्तौ)

विष्कम्भकः ।

(ततः प्रविशति रामो लक्ष्मणः सुग्रीवो हनुमांश्च)

रामः—आक्रान्ताः पृथुसानुकुञ्जगहनाः मेघोपमाः पर्वताः
सिंहव्याघ्रगजेन्द्रपीतसलिला नद्यश्च तीर्णा मया ।
क्रान्तं पुष्पफलाढ्यपादपयुतं चित्रं महत्काननं
सम्प्राप्तोऽस्मि कपीन्द्रसैन्यसहितो वेलातटं साम्प्रतम् ॥ २ ॥

लक्ष्मणः—एष एष भगवान् वरुणः,
सजलजलधरेन्द्रनीलनीरो[1] विलुलितफेनतरंगचारुहारः[2] ।
समधिगतनदीसहस्रबाहुर्हरिरिव भाति सरित्पतिः शयानः ॥३॥

रामः—कथं कथं भोः,
रिपुमुद्धर्तुमुद्यन्तं मामयं सक्तसायकम् ।
सजीवमद्य तं कर्तुं निवारयति सागरः ॥ ४ ॥

---

श्रीरामादीनां कपीन्द्रसैन्यसहितानां समुद्रतीरस्थसुवेलपर्वतप्राप्तिं सागरलंघनोपायं लंकागमनं च प्रतिपादयितुं तेषामेव प्रवेशमाह—तत इत्यादि ।

आक्रान्ता इति । पृथुभिः सानुभिः कुञ्जैश्च गहना दुर्गमाः पृथुसानुकुञ्जगहनाः; पृथुसानुकुञ्जगहनानि यस्मिन् सन्ति स पृथुसानुकुञ्जगहनः ते पृथुसानुकुञ्जगहनाः इति वा । मेघतुल्याः पर्वताः आक्रान्ता लंघिताः सिंहैः व्याघ्रैः गजेन्द्रैश्च पीतं सलिलं यासां ता नद्यश्च मया तीर्णा अतिक्रान्ताः, तद्वद् पुष्पैः फलैश्च आढ्या प्रभूता ये पादपा वृक्षाः तैः सहितं महत्काननं चाक्रान्तं मयेति शेषः। एवमिमान् देशान् क्रान्त्वा अहं कपीन्द्रस्य सुग्रीवस्य सैन्यसहितः वेलातटं समुद्रतीरं साम्प्रतमिदानीं सम्प्राप्तोऽस्मि प्राप्तवानस्मि॥२॥

सजलेति । सजलः जलगर्भः यः जलधरेन्द्रः मेघश्रेष्ठः तद्वत् नीलं नीलवर्णं नीरं जलं यस्य तादृशः सजलजलधर इव इन्द्रनील इव नीरं यस्येति बहुव्रीहिः । सजलजलधरेन्द्रनीलनील इति वा पाठः । विलुलितः चलन् यः फेनविशिष्टः तरंगः स इव चारुहारः मनोज्ञमालासहितः । चारुहास इति पाठः स्यात् । 'धवलता वर्ण्यते हासकीर्त्योः' इति कविसमयानुसारेण फेनतरंगाणां श्वैत्यात्तदारोपो हासे उपपद्यते । समधिगतं सम्प्राप्तं यन्नदीसहस्रं तदेव बाहुर्यस्य । सर्वासामपि नदीनां प्राप्तिः समुद्र एव, तादृशः सरित्पतिः शयानः हरिरिव भाति । हरेरपि इन्द्रनीलमाणिक्यविशिष्टत्वं तरंगवद्धवलस्य हारस्य धारणं सहस्रबाहुत्वं च प्रसिद्धम् । सजलजलधरेन्द्रनीलनीलः इति यदि पाठः तर्हि सजलजलधरवत् इन्द्रनीलवच्च नीलवर्ण इत्यर्थः । उपमितरूपकसमासौ हरिवरुणपक्षयोर्योज्यौ ॥३॥

रिपुमिति । कण्टकवत् रिपुं रावणमुद्धर्तुं धनुषि आसज्जितबाणः सन् अह-

---

१ 'रौद्रि'. क. २ '[illegible]'. क.

सुग्रीवः—अये वियति,

सजलजलदसन्निभप्रकाशः
कनकमयामलभूषणोज्ज्वलाङ्गः[1] ।
अभिपतति कुतो नु राक्षसोऽसौ
शलभ इवाशु हुताशनं प्रवेष्टुम् ॥ ५ ॥

हनुमान्—भो भो वानरवीराः अप्रमत्ता भवन्तु भवन्तः ।

शैलैर्द्रुमैः सम्प्रति मुष्टिबन्धै-
र्दन्तैर्नखैः जानुभिरुग्रनादैः ।
रक्षोवधार्थं युधि वानरेन्द्रा-
स्तिष्ठन्तु रक्षन्तु च नो नरेन्द्रम् ॥ ६ ॥

रामः—राक्षस इति । हनुमन् अलमलं सम्भ्रमेण ।

हनुमान्—यदाज्ञापयति देवः ।

( ततः प्रविशति विभीषणः )

विभीषणः—भोः प्राप्तोऽस्मि राघवस्य शिबिरसन्निवेशम्[2] । (विचिन्त्य) अकृतदूतसम्प्रेषणमविदितागमनममित्रसम्बन्धिनं कथं नु खलु मामवगच्छेत् तत्रभवान् राघवः[3] । कुतः,

क्रुद्धस्य यस्य पुरतः सहितोऽप्यशक्तः
स्थातुं सुरैः सुररिपोर्युधि वज्रपाणिः ।
तस्यानुजं रघुपतिः शरणागतं मां
किं वक्ष्यतीति हृदयं परिशंकितं मे ॥ ७ ॥

---

मस्मि । सागरोप्ययं तं रिपुमद्य सजीवं कर्तुं निवारयति सजीवकरणविषये विपरीतो भवति । ममानुकूल एवेति भावः ॥ ४ ॥

सजलेति । सजलजलदसन्निभश्चासौ प्रकाशश्च । सन्निभस्तुल्यः । कनकमयममलं निर्मलं यद् भूषणं तेनोज्वलं दीप्तं अंगं यस्य सः असौ राक्षसः कुतो नु कस्मात् प्रदेशादाशु झटिति स्वयमेवागत्य हुताशनं वन्हि प्रवेष्टुं शलभ इव अभिमुखं पततीत्यर्थः ॥ ५ ॥

भो इत्यादि । अप्रमत्ता भवन्तु न प्रमाद्यन्तु अवहिता भवतेत्यर्थः ।

शैलैरिति । भो वानरेन्द्राः शैलैः द्रुमैः शैलाश्च द्रुमाश्च क्षेपणार्थम् । मुष्टिबन्धा हननार्थम् । दन्ताः खादनार्थम् । जानवः मर्दनार्थम् । उग्रनादाः भयापनार्थम् । एते रक्षोवधार्थं राक्षसान् हन्तुं भवन्तः सज्जास्तिष्ठन्तु । नः नरेन्द्रं रामं भवन्तः रक्षन्तु च ॥ ६ ॥

राक्षस इत्यादि संवादद्वयम् ।

---

१ 'याङ्गद' क. २ 'शम् । अ' क. ३ 'वः । क' क. 'वः । कुतः । अपि च. क्र' ग-

अथवा—

दृष्टधर्मार्थतत्त्वोऽयं साधुः संश्रितवत्सलः।
शंकनीयः कथं रामो विशुद्धमनसा मया॥ ८॥

(अधोऽवलोक्य[1]) इदं रघुकुलवृषभस्य स्कन्धावारम्। यावदवतरामि। (अवतीर्य) हन्त इह स्थित्वा ममागमनं देवाय निवेदयामि।

हनुमान्—(ऊर्ध्वमवलोक्य) अये[2] कथं तत्रभवान् विभीषणः।

विभीषणः—अये हनुमान्। हनुमन् ममागमनं देवाय निवेदय।

हनुमान्—बाढम्। (उपगम्य) जयतु जयतु देवः।

राजंस्त्वत्कारणादेव भ्रात्रा निर्विषयीकृतः।
विभीषणोऽयं धर्मात्मा शरणार्थमुपागतः॥ ९॥

रामः—कथं विभीषणः शरणागत इति। वत्स[3] लक्ष्मण गच्छ, सत्कृत्य प्रवेश्यतां विभीषणः।

---

शरणार्थमागतस्य विभीषणस्य प्रवेशमाह—तत इति।

भो इत्यादि। शिबिरसन्निवेशं सैन्यनिवेशस्थानम्। विभीषणमाह्वातुं रामेण दूतो न सम्प्रेषितः, नवा विभीषणेन स्वागमनं पूर्वं विज्ञापितं, बिना दूतसम्प्रेषणां निवेदनां च मित्रजनाः सम्बन्धिनश्च स्वातन्त्र्यमवलम्ब्य गच्छेरन्। विभीषणस्तु न केवलं मित्रं सम्बन्धी च परन्तु रावणस्य सम्बन्धी च। तस्माद् रामदर्शनगमनस्य युक्तायुक्ततां चिन्तयति—विचिन्त्येत्यादि। कुतः कस्माद्धेतोः।

क्रुद्धस्येति। युधि युद्धे सुरैः सहितः वज्रपाणिरिन्द्रः सुररिपोः क्रुद्धस्य यस्य रावणस्य पुरतः पुरोभागे स्थातुमपि अशक्तः तादृशस्यतस्य अनुजं शरणागतं मां रघुपतिः किं वक्ष्यतीति मे हृदयं परिशंकितम्। अहं सन्देहास्पदं भवामीति भावः परिशंकितामिति कर्तरि निष्ठा॥ ७॥

राघवस्य न कदापि मां प्रति सन्देहो भवेदित्याह—दृष्टेति। दृष्टं धर्मार्थयोस्तत्वं येनेति स तथाभूतः। संश्रितानामाश्रितपुरुषाणां वत्सलः आश्रितेषु जनेषु प्रकटीकृतवात्सल्यः स रामो विशुद्धमनसा मया कथं केन प्रकारेण शङ्कनीयः अपि तु नेत्यर्थः। सत्सु दुराशया एवं शङ्कताम्॥ ८॥

इदमित्यादि। रघुकुलवृषभः रघुकुलश्रेष्ठः। अवतरामि पर्वतभागादिति शेषः।

अये इत्यादि संवादद्वयम्।

राजन्निति। त्वन्निमित्तादेव तव पक्षमाश्रित्य संव्यवहारकरणादेव भ्रात्रा रावणेन निर्विषयीकृतः नगरान्निर्वासितः धर्मबुद्धिरयं विभीषणः त्वां शरणमुपेतुमागतः॥ ९॥

---

1 'धो वि'. क. 2 'ये कुमारो वि'. क. 3 'गच्छ लक्ष्मण स'. क.

लक्ष्मणः—यदाज्ञापयत्यार्यः ।

रामः—सुग्रीव वक्तुकाममिव त्वां लक्षये ।

सुग्रीवः—देव बहुमायाः छलयोधिनश्च राक्षसाः । तस्मात् सम्प्रधार्य प्रवेश्यतां विभीषणः ।

हनुमान्—महाराज मा मैवम् ।

देवे यथा वयं भक्तास्तथा मन्ये विभीषणम् ।
भ्रात्रा विवदमानोऽपि दृष्टः पूर्वं पुरे मया ॥ १० ॥

रामः—यद्येवं, गच्छ, सत्कृत्य प्रवेश्यतां विभीषणः ।

लक्ष्मणः—यदाज्ञापयत्यार्यः । (परिक्रम्य[1]) अये विभीषणः[2] । विभीषण अपि कुशली भवान् ।

विभीषणः[3]—अये कुमारो लक्ष्मणः । कुमार अद्य कुशली संवृत्तोऽस्मि ।

लक्ष्मणः[4]—विभीषण उपसर्पावस्तावदार्यम् ।

विभीषणः—बाढम् । (उपसर्पतः[5])

लक्ष्मणः—जयत्वार्यः ।

विभीषणः—प्रसीदतु देवः । जयतु[6] देवः ।

रामः—अये विभीषणः । विभीषण अपि कुशली भवान् ।

विभीषणः[7]—देव अद्य कुशली संवृत्तोऽस्मि ।

---

कथमित्यादिसंवादत्रयम् ।

देवेत्यादि । बहुमायाः मायाविनः छलयोधिनः छलेन योद्धुं शीलं येषां ते । सम्प्रधार्य सम्यगालोच्य । प्रतारणार्थमपि राक्षसाः एवमागच्छेरन् तस्मादालोच्य प्रवेश्यतां विभीषण इत्यर्थः ।

हनुमान् धार्मिकं विभीषणं विश्वासार्हमाह—महाराजेत्यादि । अहं तथा विभीषणं मन्ये । यदाहं सीताविचयनार्थं लंकायामासं तदा विभीषणः त्वदर्थे भ्रात्रा सह विवदमानः विवादं कुर्वन् मया दृष्ट इत्यर्थः ॥ १० ॥

यद्येवमित्यादि संवादाष्टकम् ।

---

१ (उपसृत्य). क. ग. ङ. च. २ 'णः । अ'. ग. ३ 'णः—अद्य'. क. 'णः—कुमार अद्य'. ग. ङ. च. ४ 'णः—उ'. क. ५ (उभावुपसृत्य). क. ग. ङ. च. ६ 'जयतु देवः' इति नास्ति. क. ७ 'णः—अ.' क.

भवन्तं पद्मपत्राक्षं शरण्यं शरणागतः ।
अद्यास्मि कुशली राजंस्त्वद्दर्शनविकल्मषः ॥ ११ ॥

रामः—अद्यप्रभृति[1] मद्वचनाल्लङ्केश्वरो[2] भव ।

विभीषणः—अनुगृहीतोऽस्मि ।

रामः—विभीषण त्वदागमनादेव सिद्धमस्मत्कार्यम् । सागरतरणे खलूपायो नाधिगम्यते ।

विभीषणः—देव किमत्रावगन्तव्यम् । यदि मार्गं न ददाति, समुद्रे दिव्यमस्त्रं[3] तावद् विस्रष्टुमर्हति देवः ।

रामः—साधु विभीषण साधु । भवतु, एवं तावत् करिष्ये[4] ।

मम शरपरिदग्धतोयपंकं
हतशतमत्स्यविकीर्णभूमिरागम् ।
यदि मम न ददाति मार्गमेनं
प्रतिहतवीचिरवं करोमि शीघ्रम् ॥ १२ ॥

( ततः प्रविशति वरुणः )

वरुणः—( ससम्भ्रमं )

नारायणस्य नररूपमुपाश्रितस्य
कार्यार्थमभ्युपगतस्य कृतापराधः ।

---

भवन्तमित्यादि । हे राम पद्मपत्राविवाक्षिणी यस्येति तं कमलनयनम् । अथ च शरण्यं शरणे साधुं 'तत्र साधु' रिति यत् । शरणागतः प्राप्तशरणः । हे राजन् अद्य त्वद्दर्शनेन विकल्मषः वीतपापोऽहं कुशली । त्वद्दर्शनमात्रेणापि जनानां कुशलमिति भावः ॥ ११ ॥

विकल्मषः विगतपाप्मा ।

अद्यप्रभृतीत्यादिसंवादपञ्चकम् ।

ममेति । मम शरेणास्त्रेण परिदग्धः निश्चलः तोयपंकाः यस्मिंस्तादृशं, हता ये अनेके मत्स्याः तैर्विकीर्णः व्याप्तः भूमिभागः यस्य तादृशं एनं मार्गं अयं समुद्रः यदि न ददाति शरप्रेषणेनापि यद्येवं मार्गं न ददाति तर्हि शीघ्रं झटिति प्रतिहतवीचिरवं यथातथा करोमि तरंगशब्दानां यथा ताटस्थ्यं स्यात्तथा करोमीत्यर्थः ॥ १२ ॥

श्रीरामस्य मार्गदाने अनुकूलो वरुणः भीतः प्रविशति—ततः इत्यादि ।

नारायणस्येति । नररूपं मानुषस्वरूपं उपाश्रितस्य स्वयं प्रतिपन्नस्य, कार्यार्थं

---

१ 'तिल'. क. २ 'केशोभवान्.' क. ३ 'स्त्रं वि'. क. ४ 'ष्ये ( सहसोत्तिष्ठन् ) मम' क. एवं ( सहसोत्थित सरोषं ) मम. ख. च.

देवस्य देवरिपुदेहहरात् प्रतूर्णं
भीतः शराच्छरणमेनमुपाश्रयामि ॥ १३ ॥

(विलोक्य[1]) अये अयं भगवान् ।

मानुषं रूपमास्थाय चक्रशार्ङ्गगदाधरः ।
स्वयं कारणभूतः सन् कार्यार्थी समुपागतः ॥ १४ ॥

नमो भगवते त्रैलोक्यकारणाय नारायणाय ।

लक्ष्मणः[2]—(विलोक्य) अये को नु खल्वेषः ।

मणिविरचितमौलिश्चारुताम्रायताक्षो
नवकुवलयनीलो मत्तमातंगलीलः
सलिलनिचयमध्यादुत्थितस्त्वेष शीघ्र-
मवनतमिव कुर्वंस्तेजसा जीवलोकम् ॥ १५ ॥

विभीषणः—देव अयं खलु भगवान् वरुणः प्राप्तः ।

रामः—किं वरुणोऽयम् । भगवन् वरुण नमस्ते ।

वरुणः[3]—न मे नमस्कारं[4] कर्तुमर्हति देवेशः[5] । अथवा,

राजपुत्र कुतः कोपो रोषेण किमलं तव ।
कर्तव्यं तावदस्माभिर्वद शीघ्रं नरोत्तम ॥ १६ ॥

रामः—लंकागमने मार्गं दातुमर्हति भवान्[6] ।

---

रावणवधरूपं कार्यम् । अभ्युपगतस्य अभ्यागतस्य, तादृशस्य देवस्य श्रीरामस्य देवरिपुदेहहरात् रावणस्य शरीरनाशकरणसमर्थात् शराद् भीतः अहं एवमुपाश्रयामि, तादृशः शरः मां नाशयेदिति शंकया ॥ १३ ॥

मानुषमित्यादि—भगवन् त्वमजन्मापि मानुषं रूपमास्थाय पृथिव्यां मानवं रूपमापन्नः सन् चक्रशार्ङ्गगदाधरः । शार्ङ्गं धनुः । स्वयमेव सर्वस्य स्थावरजङ्गमात्मकस्य वस्तुनः कारणभूतः मूलं कारणं सन् लीलया कार्यार्थी सन् समुपागतः मर्त्यलोकं प्राप्तः ॥ १४ ॥

मणीति । मणिभिः माणिक्यैर्विरचिता मौलिर्यस्य सः चारुणी ताम्रे आयते दीर्घे चाक्षिणी यस्य तादृशः, नूतनकुवलयपुष्पवन्नीलवर्णः मत्तगजस्य लीलेव लीला यस्य तादृशः, स्वतेजसा जीवलोकस्याधमर्णमावहन्नित्यर्थः ॥ १५ ॥

राजपुत्र इति । रोषेण किमलं तव, तव अलं रोषेण किम् । अत्यर्थं रोषेण किम् । किमर्थं त्वं कुपितः सन् बाणं विस्रष्टुं प्रयतसे । अस्माभिर्यत्कर्तव्यं तत् कर्तुं वयं सन्नद्धाः स्मः । उच्यतां तावदिति भावः ॥ १६ ॥

---

१ '(विलोक्य) इति नास्ति'. क. २ 'तः । लक्ष्म'. क. ग. ङ. च. ३ 'णः—अ'. क. ४ 'णः—अ'. क. ५ 'स्कारमर्हति कर्तुं देवदेवेशः'. क. ६ 'भगवा'. क.

वरुणः—एष मार्गः । प्रयातु भवान् । ( अन्तर्हितः )

रामः—कथमन्तर्हितो भगवान् वरुणः । विभीषण[2] पश्य पश्य भगवत्प्रसादान्निष्कम्पवीचिमन्तं सलिलाधिपतिम् ।

विभीषणः—देव साम्प्रतं द्विधाभूत इव दृश्यते जलनिधिः ।

रामः—क्व हनुमान् ।

हनुमान्—जयतु देवः ।

रामः—हनुमन् गच्छाग्रतः ।

हनुमान्—यदाज्ञापयति देवः[3] । ( सर्वे परिक्रामन्ति )

रामः—( विलोक्य[4] सविस्मयं ) वत्स लक्ष्मण वयस्य विभीषण महाराज सुग्रीव सखे हनुमन् पश्यन्तु पश्यन्तु भवन्तुः ।
अहो विचित्रता सागरस्य[5] ।

क्वचित् फेनोद्गारी क्वचिदपि च मीनाकुलजलः
क्वचिच्छंखाकीर्णः क्वचिदपि च नीलाम्बुदनिभः[7] ।
क्वचिद् वीचीमालः क्वचिदपि च नक्रप्रतिभयः[6]
क्वचिद् भीमावर्तः क्वचिदपि च निष्कम्पसलिलः ॥१७॥

भगवत्प्रसादादतीतः सागरः ।

हनुमान—देव इयमियं लंका ।

रामः[8]—( चिरं विलोक्य ) अहो राक्षसनगरस्य[9] श्रीरचिराद् विपत्स्यते ।

---

कथमित्यादि । निष्कम्पवीचिमन्तं निश्चलतरंगविशिष्टं सलिलाधिपतिं समुद्रम् ।
क्वेत्यादिसंवादपञ्चकम् ।

क्वचिदिति । फेनानुद् गिरति वमतीति फेनोद्गारी क्वचित् मीनैः मत्स्यैः व्याप्तनीरः, क्वचिद् शंखैः शुक्तिभिराकीर्णः, क्वचिच्च नीलमेघतुल्यवर्णः क्वचिद् वीचय एव माला यस्य सः तादृशः वीचीनां माला यस्मिन् स वीचीमालः क्वचित् नक्रैः मकरमत्स्यैः भयंकरः, क्वचिद् भीमः भयंकर आवर्तो यस्य तादृशः, वायुवशात्प्रवाहवशाच्च जले आवर्ता उत्पद्यन्ते, क्वचित् निश्चलसलिलः तटाक इव विद्यत इत्यर्थः ॥ १७ ॥

---

१ 'भगवा'. क. २ 'ण पश्य निष्क.' क. ३ 'वः, इतः, स'. क. ४ '(विलोक्य) व'. क. ५ 'स्य, इहहि, क्व'. क. ख. ६ 'नक्रप्रतिभयः'. क. ग. ङ. च. ७ 'नीलाम्बुदनिभः'. क. ग. ङ. च. ८ 'मः—अ'. क. ९ 'स्य परा लक्ष्मीर'. क. च.

मम शरवरवातपातभग्ना कपिवरसैन्यतरङ्गताडिताान्ता ।
उदधिजलगतेव नौर्विपन्ना निपतति रावणकर्णधारदोषात् ॥१८॥
सुग्रीव अस्मिन् सुवेलपर्वते क्रियतां सेनानिवेशः ।

सुग्रीवः—यदाज्ञापयति देवः । नील एवं क्रियताम् ।

[2]नीलः—यदाज्ञापयति महाराजः । ( निष्क्रम्य प्रविश्य ) जयतु देवः । क्रमान्निवेश्यमानासु सेनासु वृन्दपरिग्रहेषु[3] परीक्ष्यमाणेषु पुस्तकप्रामाण्यात् कुतश्चिदप्यविज्ञाप्यमानौ द्वौ वनौकसौ गृहीतौ । वयं न जानीमः कर्तव्यम् । देवस्तस्मात्प्रमाणम्[4] ।

रामः—शीघ्रं प्रवेशयत्वेतौ[5] ।

नीलः—यदाज्ञापयति देवः । ( निष्क्रान्तः )

( ततः प्रविशति नीलो वानरैर्गृह्यमाणौ वानररूपधारिणौ[6] सम्पुटिकाहस्तौ शुकसारणौ च )

---

देवेत्यादि ।

अहो इत्यादि । राक्षसनगरस्य लंकायाः । विपत्स्यते नङ्क्ष्यति ।

ममेति । यथा किञ्चित् प्रवहणं वात्यया परिभूतं तरंगैस्ताडितं च नाविकदोषात् विपदं प्राप्नोति तद्वत् । मम श्रेष्ठशरा एव वाताः तेषां पातेन भग्ना कपिवरस्य सुग्रीवस्य सैन्यमेव तरंगाः तैस्ताडितभागा राक्षसनगरश्रीः रावण एव कर्णधारस्तस्य दोषात् उदधिजलगता नौरिव विपन्ना निपतति । वर्तमानसामीप्ये वर्तमानवद्वा । उदधिः 'उदकस्योदः संज्ञाया' मित्युदकस्योदादेशः । 'कर्णधारस्तु नाविक' इत्यमरः । अत्र नगरश्रियः पतनं प्रति कर्तृत्वमर्थात्सिद्धम् ॥ १८ ॥

सुवेलपर्वते सेनानिवेशमाज्ञापयति—सुग्रीवेत्यादि ।

यदाज्ञापयतीत्यादि ।

जयत्वित्यादि । किष्किन्धानगरात्प्रस्थिताः सर्वेपि वानरा अत्रागता वा इति परीक्षितुं क्रमान्निवेश्यमानासु सेनासु पंक्तिनिक्षिप्तासु सेनास्वित्यर्थः । पुस्तकलिखितनामानुसारं वानरसंघातेषु च परीक्षितेषु पुस्तकादृष्टनामानौ प्रस्थितेभ्यो वानरेभ्यः संख्ययाधिकभूतौ अविज्ञायमानदेशकालौ वानरौ द्वौ गृहीताविति भावः ।

शीघ्रमित्यादि संवादद्वयम् ।

श्रीरामादीन् वञ्चयितुं रावणेन प्रेषितौ वानररूपधारिणौ शुकसारणौ रंगे प्रवेशयति—ततइत्यादि ।

अङ्घो इत्यादि । अङ्घो इति सकोपामन्त्रणे । 'अंघो रेरेति चाधमः' ।

---

१ 'शः, (उपविशति)'. ख. २ '(प्रविश्य) नीलः—' क. ख. ३ 'हेषु पु'. क. ४ 'तस्माद्देव एव प्र'. क. ख. ग. ङ. ५ 'यतां'. क. ६ 'रिणौ शु'. क.

वानरा:[1]—अङ्घो भणथ तुह्मे भणाथ । (क)

उभौ—भट्टा[2] अह्मे अंअकुमुदस्स सेवआ ( वानभट्टा ? ) (ख)

वानरा:—भट्टा अंअकुमुदस्स सेवआत्ति अत्ताणं अं[3]वदिसन्ति। (ग)

विभीषणः—( स.वर्धान[4] शुकसारणौ विलोक्य )

स्वसैनिकौ न चाप्येतौ न चाप्येतौ वनौकसौ ।
प्रेषितौ रावणेनैतौ राक्षसौ शुकसारणौ ॥ १९ ॥

उभौ—'आत्मगतं' हन्त कुमारेण विज्ञातौ स्वः । ( प्रकाशं ) आर्य आवां खलु राक्षसराज्यस्य विप्रतिपत्या विपद्यमानं राक्षसकुलं दृष्ट्वास्पदमलभमानौ आर्य[5]संश्रयार्थं वानररूपेण सम्प्राप्तौ ।

रामः—वयस्य विभीषण कथमिव भवान् मन्[6]यते ।

विभीषण[7]:—देव

एतौ हि राक्षसेन्द्रस्य सम्मतौ मन्त्रिणौ नृप ।
प्राणान्तिकेऽपि व्यसने लंकेशं नैव मुञ्चतः ॥ २० ॥

तस्माद् यथार्ह[8] दण्डमाज्ञापयतु देवः ।

---

(क) अंघो भणतं कौ युवां भणतम् ।
(ख) भर्तः आवामार्यकुमुदस्य सेवकौ ।
(ग) भर्तः आर्यकुमुदस्य सेवकावित्यात्मानमपदिशतः ।

---

भट्टा इत्यादि । कुमुदः कश्चिद्वानरनेता ।

विभीषणस्तौ विलोक्य तयोस्तत्वमाविष्करोति—स्वसैनिकावित्यादि । एतौ वानररूपधारिणौ न स्वसैनिकौ नास्मत्सेनान्तर्गतौ । किन्तु एतौ शुकसारणौ तन्नामानौ राक्षसौ, रावणेनास्मान् वञ्चयितुं प्रेषितौ स्तः ॥ १९ ॥

आर्येत्यादि । विप्रतिपत्या विपरीतबुध्या । इदं तयोः प्रतारकवचनम् ।

वयस्येत्यादि ।

एतौ हीत्यादि । विभीषण इत्यादि—मा मैवं वादीरिति शेषः । विभीषणः शुकसारणावुद्दिश्य राममाह—हे नृप एतौ शुकसारणौ भवदान्तिकं दौत्येनागताविमौ राक्षसेन्द्रस्य रावणस्य मन्त्रिणौ स्त इति शेषः । एतौ प्राणान्तिकेऽपि व्यसने विपत्तौ समुपस्थिते लङ्केशं दशग्रीवं नैव मुञ्चतः न त्यजतः विषमे संप्राप्ते इमौ स्व-

---

१ 'रौ–'. क. २ 'ट्टा अंअ'. क. ३ 'णं वव'. क. ४ 'नं वि'. क. ५ 'र्यस सं'. क. ६ 'तर्कयति'. क. ख. ग. ७ 'णः—एतौ'. क. ८ 'तुमर्हति दे'. 'तुमर्हति महाराजः'. ख. ग. घ.

रामः—विभीषण मा मैवम्।

अनयोः शासनादेव न मे वृद्धिर्भविष्यति।
क्षयो वा राक्षसेन्द्रस्य तस्मादेतौ विमोचय॥ २१॥

लक्ष्मणः—यदि विमुञ्चेत्, सर्वस्कन्धावारं[1][2] प्रविश्य परीक्ष्य पुनर्मोक्षमाज्ञापयत्वार्यः।

रामः—सम्यगभिहितं[3] लक्ष्मणेन, नील एवं क्रियताम्।

नीलः—यदाज्ञापयति देवः।

रामः—अथवा एहि तावत्।

उभौ—इमौ[4] स्वः।

रामः—अभिधीयतां मद्वचनात्स[5] राक्षसेन्द्रः,

मम दारापहारेण स्वयं ग्राहितविग्रहः।
आगतोऽहं न पश्यामि द्रष्टुकामो रणातिथिः॥ २२॥ इति।

उभौ[6]—यदाज्ञापयति देवः। (निष्क्रान्तौ)

रामः—विभीषण वयमपि तावदनन्तरीयं[7] बलं परीक्षिष्यामहे।

विभीषणः—यदाज्ञापयति देवः।

रामः[8]—अये[9] अस्तमितो भगवान् दिवाकरः। सम्प्रति हि,

---

प्राणव्ययेन रावणं रक्षितुमुद्यतौ भवत इत्यर्थः॥ २०॥

अनयोरिति। शासनाद् दण्डविधानात्॥ २१॥

यदीत्यादि। परीक्ष्य परितो दर्शयित्वा।

सम्यगित्यादि।

अथवेत्यादि। एहीति अन्यतराह्वानाभिप्रायमेकवचनम्।

ममेति। दाराणां सीतायाः अपहारेण अपहरणेन स्वयमुत्पादितविग्रहः सन् आगतः रणातिथिः अहं त्वां द्रष्टुकामोऽपि न पश्यामीत्यर्थः। त्वामिति गम्यम्॥२२॥

यदाज्ञापयतीत्यादि संवादचतुष्टयम्।

अस्तेति। अस्तपर्वतशिखरं प्राप्तः संकुचितकिरणः, सन्ध्याकाले सूर्यकिरणानां

---

१ 'र्वस्य स्क'. क. २ 'रंप'. क. ३ 'तं नी'. क. ४ एतौ स्वः'. क. ५ 'तसः' क. ६ 'भौ—देव तथा'. क. ७ 'ण आनन्तर्यं ब'. क. ख. घ. ङ. ८ 'मः—(परिक्रम्य विलोक्य) अये'. क.

९ 'रः। अस्ता'. क. 'रः। कुतः, अस्ता'. ङ.

अस्ताद्रिमस्तकगतः प्रतिसंहृतांशुः
सन्ध्यानुरञ्जितवपुः प्रतिभाति सूर्यः ।
रक्तोज्वलांशुकवृते द्विरदस्य कुम्भे
जाम्बूनदेन रचितः पुलको यथैव ॥ २३ ॥

( निष्क्रान्ताः सर्वे )

चतुर्थोऽङ्कः ।

---

संकोचः प्रातः विकासश्च भवति । सन्ध्यया अनुराञ्जितं वपुः यस्य स सूर्यः प्रतिभाति । उपमामाह—रक्तः उज्वलः दीप्तश्च यः अंशुकः पटस्तेन आस्तृते गजस्य कुम्भे मस्तकप्रदेशे जाम्बूनदेन सुवर्णेन निर्मितः पुलक इवेति । पुलक इति गजशिरोलंकारविशेषः ॥ २३ ॥

अस्मिन्नंके, कपीन्द्रसैन्यसहितस्य श्रीरामस्य युद्धाय प्रस्थानं, विभीषणशरणागमनं, सागरलंघनेन लंकाप्राप्तिः, सुवेलपर्वते सेनासन्निवेशश्च प्रतिपाद्यं वस्तु ।

इति चतुर्थोंकः ।

# अथ पञ्चमोऽङ्कः[1]

( ततः प्रविशति राक्षसकाञ्चुकीयः[2] )

**राक्षसकाञ्चुकीयः[3]**—क इह भोः प्रवालतोरणद्वारमशून्यं[4] कुरुते ।

( प्रविश्यान्यो[5] राक्षसः )

**राक्षसः[6]**—आर्य अयमस्मि किं क्रियताम् ।

**काञ्चुकीयः[7]**—गच्छ, महाराजस्य[8] शासनाद् विद्युज्जिह्वस्तावदाहूयताम् ।

**राक्षसः[9]**—आर्य तथा । ( निष्क्रान्तः )

**काञ्चुकीयः[10]**—अहो तु खलु विपद्यमानाभ्युदये राक्षसकुले[11] विपन्नसर्वसाधनस्य निहतवीरपुरुषस्य स्वयं च प्राणसंशयं प्राप्तस्येदानीमपि प्रसन्नत्वं नोपगच्छति महाराजस्य बुद्धिः । को हि नाम[12] ।

चलत्तरंगाहतभीमवेग-[13]
मुत्तीर्णनक्राकुलनीलनीरम्[14] ।

---

ययोः कयोश्चित् शिरःप्रतिकृतिं दर्शयित्वा श्रीरामलक्ष्मणयोर्मरणवृत्तान्तनिवेदनेन सीतां स्वाधीनां कर्तुकामः रावणः ते शिरःप्रतिकृती आनेतुं विद्युज्जिह्वमाज्ञापयतीतीमं वृत्तान्तं सामाजिकानवबोधयितुं राक्षसकाञ्चुकीययोः संवादरूपः विष्कम्भकः प्रस्तूयते ।

तत इत्यादि ।

क इहेत्यादि । प्रवालतोरणद्वारं प्रवालै रचितं बहिर्द्वारम् । अशून्यं सनाथम्, कोत्र तिष्ठतीत्यर्थः ।

आर्येत्यादि संवादत्रयम् ।

अहोतु खल्वित्यादि विपद्यमानाभ्युदये नश्यन् अभ्युदयः श्रेयः यस्य तस्मिन् । विपन्नसर्वसाधनस्य नष्टसकलोपकरणस्य । निहता मरणं प्रापिता ये वीरपुरुषा अक्षादयस्तादृशस्य । अहो तु खलु कष्टम् ।

चलदिति । चलन्तः ये तरंगाः तैराहता ताडिता भीमा वेला तटप्रदेशस्तादृशं,

---

१ 'ङ्कः प्रारभ्यते'. क. २ 'सः'. क. ३ 'सः—'. क. ४ 'काञ्चनतो'. क. ५ 'विश्यरा'. क. ६ 'सः—अय'. क. ७ 'राक्षसः—ग'. क. ८ 'स्य वचना'. क. घ. ङ. ९ 'यदाज्ञापयति महाराजः नि'. क. १० 'राक्षसः—'विचिन्त्य' अ'. क. ११ 'सराज, कु.' क. ख. ग. ङ. १२ 'हि खलु, च'. घ. १३ 'वेलमु' ख. १४ 'मुदीर्ण' ख.

समुद्रमाक्रान्तमवेक्ष्य तस्मै
दारप्रदानाच्च करोति शान्तिम् ॥ १ ॥

अपि च,

प्रहस्तप्रमुखा वीराः कुम्भकर्णपुरस्सराः ।
निहता राघवेणाद्य शक्रजिच्चापि निर्गतः ॥ २ ॥

एवमपि गते,

मदनवशगतो महाननर्थं
सचिववचोऽप्यनवेक्ष्य वीरमानी ।
रघुकुलवृषभस्य तस्य देवीं
जनकसुतां न ददाति योद्धुकामः ॥ ३ ॥

( प्रविश्य )

विद्युज्जिह्वः—अपि सुखमार्यस्य ।

काञ्चुकीयः—विद्युज्जिह्व गच्छ महाराजवचनाद् रामलक्ष्मणयोः शिरःप्रतिकृतिरानीयताम् ।

विद्युज्जिह्वः—यदाज्ञापयति महाराजः । ( निष्क्रान्तः )

काञ्चुकीयः—यावदहमपि महाराजस्य प्रत्यन्तरीभविष्यामि ।

( निष्क्रान्तः ) विष्कम्भकः ।

---

उदीर्णैः सर्वतो व्याप्रियमाणैः नक्रैस्तिमिभिः व्याप्तं नीलनीरं च सागरं आक्रान्तं उल्लंघितं अवेक्ष्य ज्ञात्वा तस्मै रामाय दारप्रदानात् सीताप्रत्यर्पणेन शान्तिं कोपस्येति शेषः । को हि नाम न करोति सर्वोऽपि करोत्येवेत्यर्थः । एतादृशसागरलंघनसमर्थः पुरुषः लंकामपि नाशयितुं समर्थ एवेति ज्ञात्वा तस्मै सीतार्पणेन आत्मानं रक्षयेदिति भावः ॥ १ ॥

प्रहस्तेति एवमपीत्यादि—एवमपिगते व्यसने इति शेषः ।

न केवलं सीतां प्रत्यर्पयति किन्तु रामेण सह योद्धुमपि सन्नद्धोस्तीत्याह—मदनेति । मन्मथपीडाबाधितः सन् सुमन्त्रादिभिरुपदिष्टमपि धिक्कुर्वन् आत्मानं वीरं मनुते इति वीरमानी योद्धुकामः सन् सीतां न प्रत्यर्पयतीत्यर्थः ॥ ३ ॥

अपीत्यादिसंवादचतुष्टयम् ।

ततः प्रविशतीत्यादि । प्रह्लादितस्य आनन्दितस्य । आवेगः सम्भ्रमः त्वरा वा । दुःशकुनदर्शनेऽपि हृदयस्याभ्युदय इत्यर्थः । शान्तिं शुभम् ।

---

१ 'दानं च' क. २ 'शराजि' क. ३ 'नपरवशो म' क. ग. ४ 'हानयार्थे' ख. ५ 'राक्षसः—' क. ६ 'जस्य व' क. 'जस्य शासना' ख. ग. ७ 'रःप्रकृती आनय' क. ८ 'राक्षसः—' क. ९ 'विष्कम्भकः' इति नास्ति क.

(ततः प्रविशति राक्षसीगणपरिवृता सीता।)

सीता—किण्णुहु अय्यउत्तस्स आगमणेण पह्लादिअस्स हिअअस्स अज्ज आवेओ[1] विअ संवुत्तो। अणिट्ठाणि णिमित्ताणि[2] अ दिस्सन्ति। एवं[3] वि दाणि (अच्चाहिअं?) हिअअस्स महन्तो अब्भुदओ वड्ढइ। सव्वहा इस्सरा सन्तिं करन्तु। (क)

(ततः प्रविशति रावणः)

रावणः[4]—मा तावद्,

एषा विहाय भवनं मम सम्प्रयाता
नारी नवामलजलोद्भवलग्नहस्ता।
लंका यदा हि समरे वशमागता मे
पौलस्त्यमाशु परिजित्य तदा गृहीता॥ ४॥

भवति[5] तिष्ठ तिष्ठ। न खलु न खलु गन्तव्यम्। किं ब्रवीषि—उत्सृज्य त्वां[6] राममुपगच्छामीति[7]। आः अपध्वंस

बलादेव गृहीतासि तदा वैश्रवणालये।
बलादेव ग्रहीष्ये त्वां हत्वा राघवमाहवे॥ ५॥

किमनया। यावदहमपि सीतां विलोभयिष्ये[8]। (मदनावेशं निरूप्य) अहो तु खल्वतुलबलता कुसुमधन्वनः। कुतः,[9]

(क) किन्नु खल्वार्यपुत्रस्यागमनने प्रह्लादितस्य हृदयस्याद्यावेग इव संवृत्ताः। अनिष्टानि निमित्तानि च दृश्यन्ते। एवमपीदानीं हृदयस्य महानभ्युदयो वर्धते। सर्वथेश्वराः शान्तिं कुर्वन्तु।

मदनपीडितो रावणः सीतां प्रलोभयितुं प्रविशति—मा इति।

एषेति। एषेत्यनेन लंकाभिमानिनी देवता ग्राह्या। लंकाश्रीरियमिदानीं मम गृहं त्यक्त्वा बहिर्यातेत्यर्थः। पौलस्त्यं कुबेरं समरे परिजित्य इयं लंका मे वशमागता सती तदा गृहीता। रावणः लंकां पुष्पकं च कुबेरं समरे विजित्य प्राप्तवानितीयं कथा यदा पौलस्त्यं परिजित्य गृहीता तदा मे वशमागता इत्येवान्वयक्रमः॥४॥

आः इत्यादि—अपध्वंस अपगच्छ।

बलादिति—पूर्वं मया कुबेरसदने बलाद् गृहीता त्वमिदानीं मां त्यक्त्वा रामाश्रयाय प्रस्थितासि। तस्मादिदानीं राघवमपि युद्धे निहत्य पूर्ववत् त्वां बलाद् ग्रहीष्ये इत्यर्थः॥ ५॥

किमित्यादि—विलोभयिष्ये वञ्चयामि। अतुलबलता असमा शक्तिः।

१ 'ओ सं' क. २ 'णिदि' क. ३ 'वं पिदाव अच्चाहिअं हि' क. 'व विदाणि व' ग. ४ 'णः—-ए' क. ५ 'ति नखलु ग' क. ६ 'त्वा रा' क. ७ 'ममनुग' क. ८ 'ण्ये। अ' क. ९ 'कुतः' इति नास्ति क.

निद्रां मे निशि[1] विस्मरन्ति नयनान्यालोक्य सीताननं
तत्संश्लेषसुखार्थिनी तनुतरा याता तनुः पाण्डुताम्[2] ।
सन्तापं[3] रमणीयवस्तुविषये बध्नाति पुष्पेषुणा
कष्टं निर्जितविष्टपत्रयभुजो निर्जीयते रावणः ॥ ६ ॥

(उपेत्य) सीते त्यज त्वमरविन्दपलाशनेत्रे
चित्तं हि मानुषगतं मम चित्तनाथे ।
शस्त्रेण मेऽद्य समरे विनिपात्यमानं
प्रेक्षस्व लक्ष्मणयुतं तव चित्तकान्तम् ॥ ७ ॥

सीता—हं[4] सो क्खु लावणो, जो मन्दरं हत्थेण तुलइदुकामो । (क)

(प्रविश्य)

राक्षसः[5]—जयतु महाराजः ।

एते तयोर्मानुषयोः शिरसी राजपुत्रयोः ।
युधि हत्वा कुमारेण गृहीते त्वत्प्रियार्थिना ॥ ८ ॥

रावणः—सीते पश्य पश्य तयोर्मानुषयोः शिरसी ।

---

(क) हं स खलु रावणः, यो मन्दरं हस्तेन तुलयितुकामः ।

---

निद्रामिति—मे नयनानि नेत्राणि, दशमुखत्वात् नेत्राणां बहुत्वम् । सीताया मुखमालोक्य निशि निद्रां स्वापमपि विस्मरन्ति, तद्वत् सीतालिंगनोत्सुका तनुः शरीरमपि पाण्डुतां याता । एवं मनोज्ञवस्तुप्राप्तयेपि मम मनः सन्तापमावहति । निर्जितं विष्टपत्रयं त्रैलोक्यं यैर्भुजैः स रावणः पुष्पेषुणा मन्मथेन निर्जीयते कष्टम् । प्रौढत्वेन परीकृत्य व्यवहारः ॥ ६ ॥

उपेत्येति । सीतामिति शेषः ।

सीते इति । अरविन्दपलाशनेत्रे सीते चित्तनाथे इति सम्बुद्धित्रयम् मम चित्तेन नाथ्यन इति नाथा, नाथृ याच्ञायां, चित्तेन प्रार्थ्यते । अरविन्दपलाशवत् नेत्रे यस्याः सा तस्याः सम्बुद्धिः । मानुषगतं रामगतं चित्तं त्वं त्यज । त्यक्त्वा मां भजस्वेत्यर्थः ॥ ७ ॥

हमित्यादि । रावणकः 'संज्ञायां चेति कन् । मन्दरः हस्तेन यथा तुलयितुं न शक्यते तद्वत् श्रीरामादीनां निग्रहोप्यशक्य इति वाक्यार्थः ।

रामलक्ष्मणयोः व्याजशिरःप्रतिकृत्यानयनं विज्ञापयतुमाह—जयत्विति ।

एते इति । त्वत्प्रियार्थिना तव प्रियं कर्तुमिच्छता कुमारेण इन्द्राजिता ॥ ८ ॥

सीतां भयापयति । सीते इत्यादि ।

---

१ 'न स्म' ङ. २ 'पाण्डरा' क. ३ 'न्तापो' क. ४ 'हं मूढो खु सि रावणओ, जो' क. ५ 'सः—ए' क.

सीता—हा अय्यउत्त, (क) (इति मूर्च्छिता पतति)

रावणः—सीते भावं परित्यज्य मानुषेऽस्मिन् गतायुषि ।

अद्यैव त्वं विशालाक्षि महतीं श्रियमाप्नुहि ॥ ९ ॥

सीता—( प्रत्यभिज्ञाय ) हा अय्यउत्त परिमिलणवकमलसरिणहे[1] वदणे परिवुत्तणअणे[2] पेक्खन्ती अदिधीरा खु म्हि मन्दभाआ । हा अय्यउत्त एदस्सिं दुःखसाअरे मं णिक्खिविअ कहिं गदो[3] सि । जाव ण मरामि । किं णुखु अलिअं एदं भवे । भद्द जेण असिणा अय्यउत्तस्स असदिसं किदं, तेण मं[4] वि मारेहि । (ख)

रावणः—

व्यक्तमिन्द्रजिता युद्धे हते तस्मिन् नराधमे ।

लक्ष्मणेन सह भ्रात्रा केन त्वं मोक्षयिष्यसे[5] ॥ १० ॥

( नेपथ्ये )

रामेण रामेण ।

सीता—चिरं जीव, ( प्रविश्य )

---

(क) हा आर्यपुत्र ।

( ख ) हा आर्यपुत्र परिमलनवकमलसन्निभे वदने परिवृत्तनयने पश्यन्ती अतिधीरा खल्वस्मि मन्दभागा । हा आर्यपुत्र एतस्मिन् दुःखसागरे मां निक्षिप्य कुत्र गतोऽसि । यावन्न म्रिये । किन्नु खल्वलीकमेतद् भवेत् । भद्र येनासिनार्यपुत्रस्यासदृशं कृतं तेन मामपि मारय ।

---

हा इत्यादि । सीताया अत्र यद्यपि नास्ति पूर्णो विश्वासः तथापि प्रतिकृतिसंवाददर्शनात् सन्दिहाना मूर्छति ।

सीते इत्यादि । महतीं श्रियं मदीयामित्यार्थम् ॥ ९ ॥

हा इत्यादि परिम्लाननवकमलेति सम्यक् । येनासिना खड्गेन आर्यस्यासदृशं रामस्यासदृशं कर्म शिरश्छेदनरूपं कृतं तेनासिना ममापि शिरः छेदयेत्यर्थः । नयने इति द्वितीयाद्विवचनम् ।

रावणः इन्द्रजिता रामलक्ष्मणौ निहताविति विज्ञापयति तच्चाग्रे अलीकमिति यथा भवेत्तथा नेपथ्यवाचं कविर्घटयन्नाह—रामेण रामेणेति । रामेण यः कश्चन राक्षसश्रेष्ठो निहत इति गम्यम् ।

तत् श्रुत्वा सन्तुष्टा सीताऽऽह—चिरमित्यादि ।

---

१ 'ळक' क. २ 'क्खामि अ' क. ३ 'गओसि' क. ४ 'मं मा' क. ५ 'ष्यसि' क.

राक्षसः—( ससम्भ्रमं ) रामेणेति ।

रावणः—कथं कथं रामेणेति ।

राक्षसः—प्रसीदतु प्रसीदतु महाराजः । अतिपातिवृत्तान्तनिवेदनत्वरयावस्थान्तरं नावेक्षितम् ।

रावणः—ब्रूहि ब्रूहि । किं कृतं मनुजतापसेन ।

राक्षसः—श्रोतुमर्हति महाराजः । तेन खलु ।

उदीर्णसत्त्वेन महाबलेन
लंकेश्वरं त्वामभिभूय शीघ्रम् ।
सलक्ष्मणेनाद्य हि राघवेण
प्रसह्य युद्धे निहतः सुतस्ते ॥ ११ ॥

रावणः—आः दुरात्मन् समरभीरो,

देवाः सेन्द्रा जिता येन दैत्याश्चापि पराङ्मुखाः ।
इन्द्रजित् सोपि समरे मानुषेण निहन्यते ॥ १२ ॥

राक्षसः—प्रसीदतु प्रसीदतु महाराजः । महाराजपादमूले कुमारमन्तरेणानृतं नाभिधीयते ।

रावणः—हा वत्स मेघनादे ( इति मूर्छितः पतति )

राक्षसः—महाराज समाश्वसिहि समाश्वसिहि ।

रावणः—( प्रत्यभिज्ञाय )

---

प्रसीदत्वित्यादि । अतिपातिवृत्तान्तः अत्याहितवृत्तान्तः । कालविलम्बं यथा न न सहेत तादृश इत्यर्थः ।

पूर्वं सीतां प्रलोभयितुं इन्द्रजिता रामलक्ष्मणौ निहताविति रावणेन सीता अलीकं विज्ञापिता । इदानीं रामलक्ष्मणाभ्यां इन्द्रजिन्निहत इति सत्यमावेदयन्नाह—श्रोतुमर्हतीत्यादि ।

उदीर्णेति । ते सुतः इन्द्रजित् । उदीर्णं उद्वृत्तम् ॥ ११ ॥

आः इत्यादि ।

इन्द्रजिद्धनने सन्दिहान आह—देवा इत्यादि ॥ १२ ॥

प्रसीदत्वित्यादि । कुमारमन्तरेण इन्द्रजितं प्रति । हा वत्सेत्यादिसंवादद्वयम् ।

---

१ 'णः—किमिति' राक्ष—रामेण' रावणः—किंकृतंरामेण, राक्ष—प्र' क. २ 'तिकार्यनि' क. ३ 'तम्, श्रीतुमर्हति महाराजः । उदीर्ण' क. ४ 'द, हा वत्स सर्वं' क.

हा वत्स सर्वजगतां ज्वरकृत् कृतास्त्र
हा वत्स वासवजिदानतवैरिचक्र ।
हा वत्स वीर गुरुवत्सल युद्धशौण्ड
हा वत्स मामिह विहाय गतोऽसि कस्मात् ॥ १३ ॥

( इति मोहमुपगतः )

राक्षसः—हा धिक् त्रैलोक्यविजयी लंकेश्वर एतामवस्थां प्रापितो हतकेन विधिना । महाराज समाश्वसिहि समाश्वसिहि ।

रावणः—( समाश्वस्य ) इदानीमनर्थहेतुभूतया सीतया किमनया-त्रैलोक्यविजयविफलया चपलया श्रिया च । किं भोः कृता-न्तहतक अद्यापि भयविह्वलोसि ।

इदानीमपि निःस्नेहो वत्सेनेन्द्रजिता विना ।
कष्टं कठोरहृदयो जीवत्येष दशाननः ॥ १४ ॥

( इति सन्तापात्पतति )

राक्षसः—हा भो रजनीचरवीराः एवगंते राजन्यन्तःकक्ष्यास्थिता रक्षिणश्चाप्रमत्ता भवन्तु भवन्तः । ( नेपथ्ये )

---

हा इति । ज्वरकृत् भयोत्पादक । कृतास्त्र अधीतास्त्रविद्य । वासवजिदिति इन्द्रजितो नाम । आनतं नम्रं वैरिचक्रं शत्रुमण्डलं यस्य तादृश, युद्धे शौण्डः समर्थः तादृश ॥ १३ ॥

हा धिगित्यादि । एतामवस्थां स्वजीवितसमय एव पुत्रमरणशोकानुभवरूपामवस्थाम् ।

इदानीमित्यादि । किमित्यस्य मध्यमणिन्यायेन सीतया श्रिया इत्युभयत्राप्यन्वययोग्यता ॥ १४ ॥

हा भो इत्यादि । अप्रमत्ता अवहिताः ।

रामरावणसैन्ययोर्युद्धे राक्षससैन्यं भयात् पलायमानं दृष्ट्वा राक्षसाधिपतिः कश्चित् पलायनमनुचितमिति नेपथ्यादाह—भो भो इत्यादि । तेषां कान्दिशीकतायाः कारणं प्रहस्तनिकुम्भादीनां राक्षसाधिपतीनां हननमेव । तदेवाह—समरेत्यादि । समरमुखात् युद्धभूमेर्निरस्ताः निहताः ये प्रहस्तनिकुम्भकुम्भकर्णेन्द्रजितः तैः विकलं शक्तिहीनं यद् बलं सैन्यं तदेव जलधिः समुद्रः । समुद्रसाम्यं सैन्यस्य अपरिमेयतया । तस्माज्जनितं यद् भयं तस्मात् चकिताः व्याकुला विमुखाः पराङ्मुखाश्च

---

१ 'जिता नववै' क. २ 'त्, हा' क. ३ 'राक्ष—म' क. ४ 'र्थभू' क. ५ 'किं त्रै' क. ६ 'क, इदा' क ७ 'सः—भो' क. ८ 'वीराः अन्त' क. ९ 'क्ष्यार' क. १० 'न्तः । भो' क.

भो भो रजनीचरवीराः समरमुखनिरस्तप्रहस्तनिकुम्भकुम्भकर्णे-न्द्रजिद्धिकलबलजलधिजनितभयचकिताविमुखाः चपलपलायनमनु-चितमविरतममरसमराणि जितवतां भवतां, अथ च विश्वलोक-विजयविख्यातविंशद्बाहुशालिनि भर्तर्यत्र स्थितवनि लंकेश्वरे ।

रावणः—( श्रुत्वा सामर्ष ) गच्छ, भूयो ज्ञायतां वृत्तान्तः ।

राक्षसः—यदाज्ञापयति महाराजः । (निष्क्रम्य प्रविश्य) जयतु महाराजः, एष हि रामः ।

धनुषि निहितबाणस्त्वामतिक्रम्य गर्वा-
द्धरिगणपरिवारो हाससम्फुल्लनेत्रः ।
रणशिरसि सुतं ते पातयित्वा तु राज-
न्नभिपतति हि लंकां सन्दिधक्षुर्यथैव ॥ १५ ॥

रावणः—( सहसोत्थाय सरोषं ) क्वासौ क्वासौ । ( असिमुद्यम्य )

वज्रीभकुम्भतटभेदकठोरधारः
क्रोधोपहारमसिरेष विधास्यति त्वाम् ।

---

तादृशाः अमरसमराणि देवैः सह सम्प्राप्ते युद्धे तत्रापि जयं प्राप्तवतां भवतां, समर-मुखनिरस्तप्रहस्तादिवैकल्येन भयचकितत्वम् । अयंच विशिष्य च विश्वलोकविजयेन विख्याता ये विंशतिबाहवः तैः शालत इति तादृशे भर्तरि लंकेश्वरे अत्र स्थितवति सति । विंशद्बाहु इत्येव सर्वेष्वादर्शेषु दृश्यते, किन्तु इदं लेखकप्रमादकृतमपि सं-भाव्यते । गद्ये विंशति इत्यपि पाठसम्भवात् । अविरतमिदं चपलपलायनं चापल्य-प्रयुक्तं पलायनमनुचितं न योग्यम् ।

धनुषीति । धनुषि चापे निहितबाणः सक्तसायकः गर्वात् अवलेपात्, त्वाम-तिक्रम्य तव बलवीर्यादिकं विगणयन् । हरिगणपरिवारः वानरसमूहपरिवृतः हाससम्फुल्लनेत्रः हर्षविकसितनयनः रणशिरसि युद्धरंगे ते सुतं इन्द्रजिन्नामानं पातयित्वा निहत्य लंकामेव सन्दग्धुमिच्छुरिवाभिपतति ॥ १५ ॥

वज्रीति । वज्री देवेन्द्रः तस्येभः ऐरावतः तस्य कुम्भतटं मस्तकं तस्य भेदने विषयेऽपि निशितारः मत्करस्थः असिः खड्गः मम कोपस्योपहारमुपायनभूतं त्वां विधास्यति करिष्यति । अनिमिषा देवाः सम्प्रति ममासिना निपात्यमानं

---

१ 'लनिधि' क. २ 'यविमुखच' क. ३ 'श्वविज' क. ४ 'र्तरियत्र' क. ५ 'णः—ग' क. ६ 'च्छ ज्ञा' क. ग. घ. ७ 'तु लंकेश्वरः' क. ग. घ. ८ 'णः-आः दुरात्मन्, व' क.

सम्प्रत्यवन्त्वनिमिषा इह[1] मत्करस्थः
क्षुद्र क्व यास्यसि कुतापस तिष्ठ तिष्ठ[2] ॥ १६ ॥

**राक्षसः**—महाराज अलमतिसाहसेन ।

**सीता**[3]—अणिट्ठाणि अणरुहाणि अणिमित्ताणि इदाणिं करअंतस्स रावणस्स अइरेण मरणं भविस्सदि । (क)

**रावणः**—अस्याः कारणेन बहवो भ्रातरः सुता[4]ः सुहृदश्च मे निहताः । तस्मादमित्रविषयमस्या हृदयं भित्त्वा कृष्टान्त्रमालालंकृतः खड्गाशनिपातेन समनुजयुगलं[5] सकलवानरकुलं ध्वंसयामि ।

**राक्षसः**—प्रसीदतु प्रसीदतु महाराजः[6] । अलमलमिदानीमखिलावलेपमन्तरेणानवरतवृथाप्रयासेन । अवश्यं च स्त्रीवधो न कर्तव्यः ।

**रावणः**—तेन हि[7] स्यन्दनमानय ।

**राक्षसः**—यदाज्ञापयति महाराजः । ( निष्क्रम्य प्रविश्य ) जयतु महाराजः । इदं स्यन्दनम् ।

---

(क) अनिष्टान्यनर्हाण्यनिमित्तानीदानीं कुर्वतो रावणस्याचिरेण मरणं भविष्यति ।

---

त्वां अवन्तु रक्षन्तु । क्षुद्र तुच्छ । कुत्सितस्तापसः कुतापसः । तिष्ठ तिष्ठ । क्व गच्छसि ॥ १६ ॥

अणिट्ठाणीत्यादि ।

अस्या इत्यादि । अस्याः सीतायाः । बहवो भ्रातरः कुम्भकर्णादयः, सुता इन्द्रजिदादयः, सुहृदश्च प्रहस्तादयः, निहता मरणं प्राप्ताः । अमित्रविषयं प्रीतेरविषयं अमित्रस्य विषयं यत् तत् अमित्रविषयम् । अमित्रं विषयः यस्य तदिति वा । अस्या हृदयं भित्त्वा विदारयित्वा हृदयात् कृष्टया आन्त्रमालया आन्त्रस्रजा अलंकृतवक्षोभागः । खड्ग एवाशनिस्तस्य क्षेपेण समनुजयुगलं रामलक्ष्मणसहितं सर्ववानरसैन्यं ध्वंसयामि ।

प्रसीदत्वित्यादि । अखिलस्य शत्रुबलस्य यः अवलेपः गर्वः तमन्तरेण तं प्रतीत्यर्थः । अलमलं वधोद्यमेन इति शेषः ।

तेन हीत्यादि ।

---

१ 'युधि' क. २ 'ष्ठ । सीता--'क. ३ 'ता--अण' क. ४ 'तश्च निहताश्च । त' क. ५ 'लं वा' क. ६ 'जः । अलं, स्त्री' क. ख. ग. ङ. च. ७ 'हि क्षिप्रमानीयतां स्यन्दनः' क. ख.

रावणः—( रथमारुह्य )

**समावृतं सुरैरद्य सीते द्रक्ष्यसि राघवम् ।**
**मम चापच्युतैस्तीक्ष्णैर्बाणैराक्रान्तचेतसम् ॥ १७ ॥**

( निष्क्रान्तः सपरिवारो रावणः )

सीता—**इस्सरा अत्तणो कुलसदिसेण चारित्तेण जदि अहं अणुसरामि अज्जउत्तं, अज्जउत्तस्स विजओ होदु । ( क )**

( निष्क्रान्ता[2] )

पञ्चमोऽङ्कः ।

---

**( क ) ईश्वराः आत्मनः कुलसदृशेन चारित्रेण यद्यहमनुसराम्यार्यपुत्रं, आर्यपुत्रस्य विजयो भवतु ।**

---

समावृतमिति । मम चापाद् धनुषः च्युतैः विगलितैः विसृष्टैरित्यर्थः । तीक्ष्णैर्निशितैः बाणैः आक्रान्तचेतसं गतचैतन्यं सुरैः रक्षोभिः आवृतं राघवं हे सीते त्वमद्य साम्प्रतमेव द्रक्ष्यसि । यथा त्वं द्रक्ष्यसि तथाहं करोमीति भावः ॥१७॥

पञ्चमेऽङ्के, ययोः कयोश्चित् शिरःप्रतिकृतिं दर्शयित्वा रामलक्ष्मणयोर्मरणवृत्तान्तनिवेदनेन रावणकृतं सीताप्रलोभनं, युद्धे इन्द्रजिन्मरणेन रावणस्य सन्तापः, सन्तप्तहृदयस्यापि पुनरपि समाश्वस्तहृदयस्य तस्य श्रीरामं विनिपातयितुं प्रवृत्तिश्च, प्रतिपाद्यं वस्तु ॥

इति पञ्चमोऽङ्कः ॥

---

१ 'स्तीव्रैर्बा' क. २ 'इति निष्क्रान्ताः सर्वे' क.

# अथ षष्ठोऽङ्कः ।

( ततः प्रविशन्ति विद्याधरास्त्रयः )

**सर्वे**—एते स्म भो एते स्मः ।

**प्रथमः**—इक्ष्वाकुवंशविपुलोज्ज्वलदीप्त[1]केतोः

**द्वितीयः**—[2]रामस्य रावणवधाय कृतोद्यमस्य ।

**तृतीयः**—संग्रामदर्शनकुतूहलबद्धचित्ताः

**सर्वे**—प्राप्ता वयं हिमवतः शिखरात्प्रतूर्णम् ॥ १ ॥

**प्रथमः**—चित्ररथ एते देवदेवर्षिसिद्धविद्याधरादयो निरन्तरं नभः कृत्वा स्थिता[3]ः । तस्माद् वयमप्येतेषामेतान् गणान् परिहरन्तः स्वैरमेकान्ते स्थित्वा रामरावणयोर्युद्धविशेषं पश्यामः ।

**उभौ**—बाढम् । ( तथा कृत्वा )

**प्रथमः**—अहो प्रतिभयदर्शनीया खल्वियं युद्धभूमिः[4] ।

इह हि,

रजनिचरशरीरनीरकीर्णा कपिवरवीचियुता वरासिनक्रा ।
उदधिरिव विभाति युद्धभूमी रघुवरचन्द्रशरांशुवृद्धवेगा ॥ २ ॥

---

विद्याधरा, गुह्यकाः ।

एते स्म भो इत्यादि ।

अथ समरभूमिप्रविष्टा विद्याधराः स्वागमनहेतुं प्रदर्शयन्त आहुः—इक्ष्वाकुवंशेति । इक्ष्वाकुः कश्चित्प्रसिद्धो राजा तद्वंशे विपुलो विस्तीर्ण उज्वलो दीप्तश्च केतुर्ध्वजचिह्नं यस्य । अत्र दीप्तिकेतुरिति रम्यः पाठः । कुतूहलं कौतुकम् । वयं हिमवतो हिमालयस्य शिखरात्प्रतूर्णं यथा स्यात्तथा प्राप्ताः । एतेन रामरावणसंग्रामदर्शनस्यौत्सुक्यातिशयस्तन्मनसि प्रतीयते ॥ १ ॥

चित्ररथ एते इत्यादि । निरन्तरं निच्छिद्रं निरवकाशं कृत्वेत्यर्थः ।

रजनिचरेति । रजनिचराणां राक्षसाणां यानि शरीराणि तान्येव नीरं जलं तेन कीर्णा व्याप्ता । कपिवराः श्रेष्ठा वानरा एव वीचयस्तरङ्गानि तैर्युता । वराः श्रेष्ठा अतितीक्ष्णाश्चासय एव नक्रा जलीयहिंस्रजीवविशेषाः यस्यां सा । यथा नक्रा घातकास्तथा अयश्चेत्युभयोः साम्यम् । रघुवरचन्द्रशरांशुभिर्वृद्धवेगा । इति युद्धभूमेरुदधिना साम्येन सेनातिशयः द्योत्यते । समुद्रोऽपि चन्द्रकिरिणप्रवृद्धवेगो भवतीति सर्वत्र पूर्णोपमा ज्ञेया ॥ २ ॥

---

१ 'प्तिके'. क. २ 'मध्येन'. क. ३ 'ताः । वयमप्येषांग'. क. ४ 'मिः, र'. क.

द्वितीयः—एवमेतत् ।

एते पादपशैलभग्नशिरसो मुष्टिप्रहारैर्हताः
क्रुद्धैर्वानरयूथपैरतिबलैरुत्पुच्छकर्णैर्वृताः ।
कण्ठग्राहविवृत्ततुंगनयनैर्दष्टोष्ठतीव्रैर्मुखैः
शैला वज्रहता इवाशु समरे रक्षोगणाः पातिताः ॥ ३ ॥

तृतीयः—एते चापि द्रष्टव्या भवद्भ्यां,

निशितविमलखड्गाः क्रोधविस्फारिताक्षा
विमलविकृतदंष्ट्रा नीलजीमूतकल्पाः ।
हरिगणपतिसैन्यं हन्तुकामाः समन्ताद्
रभसविवृतवक्त्रा राक्षसाः सम्पतन्ति ॥ ४ ॥

प्रथमः—अहो नु खलु,

बाणाः पात्यन्ते राक्षसैर्वानरेषु

द्वितीयः—शैलाः क्षिप्यन्ते वानरैर्नैर्ऋतेषु ।

तृतीयः—मुष्टिप्रक्षेपैर्जानुसंघट्टनैश्च

सर्वे—भीमश्चित्रं भोः सम्प्रमर्दः प्रवृत्तः ॥ ५ ॥

प्रथमः—रावणमपि पश्येतां भवन्तौ,

कनकरचितदण्डां शक्तिमुल्लालयन्तं

---

अथ च । एते पादपशैल इत्यादि—पादपा वृक्षाः शैला पर्वताश्च तैर्भग्नशिरसो विदीर्णमस्तकाः । कंठग्राहेण गलग्रहणेन विवृत्तानि तुङ्गानि च नयनानि येषां तैः । प्रसह्य गलगृहीतश्च पुरुषः प्राणरोधाद्विवृत्तोत्तुङ्गनयनश्च भवतीति दृश्यते । रोषकारणादेतोरुत्पुच्छकर्णैर्वृताः । मुखैरित्युपलक्षणे तृतीया ॥ ३ ॥

निशितविमलखड्गा इत्यादि । निशितास्तीक्ष्णा विमला मलरहिता खड्गाः कृपाणानि येषां ते । क्रोधेन हेतुना विस्फारिताक्षा विकसितलोचनाः । स्फार विकसने । नीलजीमूतकल्पा इतीषदर्थे कल्पप् प्रत्ययः । हरीणां वानराणां गणः समूहस्तस्यपतिः सुग्रीवस्तस्य सैन्यम्, वानरजातीयानां मानुषाणां सैन्यमिति । रभसविवृतवक्त्राः वेगकारणेन विस्फारिताननाः ॥ ४ ॥

बाणा इति—राक्षसा वानरेषु बाणान् पातयन्ति । वानराः नैर्ऋतेषु शैलान् क्षिपन्ति । नैर्ऋता राक्षसाः । संप्रमर्द अन्योन्यदृढसंयोगरूपः संघर्षः । भीमः भयानकश्चित्रः आश्चर्यप्रदः ॥ ५ ॥

---

१ 'यूथपै'. क. २ 'रुत्फुल्लक'. क. ३ 'क्षोवराः पा'. क. ख. ग.
४ 'विकृत'. क. ख. ग. च. ५ सर्वे—अ' इत्यारभ्य 'प्रवृत्तः' इत्यन्तम् . क.

# अथ षष्ठोऽङ्कः ।

( ततः प्रविशन्ति विद्याधरास्त्रयः )

**सर्वे**—एते स्म भो एते स्मः ।

**प्रथमः**—इक्ष्वाकुवंशविपुलोज्ज्वलदीप्त[1]केतोः

**द्वितीयः**—रा[2]मस्य रावणवधाय कृतोद्यमस्य ।

**तृतीयः**—संग्रामदर्शनकुतूहलबद्धचित्ताः

**सर्वे**—प्राप्ता वयं हिमवतः शिखरात्प्रतूर्णम् ॥ १ ॥

**प्रथमः**—चित्ररथ एते देवदेवर्षिसिद्धविद्याधरादयो निरन्तरं नभः कृत्वा स्थिता[3]ः । तस्माद् वयमप्येतेषामेतान् गणान् परिहरन्तः स्वैरमेकान्ते स्थित्वा रामरावणयोर्युद्धविशेषं पश्यामः।

**उभौ**—बाढम् । ( तथा कृत्वा )

**प्रथमः**—अहो प्रतिभयदर्शनीया खल्वियं युद्धभूमिः[4] ।

इह हि,

रजनिचरशरीरनीरकीर्णा कपिवरवीचियुता वरासिनक्रा ।
उदधिरिव विभाति युद्धभूमी रघुवरचन्द्रशरांशुवृद्धवेगा ॥ २ ॥

---

विद्याधरा, गुह्यकाः ।

एते स्म भो इत्यादि ।

अथ समरभूमिप्रविष्टा विद्याधराः स्वागमनहेतुं प्रदर्शयन्त आहुः—इक्ष्वाकुवंशेति । इक्ष्वाकुः कश्चित्प्रसिद्धो राजा तद्वंशे विपुलो विस्तीर्ण उज्वलो दीप्तश्च केतुर्ध्वजचिह्नं यस्य । अत्र दीप्तिकेतुरिति रम्यः पाठः । कुतूहलं कौतुकम् । वयं हिमवतो हिमालयस्य शिखरात्प्रतूर्णं यथा स्यात्तथा प्राप्ताः । एतेन रामरावणसंग्रामदर्शनस्यौत्सुक्यातिशयस्तन्मनसि प्रतीयते ॥ १ ॥

चित्ररथ एते इत्यादि । निरन्तरं निश्छिद्रं निरवकाशं कृत्वेत्यर्थः ।

रजनिचरेति । रजनिचराणां राक्षसाणां यानि शरीराणि तान्येव नीरं जलं तेन कीर्णा व्याप्ता । कपिवराः श्रेष्ठा वानरा एव वीचयस्तरङ्गानि तैर्युता । वराः श्रेष्ठा अतितीक्ष्णाश्चासय एव नक्रा जलीयहिंस्रजीवविशेषाः यस्यां सा । यथा नक्रा घातकास्तथा अयश्चेत्युभयोः साम्यम् । रघुवरचन्द्रशरांशुभिर्वृद्धवेगा । इति युद्धभूमेरुदधिना साम्येन सेनातिशयः त्योत्यते । समुद्रोऽपि चन्द्रकिरणप्रवृद्धवेगो भवतीति सर्वत्र पूर्णोपमा ज्ञेया ॥ २ ॥

---

१ 'प्तिके'. क. २ 'मध्येन'. क. ३ 'ताः । वयमप्येषांग'. क. ४ 'मिः, र'. क.

द्वितीयः—एवमेतत्।

एते पादपशैलभग्नशिरसो मुष्टिप्रहारैर्हताः
क्रुद्धैर्वानरयूथपैरतिबलैरुत्पुच्छकर्णैर्वृताः।
कण्ठग्राहविवृत्ततुंगनयनैर्दष्टोष्ठतीव्रैर्मुखैः
शैला वज्रहता इवाशु समरे रक्षोगणाः पातिताः॥ ३॥

तृतीयः—एते चापि द्रष्टव्या भवद्भ्यां,

निशितविमलखड्गाः क्रोधविस्फारिताक्षा
विमलविकृतदंष्ट्रा नीलजीमूतकल्पाः।
हरिगणपतिसैन्यं हन्तुकामाः समन्ताद्
रभसविवृतवक्त्रा राक्षसाः सम्पतन्ति॥ ४॥

प्रथमः—अहो नु खलु,

बाणाः पात्यन्ते राक्षसैर्वानरेषु

द्वितीयः—शैलाः क्षिप्यन्ते वानरैर्नैर्ऋतेषु।

तृतीयः—मुष्टिप्रक्षेपैर्जानुसंघट्टनैश्च

सर्वे—भीमश्चित्रं भोः सम्प्रमर्दः प्रवृत्तः॥ ५॥

प्रथमः—रावणमपि पश्येतां भवन्तौ,

कनकरचितदण्डां शक्तिमुज्ज्वालयन्तं

---

अथ च। एते पादपशैल इत्यादि—पादपा वृक्षाः शैला पर्वताश्च तैर्भग्नशिरसो विदीर्णमस्तकाः। कंठग्राहेण गलग्रहणेन विवृत्तानि तुङ्गानि च नयनानि येषां तैः। प्रसह्य गलगृहीतश्च पुरुषः प्राणरोधाद्विवृत्तोत्तुङ्गनयनश्च भवतीति दृश्यते। रोषकारणाद्वेतोरुत्पुच्छकर्णैर्वृताः। मुखैरित्युपलक्षणे तृतीया॥ ३॥

निशितविमलखड्गा इत्यादि। निशितास्तीक्ष्णा विमला मलरहिता खड्गाः कृपाणानि येषां ते। क्रोधेन हेतुना विस्फारिताक्षा विकसितलोचनाः। स्फार विकसने। नीलजीमूतकल्पा इतीषदर्थे कल्पप् प्रत्ययः। हरीणां वानराणां गणः समूहस्तस्य-पतिः सुग्रीवस्तस्य सैन्यम्, वानरजातीयानां मानुषाणां सैन्यमिति। रभसविवृत-वक्त्राः वेगकारणेन विस्फारिताननाः॥ ४॥

बाणा इति—राक्षसा वानरेषु बाणान् पातयन्ति। वानराः नैर्ऋतेषु शैलान् क्षिपन्ति। नैर्ऋता राक्षसाः। संप्रमर्द अन्योन्यदृढसंयोगरूपः संघर्षः। भीमः भयानकश्चित्रः आश्चर्यप्रदः॥ ५॥

---

१ 'यूथपै'. क. २ 'रुत्फुल्लक'. क. ३ 'क्षोवराः पा'. क. ख. ग.
४ 'विकृत'. क. ख. ग. च. ५ 'सर्वे—अ' इत्यारभ्य 'प्रवृत्तः' इत्यन्तम्. क.

विमलविकृतदंष्ट्रं स्यन्दनं वाहयन्तम् ।
उदयशिखरिमध्ये पूर्णबिम्बं शशांकं
ग्रहमिव भगणेशं राममालोक्य रुष्टम् ॥ ६ ॥

द्वितीयः—राममपि पश्येतां भवन्तौ,
सव्येन चापमवलम्ब्य करेण वीर-
मन्येन सायकवरं परिवर्तयन्तम् ।
भूमौ स्थितं रथगतं रिपुमीक्षमाणं
क्रौञ्चं यथा गिरिवरं युधि कार्तिकेयः ॥ ७ ॥

तृतीयः—रावणेन विमुक्तेयं शक्तिः कालान्तकोपमा ।
रामेण स्मयमानेन द्विधा छिन्ना धनुष्मता ॥ ८ ॥

---

पश्येतामिति विचारणीयः प्रयोगः । दृश्येताम् इति स्यात् । कनकरचितदण्डामित्यादि—कनकेन सुवर्णेन रचितो दण्डः यस्यास्तां तथाभूतां शक्तिमस्त्रविशेषमुत्क्षालयन्तं चालयन्तम् । रोषावृतश्च पुरुषः शत्रुसैन्ये प्रभावं दर्शयितुं स्वान्यस्त्राण्युत्क्षालयति । शिखराण्यस्य सन्तीति शिखरी पर्वतः, उदयशिखरीउदलाचलस्तन्मध्ये पूर्णविम्बं पूर्णमण्डलम् शशाङ्कं चन्द्रमिव । शशस्याङ्कश्चिह्नं यस्मिंस्तम् । भगणेशमिति । भगणेशं गृहं सूर्यमिव । भगणः भागानां नक्षत्राणां गणः समूहः नक्षत्रसमूहः । शीघ्रगामिनां ग्रहाणामल्पेन कालेन मन्दगामिनां ग्रहाणां महता कालेन पूर्वगत्या यातानां पाश्चिमगत्या परिवर्तनेनाश्विन्यादिरेवत्यन्तभोगकालः । षष्टि विकलाभिः कला, षष्टि कलाभिर्भागः, त्रिंशभागै राशिर्द्वादशराशिभिर्भगणः । यथा—

शीघ्रगस्तान्यथाल्पेन कालेन महताल्पगः ।
तेषान्तु परिवर्तेन पौष्णान्ते भगणः स्मृतः ॥

राशिबोधे तु भगणस्येशो भगणेशो राशिपतिः सूर्यः ? । अथवा चन्द्रस्यैव विशेषणं स्यादिति विचार्यम् । राममालोक्य रुष्टमिति रावणे योज्यम् ॥ ६ ॥

सव्येनेति—भूमौ स्थितं वीरं राममपि भवन्तौ पश्येतां दृश्येताम् ? किं भूतमिति । सव्येन हस्तेन चापं धनुर्गृहीत्वान्येनापरेण दक्षिणेतरेण च सायकवरं श्रेष्ठं सायकं परिवर्तयन्तं चालयन्तम् । अथ च कार्तिकेया कुमारा युधि गिरिवरं पर्वतश्रेष्ठं क्रौञ्चं यथा । यथा कार्तिकेयः युधि क्रौञ्चमपश्यत्तथा रामोऽपि रिपुमपश्यत् । कार्तिकेयस्योपमानत्वेन क्रौञ्च वध इव रावणवधोऽपि अवश्यम्भावी ध्विन्यते ॥ ७ ॥

रावणेनेत्यादि—रावणेन पौलस्त्येन विमुक्ता कालान्तकोपमेयं शक्तिः स्मयमा-

---

१ 'विकृत'. क. 'विवृतवदनदं'. ख. २ 'यम्' ख. ३ 'यः—हहह, रा' ख. ४ 'जय'क.

प्रथमः—शक्तिं निपातितां दृष्ट्वा क्रोधविष्फारितेक्षणः ।
रामं प्रत्येषवं घ (ण ? र्ष) मभिवर्षति रावणः ॥ ९ ॥

द्वितीयः—अहो रामस्य शोभा ।
एता रावणजीमूताद् बाणधारा विनिस्सृताः ।
विभान्ति राममासाद्य वारिधारा वृषं यथा ॥ १० ॥

तृतीयः—एष एषः,
कनकरचितचापं तीक्ष्णमुद्यम्य शीघ्रं
रणशिरसि सुघोरं बाणजालं विधून्वन् ।
रथगतमभियान्तं रावणं याति पद्भ्यां
गजपतिमिव मत्तं तीक्ष्णदंष्ट्रो मृगेन्द्रः ॥ ११ ॥

सर्वे—अये ज्वलित इव प्रभयायं देशः । किन्नु खल्विदम् ।

प्रथमः—आयुद्धसामान्यजनितशंकेन महेन्द्रेण प्रेषितो मातलिवाहितो रथः ।

द्वितीयः—उपस्थितं मातलिं दृष्ट्वा तस्य वचनाद् रथमारूढवान् रामः ।

तृतीयः—एष हि,
सुरवरजयदर्पदेशिकेऽस्मिन्

---

नेन ईषद्धासयुक्तेन धनुष्मता धानुष्केन रामेण द्विधा छिन्ना । स्मयमानेनेति विशेषणं शक्तेश्छेदने प्रयासराहित्यं सूचयति ॥ ८ ॥

एता रावणेत्यादि—जीवनस्य जलस्य मूतः पुटबन्धो जीमूतः रावण एव जीमूतो रावणजीमूतस्तस्माद्विनिःसृता । एता बाणधाराः रामं दाशरथिमासाद्य वृषं वृषभमासाद्य वारिधारा इव विभान्ति शोभन्ते । यथा वृषभो वारिधारामगणयित्वैव सानन्दं तत्र तिष्ठति तथा रामोऽपि रावणबाणवर्षामगणयित्वैव युद्धे तिष्ठति ॥ १० ॥

कनकरचितचापमित्यादि—कनकेन सुवर्णेन रचितचापं तीक्ष्णं धनुरुद्यम्य रणशिरसि शीघ्रं सुघोरमतितीक्ष्णं बाणजालं विधून्वन् अयं रामः तीक्ष्णदंष्ट्रो मृगेन्द्रः मत्तं गजपतिम् इव रथगतम् अभियान्तं रावणं पद्भ्यां याति ।

तीक्ष्णा दंष्ट्रा यस्येति तम् । जगपतिमृगेन्द्रोपमानेन रावणवधोऽवश्यम्भावीति सूच्यते ॥ ११ ॥

---

१ 'मः—एषः, श' क. २ 'राममुद्दिश्य शरवर्षम' क. अस्मिन् पाठे अक्षरमेकमधिकम्, ३ 'शीघ्रमुद्यम्य तीक्ष्णं' क. ४ 'न्द्रः । सर्वे—एष उप' क. ५ 'रविजयप्रदेशिकेस्विद् (?)' क. 'रविजयप्रदेशितोस्मिन्' ख. ग. घ.

दितिसुतनाशकरे रथे विभाति ।
रजनिचरविनाशकारणः सं-
त्रिपुरवधाय यथा पुरा कपर्दी ॥ १२ ॥

**प्रथमः**—अहो महत् प्रवृत्तं युद्धम् ।

शरवरपरिपीततीव्रबाणं
नरवरनैर्ऋतयोः समीक्ष्य युद्धम् ।
विरतविविधशस्त्रपातमेते
हरिवरराक्षससैनिकाः स्थिताश्च ॥ १३ ॥

**द्वितीयः**—अहो तु खलु,

चारीभिरेतौ परिवर्तमानौ
रथे स्थितौ बाणगणान् वमन्तौ ।
स्वरश्मिजालैर्धरणिं दहन्तौ
सूर्याविव द्वौ नभसि भ्रमन्तौ ॥ १४ ॥

**तृतीयः**—रावणमपि पश्येतां भवन्तौ ।

शरैर्भीमवेगैर्हयान् मर्दयित्वा
ध्वजं चापि शीघ्रं बलेनाभिहत्य ।

---

प्रभया कान्त्या । न्विति वितर्के ।

महेन्द्रेणेन्द्रेण । मातलिरिन्द्रसारथिस्तेन वाहितः ।

रथमारूढवान् स्यन्दनमारुरोह ।

सुरविजयेत्यादि—सुरविजयप्रदेशिके सुरविजयप्रदातरि । विजयोपदेष्टरि इति वा ।

दितिसुतनाशकरे कृञो हेतुताच्छील्यानुलोम्येषु, इति टप्रत्ययः । कपर्दी शङ्करो यथा त्रिपुरवधाय । पुरा किल शिवः त्रिपुरनामानं दैत्यं रणे जघान इति पुराणादिषु प्रसिद्धिः ॥ १२ ॥

अहो महदिति—शरवरेण श्रेष्ठधनुषा परिपीतास्तीव्रा बाणा यस्मिंस्तम् 'बाण इति बण् शब्दे बण् गतौ वा संज्ञायां कर्तरि घञ् । नैर्ऋता निर्ऋतेर्दिक्पालस्यापत्यानि नैर्ऋता राक्षसाः । विरताः विरामं गता विविधाः शस्त्रपाता यस्मिंस्तम् । पारस्परिकं युद्धकौशलं नीरीक्ष्य केचिद् राक्षससैनिकाः केचिच्च वानरसैनिका युद्धं द्रष्टुकामा स्थिताः इत्यर्थः ॥ १३ ॥

चारीभिरेताविल्यादि—चारीभिः परिवर्तमानावेतौ रथे स्थितौ बाणगणान् क्षिपन्तौ इमौ स्वरश्मिजालैर्धरणिं दहन्तौ नभसि भ्रमन्तौ द्वौ सूर्याविव दृश्येते इति शेषः । चारी युद्धगतिविशेषः । धरणिं पृथिवीम् धृ–अच् । नभसि आकाशे ॥ १४ ॥

---

१ 'रिहर' (?). क. २ 'श्च श्र'. क.

महद् बाणवर्षं सृजन्तं नदन्तं
हसन्तं नृदेवं भृशं भीषयन्तम् ॥ १५ ॥

**प्रथमः**[2]—एष हि रामः

स्थानाक्रमणवामनीकृततनुः किञ्चित्समाश्वास्य वै
तीव्रं बाणमवेक्ष्य रक्तनयनो मध्याह्नसूर्यप्रभः ।
व्यक्तं मातलिना स्वयं नरपतिर्दत्तास्पदो वीर्यवान्
क्रुद्धः संहितवान् वरास्त्रममितं पैतामहं पार्थिवः ॥ १६ ॥

**द्वितीयः**—एतदस्त्रं,

रघुवरभुजवेगविप्रमुक्तं
ज्वलनदिवाकरयुक्ततीक्ष्णधारम् ।

---

अथ युद्धस्थितं रावणं निरीक्ष्यान्यतमो विद्याधर अपरावाह—शरैरित्यादि—भीमवेगैः शरैर्हयान् मर्दयित्वा, अतिबलेन शीघ्रं ध्वजं चापि अभिहत्य महद् बाणवर्षं सृजन्तं, नदन्तमथ च नृदेवं हसन्तं, भृषं भीषयन्तं रावणं पश्यैतामित्यन्वयः । भीमो भयावहः वेगो येषां ते भीमवेगाः । यदा बाणाश्चलन्ति वेगेन तदा कातरा साधारणाश्च जनाः बिभ्यति । ध्वजमभिहत्येति पराजयद्योतनाय शत्रोः । नृदेवं रामं हसन्तम् । हसनञ्च स्वस्य वीरता द्योतनाय परश्चोत्साहहीनं कर्तुम् ॥ १५ ॥

स्थानाक्रमेणेत्यादि--किञ्चित् समाश्वास्य स्थानाक्रामणवामनीकृततनुः, तीव्रं तीक्ष्णमागतं बाणमवेक्ष्य रक्तनयनः, माध्यन्दिनसूर्यप्रभः, दत्तमास्पदं स्थानं यस्मै सः, वीर्यवान् पार्थिवः रामः पैतामहं अमितं वरास्त्रमस्त्रश्रेष्ठं क्रुद्धः सन् संहितवान् । पैतामहः पितामहो देवतास्येति 'सास्य देवता, इत्यण् । अथवा पितामहादागतं पैतामहं 'तत आगतः, इति । स्थानक्रमणवामनीकृततनुरिति युद्धकौशलम् । स्थानस्याक्रमणात् तथा हि—

"स्थानानि धनिनां पञ्च तत्र वैशाखमस्त्रियाम् ।
त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति ॥
सन्नद्धं स्यात् समतलं आलीढं तु ततोऽग्रतः ।
दक्षिणे वाममाकुञ्च्य प्रत्यालीढं विपर्ययः ॥

इत्युक्तेषु धन्विनां स्थानेषु । अर्थादालीढस्य स्थानस्याक्रमणाद् वामनीकृततनुत्वं घटते । तीव्रं बाणमवेक्ष्य । तीव्रं क्रूरम् ।

यस्य वाजेषु पवनः फले पावकभास्करौ ॥

इत्युक्तत्वाद् धरायाः पावकभास्करसान्निध्यम् ।

---

१ 'पीडय' क. २ 'मः–स्था' क. ३ 'गतीव्रमु' क.

रजनिचरवरं निहत्य संख्ये[1]
पुनरभिगच्छति राममेव शीघ्रम् ॥ १७ ॥

सर्वे—हन्त[2] निपातितो रावणः ।

प्रथमः—रावणं निहतं दृष्ट्वा पुष्पवृष्टिर्निपातिता ।
एता नदन्ति गम्भीरं भेर्यस्त्रिदिवसद्मनाम्[3] ॥ १८ ॥

द्वितीयः—भवतु । सिद्धं देवकार्यम् ।

प्रथमः—तदागम्यताम् । वयमपि तावत् सर्वोहितं[4] रामं सम्भाव[5]यिष्यामः ।

उभौ—बाढम् । प्रथमः कल्पः, ( निष्क्रान्ताः सर्वे )

षष्ठोऽङ्कः[6] ।

---

रघुवरभुजेत्यादि—रघुवरभुजवेगविप्रमुक्तं, रघुवरस्य रामस्य यो भुजयोर्वेगस्तेन तस्माद्वा विप्रमुक्तम् । महता वेगेन संधत्तमित्यर्थः । ज्वलनो वह्निः दिवाकरः सूर्यः ताभ्याम् युता युक्ता तीक्ष्णा धारा निशिताग्रभागो यस्येति तत् एतदस्त्रं संख्ये युद्धे रजनिचरेषु वरं श्रेष्ठं । रावणमित्यर्थः । निहत्य हत्वा पुनर्भूयोऽपि शीघ्रं राममेवाभिगच्छति । पुनरागमनमस्त्रस्य महत्वप्रकाशनार्थम् ॥ १७ ॥

रावणं निहतमित्यादि—रावणं पौलस्त्यं दशाननं निहतं दृष्ट्वा ( देवैः कर्तृभिः ) पुष्पवृष्टिर्निपातिता । रावणहननप्रीता देवाः पुष्पवर्षामकुर्वन्नित्यर्थः । अथ च । एता त्रिदिवसद्मनां देवानां, त्रिदिवे सद्मानि येषां ते तेषाम् । भेर्यः गम्भीरं नदन्ति ॥१८॥

तदागम्यतामित्यादि—आगम्यतामिति भावे यक् प्रत्ययः ।

बाढमित्यादि—बाढम् समुचितम्, योग्यम्, ओम्, स्वीकारे ।

प्रथमः कल्पः—

अभीष्टवस्तुनां सिद्धौ येन केनापि चोदितः ।
प्रथमः कल्प इत्येव प्रवदत्याप्तनायकः ॥
मुख्यः स्यात् प्रथमः कल्पः ॥

अस्मिन्नङ्के रामरावणयोर्युद्धस्य कथा शस्त्राणां
वर्णनं च विद्याधरमुखेन ।

---

१ 'संघे' क. २ 'न्त निहतो'. क. 'न्तपति'. ग. ३ 'रा भ'. क. ४ 'वर्गणसहि'. क. ५ 'सभाजयि'. क. ख. ग. ६ 'विष्कम्भकः । (ततः प्रविशति रामः)' ख. एतत्पाठानुरोधेन आहत्य षडेवाङ्काः ।

# अथ सप्तमोऽङ्कः ॥

( ततः प्रविशति रामः )

**रामः**—हत्वा रावणमाहवेऽद्य तरसा मद्बाणवेगार्दितं
कृत्वा चापि विभीषणं शुभमतिं लंकेश्वरं साम्प्रतम् ।
तीर्त्वा चैवमनल्पसत्वचरितं दोर्भ्यां प्रतिज्ञार्णवं
लंकामभ्युपयामि बन्धुसहितः सीतां समाश्वासितुम्[3] ॥१॥

( प्रविश्य )

**विभीषणः**—जयतु देवः ।

एषा हि राजंस्तव धर्मपत्नी
त्वद्बाहुवीर्येणविधूतदुःखा ।

---

अथ कृतलङ्केशविमर्दो रामः स्ववीर्यं कथयन् प्रविशति—

हत्वेति—अद्य आहवे मद्बाणवेगार्दितं रावणं तरसा हत्वा, अपि च साम्प्रतं शुभमतिं विभीषणं लङ्केश्वरं कृत्वा, अनल्पसत्वचरितं प्रतिज्ञार्णवं चैव दोर्भ्यां तीर्त्वा, बन्धुसहितः सीतां समाश्वासितुं लङ्कामभ्युपयामि ।

आहवे संग्रामे, आह्वयन्तेऽत्रेत्याहवः आङि युद्धे इत्यप्, सम्प्रसारणम् । तरसा बलेन । मद्बाणानां वेगैरर्दितस्तम् । शुभे धर्मविषये मतिर्यस्येति तम्, एतेन च रावणहनने रावणस्याशुभैव मतिः कारणम् । अनल्पा महान्ता ये सत्वा मनुष्यास्तेषां चरितमिव चरितं यस्मिंस्तम् प्रतिज्ञार्णवं प्रतिज्ञासमुद्रं तीर्त्वा । यत् प्रतिश्रुतं तदवश्यं विधेयमिति महतां चरित्रम् । दुरात्मनाञ्च मनस्यन्यद् वचस्यन्यत् कर्मणि चान्यदेवेति भेदः । बन्धुसाहितः सीतां समाश्वासितुमिति सर्वेऽपि बान्धवा सीतायाश्चरित्रे निश्शङ्का अत एव सह यान्ति अन्यथा त्यजेयुरिति भावः । सीतासमाश्वासन इति पाठे निमित्तसप्तमी ज्ञेया ॥ १ ॥

विभीषणः सीतां समर्पयन्नाह—एषा हीति । हे रान् हि त्वद्बाहुवर्येण विधूतदुःखा एषा तव धर्मपत्नी पुरा दैत्यकुलेन च्युता लक्ष्मीरिव सा तव प्रसादात् समुपस्थिता ॥

---

१ 'तास'. क. ग. ङ. च. 'श्वासने' क. ग. ङ. च.

२ 'श्वासने'. क. ग. ङ. च.

३ 'तुम्' (प्रविश्य) लक्ष्मणः-जयत्वार्यः । आर्य एषा ह्यार्यायस्य समीपमुपसर्पति ।
रामः—वत्स लक्ष्मण, अपायाच्च हि वैदेह्या उषिताया रिपुक्षये ।
दर्शनात् साम्प्रतं धैर्यं मन्युर्मे वारयिष्यति ॥
लक्ष्मणः—यदाज्ञापयत्यार्यः (निष्क्रान्तः) (प्रविश्य) स

लक्ष्मीः पुरा दैत्यकुलच्युतेव
तव प्रसादात् समुपस्थिता सा ॥ २ ॥

रामः[1]—विभीषण, तत्रैव तावत् तिष्ठतु रजनिचरा[2]विमर्शजातकल्मषा इक्ष्वाकुकुलस्यांकभूता[3] राजानं दशरथं[4] पितरमुद्दिश्य न युक्तं[5] भो लंकाधिपते[6] मां द्रष्टुम् ।

अपि च,

मज्जमानमकार्येषु पुरुषं विषयेषु वै ।
निवारयति यो राजन् स मित्रं रिपुरन्यथा ॥ ३ ॥

विभीषणः—प्रसीदतु देवः ।

रामः—नार्हति भवानतःपरं पीडयितुम् ।

( प्रविश्य )

लक्ष्मणः—जयत्वार्यः । आर्यस्याभिप्रायं श्रुत्वैवाग्निप्रवेशाय प्रसादं प्रतिपालयत्यार्या ।

रामः[7]—लक्ष्मण, अस्याः पतिव्रतायाः छन्दमनुतिष्ठ ।

लक्ष्मणः—यदाज्ञापयत्यार्यः । ( [8]परिक्रम्य ) भोः कष्टम् ।

---

धर्माय पत्नी धर्मपत्नी । विधूतानि पापानि यस्याः सा विधूतपापा व्यपगतकिल्विशा । दैत्याः दितेरपत्यानि "दित्यदित्यादित्ये"ति ण्यः । दैत्यकुलेन दैत्यसमूहेन च्युता । पुरा किल समुद्रमंथनावसरे समुद्रान्निर्गता लक्ष्मीः पूर्वं प्रसह्य दैत्यैर्गृहीता पश्चाद् विष्णुना दैत्याःसम्मोहिता लक्ष्मी च गृहीतेति पुराणप्रसिद्धिः ।

सा रावणवधात् पूर्वं दुःखान्विता ॥ २ ॥

विभीषणेत्यादि—उद्दिश्य निर्दिश्य निमित्तीकृत्य । न खलु मद्गौरवं निमित्तीकृत्य द्रष्टुं न युक्ता इत्यर्थः ।

मज्जमानमित्यादि—हे राजन् वै यः अकार्येषु विषयेषु मज्जमानं पुरुषं निवारयति स मित्रम् अन्यथा रिपुरेव ॥ अकार्येषु निन्दनीयेषु दुष्कर्मसु विषयेषु इन्द्रियोपभोगसाधनेषु । विसिन्वन्ति निबध्नन्तीन्द्रियाणि, षिञ् बन्धने पचादित्वादच् । 'परिनिवि' इतिषत्वम् ॥ ३ ॥

अस्याः पतिव्रतायाः छन्दमभिलाषमनुतिष्ठ यथेयं पतिव्रताभिलषति तथा विधेहीत्यर्थः ।

---

१ मः—त'. क. २ 'रावमानक'. क. ३ 'कुलसमुद्यतपताकाभूतं रा'. क. 'कुलावसानसमुद्यतपताकाभूतं रा'. ख. ४ 'थमुद्दि'. क. ५ 'क्तं ल'. क ६ 'ते वक्तुं माम्'. च. ७ 'मः—अ'. क. ८ '( किञ्चिद् गत्वा )'. ख.

विज्ञाय देव्याः शौचं च श्रुत्वा चार्यस्य शासनम् ।
धर्मस्नेहान्तरे न्यस्ता बुद्धिर्दोलायते[1] मम ॥ ४ ॥

कोऽत्र ।

( प्रविश्य )

हनुमान्—जयतु कुमारः ।

लक्ष्मणः—हनुमन् यदि ते शक्तिरस्ति, एवमाज्ञापयत्यार्यः ।

हनुमान्—अत्र किं तर्कयति कुमारः ।

लक्ष्मणः—निष्फलो मम तर्कः[2] । अथवा वयमार्यस्याभिप्रायमनुवर्ति[3]तारः । गच्छामस्तावत् ।

हनुमान्—यदाज्ञापयति कुमारः । (निष्क्रान्तौ)

( प्रविश्य[4] )

लक्ष्मणः[5]—प्रसीदत्वार्यः । आर्य आश्चर्यमाश्चर्यम् । एषा ह्यार्या,

विकसितशतपत्रदामकल्पा
ज्वलनमिहाशु विमुक्तजीविताशा ।
श्रममिह तव निष्फलं च कृत्वा
प्रविशति पद्मवनं यथैव हंसी ॥ ५ ॥

---

विज्ञायेत्यादि—देव्याश्च शौचं विज्ञायार्यस्य च शासनं विज्ञाय धर्मस्नेहान्तरे न्यस्ता मम बुद्धिर्दोलायते । धर्मः ज्येष्ठस्य भ्रातुश्छन्दानुवर्तित्वं स्नेहश्च प्रेम तयोरन्तरे मध्ये न्यस्ता पतिता मम बुद्धिर्दोलायते दोलेवाचरति । यथा दोला कदाचिद्गच्छति कदाचिच्चायाति तथैव धर्मश्च निरीक्ष्याग्नौ प्रवेशयितुं मन ईहते स्नेहश्च तस्मान्निवर्तयति ॥ ४ ॥

हनुमन्नित्यादि—एवमाज्ञापयति अग्निप्रवेशयोग्या इत्याज्ञापयति । यदि ते शक्तिरस्ति निरोद्धुं वा यथोक्तमनुष्ठातुं वा इत्यर्थः ।

प्रसीदत्वार्यः इत्यादि—प्रसादने च हेतुराश्चर्यमेव ।

विकसितेत्यादि—विकसितानि प्रफुल्लानि यानि शतपत्राणि कमलानि 'सहस्रपत्रं कमलं शतपत्रं कुशेशय, मित्यमरः । तेषां यद्दाम माला तत्कल्पा तत्तुल्या । नितरां कोमलाङ्गीत्यर्थः । अथ च विमुक्ता जिविताशा जीवनेच्छा यया सा । ज्वलनं प्रविष्टस्तु न कश्चिज्जीवितीति विचारेण विमुक्तजीवनाशेति विशेषणम् । अत एवेह तव रामस्य श्रमं निष्फलं कृत्वेयं सीता हंसी पद्मवनमिवाशु इह ज्वलनं प्रविष्टा । स्वसतीत्वदर्शनाय वह्नौ प्रविष्टेत्यर्थः । हंसी पद्मवनं यथेति कथनेन वह्निप्रवेशे पीडाभावः सूच्यते ॥ ५ ॥

---

१ 'द्विर्दो'. क. २ 'र्कः । ननु व'. ग. च. ३ 'वर्त्तयिता'.क. ख.ङ. 'र्तयिष्यामः'. ग. ४ 'तथाकृत्वा प्र'. ङ. ५ ए.—एवं. क.

रामः—आश्चर्यमाश्चर्यम् । लक्ष्मण निवारय निवारय ।

लक्ष्मणः—यदाज्ञापयत्यार्यः ।

( प्रविश्य )

हनुमान्—जयतु देवः ।

एषा कनकमालेव ज्वलनाद्[1] वर्धितप्रभा ।
पावना पावकं प्राप्य निर्विकारमुपागता ॥ ६ ॥

रामः—(सविस्मयं) किमिति किमिति ।

लक्ष्मणः—अहो आश्चर्यम् ।

( प्रविश्य )

सुग्रीवः—जयतु देवः ।

को नु खल्वेष जीवन्तीमादाय जनकात्मजाम् ।
प्रणम्यरूपः संभूतो ज्वलतो हव्यवाहनात्[2] ॥ ७ ॥

लक्ष्मणः[3]—अये अयमार्यां पुरस्कृत्येत एवाभिवर्तते भगवान् विभावसुः ।

रामः–अये अयं भगवान् हुताशनः । उपसर्पामस्तावत् ।

---

एषेति—ज्वलनाद् वर्धितप्रभा कनकमालेवैषा पावना सीता पावकं प्राप्य निर्विकारमुपागता । कनकस्य माला कनकमाला । ज्वलनाद् वह्नौ तापनाद् वर्धितप्रभा । वह्नौ च तप्यमानं सुवर्णं कान्तिमान् भवतीति । यथा च—

'धनञ्जये हाटकसंपरीक्षेति, पावनं शुद्धिः । पावनमिति भावे ल्युट् । पावनाद् वर्धितप्रभाद् इति रम्यः पाठः ॥ ६ ॥

अग्नौ प्रवेशेपि जीवन्तीं सीतामालक्ष्य सुग्रीव आह को नु खल्विति । न्विति वितर्के कः खल्वेषः प्रणम्यरूपः पुरुषः जीवन्तीं जनकात्मजामादाय ज्वलतो हव्यवाहनात् संभूतः । प्रणम्यः तेजोमयत्वान्नमस्कार्यः रूपो यस्येति सः । हव्यवाहनोऽग्निः हव्यं वाहयतीति देवान्नयतीति हव्यवाहनः 'हव्य ( कव्य ) पुरीषपुरीष्येषु ञ्युट् ॥ ७ ॥

विभावसुः सूर्यः ।

हुतमश्नातीति हुताशनो ऽग्निः ।

---

१ 'पवनावर्धितप्रभात् । पावकात्पावनं प्रा'. ख. च २ 'हनः'. क ३ 'विभीषणः'. घ.

( सर्वे उपसर्पन्ति )

( ततः प्रविशत्यग्निः सीतां गृहीत्वा )

**अग्निः**—इमां गृह्णीष्व राजेन्द्र सर्वलोकनमस्कृताम् ।
अपापामक्षतां शुद्धां जानकीं पुरुषोत्तम ॥ ८ ॥

अपि च,

इमां भगवतीं लक्ष्मीं जानीहि जनकात्मजाम् ।
सा भवन्तमनुप्राप्ता मानुषीं तनुमास्थिता ॥ ९ ॥

**रामः**—अनुगृहीतोऽस्मि ।

जानतापि च वैदेह्याः शुचितां धूमकेतन ।
प्रत्ययार्थं हि लोकानामेवमेव मया कृतम् ॥ १० ॥

( नेपथ्ये दिव्यगन्धर्वा गायन्ति )

नमो भगवते त्रैलोक्यकारणाय नारायणाय ।

---

इमां गृह्णीष्वेति—अपापां किल्बिषरहिताम् । अक्षतामग्नौ प्रवेशेऽपि क्षतरहिताम् । क्षत इति स्रवद्रक्तपूयादौ व्रणे । पुरुषोत्तम राम ॥ ८ ॥

अग्निः सीतां पुरस्कृत्य निष्पापेयमिति दर्शयन् राममाह—

इमां भगवतीमित्यादि । इमां जनकात्मजां सीतां त्वं भगवतीं लक्ष्मीं जानीहि । सा लक्ष्मी मानुषीं तनुमास्थिता साक्षाद्देवी सत्यपि मानुषं रूपं विधाय भवन्तं राममनुप्राप्ता । त्वयेयं साक्षाद्देवी ज्ञातव्या नेयं साधारणा काचिन्मानुषीति ॥ ९ ॥

इदानीं रामः स्वं भावं प्रदर्शयन्नग्निमाह—जानतापीति । हे धूमकेतन धूमः केतनं ध्वजचिह्नं यस्य सः धूमकेतनोऽग्निस्तत्संबुद्धौ हे धूमकेतन अग्ने वैदेह्याः शुचितां जानतापि मया एवमेव लोकानां प्रत्ययार्थमिदं मया कृतम् । लोकाः सीतायाः सतीत्वे निश्शंका भवेयुरिति भावमेव पुरस्कृत्य मयेदं कृतं नान्यद्विचार्येत्यर्थः । प्रत्ययो विश्वासः तदर्थं । लोकान् प्रत्याययितुमित्यर्थः ॥ १० ॥

गन्धर्वाः गायकाः ।

त्रैलोक्यकारणाय लोकत्रयोत्पादकाय । नारायणाय विष्णवे । नारा अयनं यस्येति नारायणः तथा च मनुः—

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ अ० १ । १० ॥

हे जगत्त्रयपते जगत्त्रितयस्वामिन् ब्रह्मा परमेष्ठी ते तव हृदयम् हृदयस्थानी । हृदयमिति मनसः पर्यायः 'हृदयं मानसे बुक्कोरसोरपि' इति मेदिनी । हृदयं तु विश्वस्य महदायतनमत एव ब्रह्मणः परमात्मनो हृदयत्वेनोपमा तथा हि—

---

१ 'त्वा' अग्निः—एष भगवान् नारायणः । जयतुदेवः । रामः—भगवन् नमस्ते । अग्निः—न मे नमस्कारं कर्तुमर्हसि देवेश । इमां' क. २ 'तोषितं' क. ३ 'शौचकं'.क.

**ब्रह्मा ते हृदयं जगत्त्रयपते रुद्रश्च कोपस्तव**
**नेत्रे चन्द्रदिवाकरौ सुरपते जिह्वा च ते भारती ।**
**सब्रह्मेन्द्रमरुद्गणं त्रिभुवनं सृष्टं त्वयैव प्रभो**
**सीतेयं जलसम्भवालयरता विष्णुर्भवान् गृह्यताम् ॥॥११॥**

( पुनर्नेपथ्ये[1] अपरे गायन्ति )

**मग्नेयं हि जले वराहवपुषा भूमिस्त्वयैवोद्धृता**
**विक्रान्तं भुवनत्रयं सुरपते पादत्रयेण त्वया ।**

---

पद्मकोशप्रतीकाशं रुचिरं चाप्यधोमुखम् ।
हृदयं तद्विजानीयाद्विश्वस्यायतनं महत् ॥ इति ।

रुद्रः शिवश्च तव कोपः । रुद्रः रोदयति पापिन इति । यं प्रति कश्चित्छक्ति-सम्पन्नः कुप्यति तदा स रोदतीती कोपस्य रुद्रत्वम् । चन्द्रदिवाकरौ तव नेत्रे । रात्रिन्दिवं सर्वस्यावलोकनात् । हे सुरपते ते जिह्वा भारती सरस्वती वाचामधिष्ठात्री देवी। हे प्रभो सब्रह्मेन्द्रमरुद्गणं ब्रह्मेन्द्रमरुद्गणसहितं त्रिभुवनं लोकत्रयं त्वयैव सृष्टम् । नान्यः कश्चित्त्वदितरः जगत्त्रयस्रष्टेति भावः । जलं सम्भव उत्पत्तिस्थानं यस्येति सः जलसम्भवः जलसम्भव आलयो यस्येति सः, तत्र रता । जलसम्भवालयस्तु विष्णुरितिप्रागुक्तम् । इयं सीता भवान् विष्णुः गृह्यताम् ॥ ११ ॥

मग्नेयमित्यादि—हे प्रभो जले मग्ना इयं पृथिवी वराहवपुषा त्वयैवोद्धृता त्वमेव वाराहं रूपमास्थाय जलमग्नां पृथिवीमुद्धारेत्यर्थः । तथा च श्रुतिः—स ( प्रजापतिः ) वराहरूपं कृत्वोपन्यमज्जत् तै १ । १ । ३ । ६ ॥

हे सुरपते त्वया पूर्वं पादत्रयेण भुवनत्रयं विक्रान्तं व्याप्तम् । पुरा किल विष्णु विष्णुर्बलिं छलयितुं पादत्रयेण भूमिं व्यक्रामदिति पुराणप्रसिद्धिः । तथा च श्रुतौ यज्ञो विष्णुः स देवेभ्यः इमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्रथमेन पदेन पस्पार अथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेन श० १ । ६ । ३ । ६ ।

विष्णुपुराणे च—

मन्वन्तरे तु संप्राप्ते तथा वैवस्वते द्विज ।
वामनः कश्यपाद्विष्णुरदित्यां संबभूव ह ॥
त्रिभिः क्रमैरिमाँल्लोकाञ्जित्वा येन महात्मना ।
पुरन्दराय त्रैलोक्यं दत्तं निहतकण्टकम् ॥

पूर्वोक्तं कथनं दृढयितुमाह—स्वैरमित्यादि । यथा साम्प्रतमिदानीं स्वैरं स्वच्छन्दं रूपमुपाश्रितेन भवता आहवे संग्रामे रावणं हत्वा देवा विद्वांसः इन्द्रादयो वा देवत्वेन प्रसिद्धा समाश्वासिताः । रावणेन खलु विद्वांसः ऋषय इन्द्रादयश्च देवाः धर्षिता इति प्रसि-

---

१ 'पुनर्नेपथ्ये' इति नास्ति. क.

स्वैरं रूपमुपस्थितेन भवता देव्या यथा साम्प्रतं
हत्वा रावणमाहवे न हि तथा देवाः समाश्वासिताः ॥१२॥

अग्निः—भद्रमुख एते[1] देवदेवर्षिसिद्धविद्याधरगन्धर्वाप्सरोगणाः[2]
स्वविभवैर्भवन्तं वर्धयन्ति ।

रामः—अनुगृहीतोऽस्मि[3] ।

अग्निः—भद्रमुख अभिषेकार्थमित इतो भवान्

रामः—यदाज्ञापयति भगवान् । ( निष्क्रान्तौ )

( नेपथ्ये )

जयतु देवः । जयतु स्वामी । जयतु भद्रमुखः[4] । जयतु महाराजः
जयतु रावणान्तकः । जयत्वायुष्मान्[5] ।

विभीषणः[6]—एष एष महाराजः,

तीर्त्वा प्रतिज्ञार्णवमाहवेऽद्य सम्प्राप्य देवीं च विधूतपापाम् ।
देवैः समस्तैश्च कृताभिषेको विभाति शुभ्रे नभसीव चन्द्रः ॥१३॥

लक्ष्मणः[7]—अहोतु खल्वार्यस्य वैष्णवं तेजः ।

यमवरुणकुबेरवासवाद्यै-
स्त्रिदशगणैरभिसंवृतो विभाति ।
दशरथवचनात्कृताभिषेक-
स्त्रिदशपतित्वमवाप्य[8] वृत्रहेव ॥ १४ ॥

( ततः प्रविशति कृताभिषेको रामः सीतया सह )

रामः—वत्स लक्ष्मण,

---

दम् । तेन च साम्प्रतं रावणं हत्वा देव्याः शुद्धया यथा देवा समाश्वासिता तथा न पूर्वं समाश्वासिता इत्यर्थात् सिद्धम् ॥ १२ ॥

भद्रमुख इति—स्वविभवैः स्वैरैश्वर्यैर्भवन्तं वर्धयन्ति ।

तीर्त्वा प्रतिज्ञेति—प्रतिज्ञार्णवं प्रतिज्ञासमुद्रम् । विधूतानि नष्टानीत्यर्थः ॥१३॥

यमवरुणकुबेरेत्यादि—त्रिदशानां देवानां गणैः समूहैरभिसंवृतः । दशरथवचनेन कृतोऽभिषेको यस्य सः । वृहत्रहा इन्द्र इव ॥ १४ ॥

---

१ 'ते देवर्षि'. क. २ 'प्सरसां ग'. क. ३ 'नमोस्तु सर्वदेवेभ्यः'. क. ४ 'खः । जयतु रा'. क. ५ 'जयत्वायुष्मान्' इति नास्ति. क. ६ 'लक्ष्मणः—'. क. ग. ७ 'विभीषणः—अहोतुखलु देवस्य'. ख. ग. ८ 'प्य देवराजः'. ग. घ.

येनाहं कृतमंगलप्रातिसरो भद्रासनारोपितो-
ऽप्यम्बायाः प्रियमिच्छता नृपतिना भिन्नाभिषेकः कृतः ।
व्यक्तं दैवगतिं गतेन गुरुणा प्रत्यक्षतः साम्प्रतं
तेनैवाद्य पुनः प्रहृष्टमनसा[1] प्राप्ताभिषेकः कृतः ॥ १५ ॥

अग्निः—भद्रमुख[2], एता हि महेन्द्रनियोगाद् भरतशत्रुघ्नपुरःसराः[3] प्रकृतयो भवन्तमुपस्थिताः[4] । इमे महेन्द्रादयोऽमृतभुजो भवन्तमभिवर्धयन्ति ।

रामः—अनुगृहीतोऽस्मि ।

अग्निः[5]—भद्रमुख किं ते भूयः प्रियमुपहरामि ।

रामः—यदि मे भगवान् प्रसन्नः, किमतः[6] परमहमिच्छामि ।

( भरतवाक्यं )

भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः[7] प्रशास्तु नः ॥ १६ ॥

---

ततः प्रविशति विमाने देवैर्दशरथवचनादभिषिक्तो रामः । येनाहमित्यादि—येन पित्रा दशरथेन कृतो विहितो मङ्गलप्रतिसरो हस्तसूत्रं यस्य सः । हस्तसूत्रे प्रतिसरोऽस्त्रियाम्, इत्यमरः । अभिषेकादि मङ्गलकृत्यसमये हस्ते सूत्रं बध्नंति लोके । दैवगतिं स्वर्गम् । गम्यत इति गतिः ॥ १५ ॥

ततः विमानादुत्तार्य लक्ष्मणादीनां समीपं प्राप्य । वत्स लक्ष्मण इत्यादि ग्रन्थसम्बन्धः । भरतशत्रुघ्नौ पुरोधाय इत्यर्थः ॥ १६ ॥

यदि मे इत्यादि—यदि मे भगवान् प्रसन्नः किमतः परमिच्छामि । अतः प्रसादात् परं किमिच्छामि । भवत्प्रसाद एवापेक्षित इत्यर्थः ।

( भरतवाक्यम् )

भवन्त्वित्यादि—गावः अरजसः भवन्तु ।

'दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु ।
भूमौ पशौ च गोशब्दो दशार्थः कीर्तितो बुधैः ॥'

गावः दिशः अरजसः रजोविहीनाः भवन्तु । अनेन वर्षसम्पत्त्या सस्यादिसमृद्धिरुक्ता । गावः दृष्टयः ज्ञानदृष्टयः विरजसः रजोगुणविहीनाः भवन्तु । तेनैव तमसश्च विनाश उक्तः ।

---

१ 'नसः'. क. २ 'भो राजन् ए'. ङ. 'भो राजन् तेन हि म'. घ. ३ 'राः सर्वाः प्र'. घ. ४ 'ताः । रामः—भगवन् प्रहृष्टोस्मि । अग्निः—इमे'. ख. ५ 'ग्निः—किं'. ग. ६ 'किमुत्तरमह'. क. ७ 'राजा सिंहः'. क.

( निष्क्रान्ताः सर्वे )

[1]सप्तमोऽङ्कः ।

[2]अभिषेकनाटकं समाप्तम् ।

---

'सत्वोदये सुखं प्रीतिः शान्तिर्लज्जांगलाघवम् ।
क्षमा धृतिरकार्पण्यं दमो ज्ञानप्रकाशनम् ॥
रजोगुणोदये लोभः सन्तापः कोपविग्रहौ ।
अभिमानो मृषावादः प्रवृत्तिर्डम्भ इत्यपि ॥
तमोगुणोदये तन्द्री मोहो निद्रांगगौरवम् ।
आलस्यमप्रबोधश्च प्रमादश्चैवमादयः ।
ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणयुक्तास्तु अधो यास्यन्ति तामसाः ॥ इति ॥

---

१ 'षष्ठोऽङ्कः'. ख. २ 'श्रीरस्तु' क. 'श्रीरामायणं समाप्तं'. ख. 'रामनाटकं समाप्तं'. च.

# वृत्तलक्षणम् ।

अंक—श्लो. ( त्रिष्टुप्. ११. )

(१) मा त्तौ गौ चे च्छा लिनी वेद लो कैः ।

म त त ग ग

१—१३ — — — ।— — ⏑ ।— — ⏑ । — । — ।

स न्द ष्टो—ष्ठ श्च ण्ड—सं र क्त—ने—त्रः

(२) उपेन्द्रवज्रा जतजास्ततो गौः ।

ज त ज ग ग

⏑ — ⏑ ।— — ⏑ । ⏑ — ⏑ । — । —

१—२६ मया कृ —तं दोष —मपास्य—बु —ध्या

३—३ कथं क —थं भो न — ववाक्य—वा—दिन्

३—१८ प्रसीद —राजन् व —चनं हि—तं —मे

४—६ शैलेन्द्र —मैस्सं प्र —ति मुष्टि—ब —न्धैः

५—७ चलत्त —रंगाह + तभीम —वे —गं

५—७७ उदीर्ण —सत्वेन —महाब —ले —न

(३) स्यादिन्द्रवज्रा यदि तौ जगौ गः ।

त त ज ग ग

— — ⏑ । — — ⏑ । ⏑ — ⏑ । — । —

२—१४ सीते त्य —ज त्वं व्र—तमुग्र —च —र्यं

६—१४ चारीभि —रेतौ प —रिवर्त्त —मा—नौ

७—२ एषा हि —राजंस्त —व धर्म—प —त्नी

७—१३ तीर्त्वा प्र—तिज्ञार्ण —वमाह—वे —य

( जगती. १२ )

(१) जतौ तु वंशस्थमुदीरितं जरौ ।

ज त ज र

⏑ — ⏑ । — — ⏑ । ⏑ — ⏑ । — ⏑ —

१—२ कुतो नु—खल्वेष—समुत्थि—तो ध्वनिः

(२) द्रुतविलम्बितमाह नभौ भरौ ।

न भ भ र

⏑ ⏑ ⏑ । — ⏑ ⏑ । — ⏑ ⏑ । — ⏑ —

३—४ युधि ज—गत्त्रय—भीतिकृ—तोपि मे

(३) भुजंगप्रयातं भवेद्यैश्चतुर्भिः ।

य य य य

˘ — — । ˘ — — । ˘ — — । ˘ — — ।

६—१५ शरैर्भी—मवेगै—र्हयान्म—र्दयित्वा

(४) बाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ।

म म य य

— — — । — — — । ˘ — — । ˘ — —

६—५ बाणाःपा—त्यन्ते रा—त्तसैर्वा —नरेषु

२—१ लब्ध्वा त्र—त्तान्तं रा—मपत्न्याः—खगेन्द्रात्

## अतिजगती (१३)

(१) त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम् ।

म न ज र ग

— — — । ˘ ˘ ˘ । ˘ — ˘ । — ˘ — । —

१—७ संप्राप्ता —हरिव —रबाहु —संप्रगु —प्ता

१—१० शक्रो वा—भवतु —गतिःश—शांकव —क्त्रे

१—१७ युक्तं भो—नरप —तिधर्म —मास्थिते —न

३—१६ दिव्यास्त्रै—स्त्रिदश—गणाम —याभिभू —ता

## शक्करी (१४)

(१) उक्ता वसन्ततिलका तभजा जगौ गः ।

त भ ज ज ग ग

— — ˘ । — ˘ ˘ । ˘ — ˘ । ˘ — ˘ । — —

१—१ योगाधि —पुत्रम —खविघ्न —कराभि —ह —न्ता

१—४ मत्साय —कान्निह —तभिन्न —विकीर्ण —दे —हं

१—६ तारे वि —मुञ्चम —मवज्र —मनिन्दि —तां—गि

१—११ तारेम —याखलु —पुरामृ —तमन्थ —ने —पि

३—२० नक्तञ्च —रापश —दराव —णराघ —वं —तं

३—२६ अद्यैव —तंकम —ललोच —नमुग्र —चा—पं

४—७ क्रुद्धस्य —यस्यपु —रतःस —हितोप्य —श —क्रः

४—१३ नाराय —णस्यन —रूप —मुपाश्रि —त —स्य

४—२३ अस्ताद्रि —मस्तक —गतःप्र —तिसंहृ —तां —शुः

५—४ एषा वि —हायभ —वनंम —मसंप्र —या —ता

५—७ सीतेत्य —जत्वम —रविन्द —पलाश —ने —त्रे

५—१३ हावत्स —सर्वज —गतांज्व —रकृत्कृ —ता —स्म

५—१६ वज्रीभ —कुंभत —टभेद —कठोर —धा —रः

६—१ इक्ष्वाकु—वंशवि—पुलोज्ज्व—लदीप्त—के—तोः
६—७ सव्येन—चापम—वलम्ब्य—करेण—वी—र

# अतिशक्करी [१५]

(१) ननमयययुतेयं मालिनी भोगिलोकैः ।

न न म य य
⏑⏑⏑ । ⏑⏑⏑ । – – – । ⏑ – – । ⏑ – –

१—१६ रुधिर—कलित—गात्रःस्र—स्तसंर—क्तनेत्रः
१—२५ अतिव—लसुख—शायीपू—र्वमासी—हरीन्द्रः
२—६ असित—भुजग—कल्पांधा—रयन्त्ये—कवेणीं
२—६ मणिवि—रचित—मौलिश्चा—रुताम्रा—यताक्षः
२—२७ अनश—नपरि—तप्तंपा—ण्डुसच्छा—मवक्त्रं
२—२६ परभृ—तगण—जुष्टंप—ञ्चषण्डा—भिरामं
६—१५ धनुषि—निहित—बाणास्त्वा—मतिक्र—म्यगर्वा
६—४ निशित—विमल—खड्गाःक्रो—धविष्फा—रिताक्षा
६—६ कनक—रचित—दण्डांश—क्तिमुल्ला—सयन्तं
६—११ कनक—रचित—चापंती—दणमुग्र—म्यशीघ्रं

# अत्यष्टि (१७)

(१) रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी ।

य म न स भ ल ग
⏑ – – । – – – । ⏑ ⏑ ⏑ । ⏑ ⏑ – । – ⏑ ⏑ । ⏑ । –

४—१७ क्वचिद्दूफ—नोद्गारी—क्वचिद—पिचमी—नाकुल—ज—लः

# अति धृति (१९)

(१) सूर्याश्वैर्म स जा स्ततः सगुरवः शार्दूलविक्रीडितम् ।

– – – । ⏑ ⏑ – । ⏑ – ⏑ । ⏑ ⏑ – । – – ⏑ । – – ⏑ । –

१—५ मुक्तोदे—वतवा—यवालि—हृदयं—भेत्तुंन—मेसंश—यः
२—४ गर्भागा—रविनि—ष्कुटेषु—बहुशः—शालावि—मानादि—षु
२—६ चित्रप्र—स्रुतहे—मधातु—रुचिराः—शैलाश्च—दृष्टाम—या
२—१० दिव्यास्त्रैः—सुरदै—त्यदान—वचमू—विद्राव—णंराव—णं
२—२२ हत्वावा—लिनमा—हवेक्ष—पिवरं—त्वत्कार—णादग्र—जं
३—७ यस्यांन—प्रियम—ण्डनापि—महिषी—देवस्य—मण्डोद—री
४—७ लंकायां—किलव—र्ततेन्द्र—पसुता—शोकाभि—भूताभृ—शं
४—२ आक्रान्ताः—पृथुसा—नुकुञ्ज—गहनाः—मेघोप—माःपर्व—ताः
५—६ निद्रांमे—निशिति—स्मरन्ति—नयना—न्यालोक्य—सीतान—नं

६—३ ऐतेषा —दपशै —लभन्न —शिरसो—मुष्टिप्र —हारैर्ह —ता
६—१६ स्थानाक्रा—भरावा—मनीक्र—तवपुः —किञ्चित्स —माश्वास्य—वै
७—१ हत्वारा —वराणा—हवेद्य —तरसा —मद्बाण—वेगार्दि —तं
७—११ ब्रह्माते —हृदयं —जगत्र —यपते —रुद्रश्च —कोपस्त —व
७—१२ मन्नेयं —हिजले —वराह —वपुषा —भूमिस्त्व —यैवोद्धृ —ता
७—१५ येनाहं —कृतमं —गलप्र —तिसरो—भद्रास —नारोपि —तः

## प्रकृति (२१)

(१) म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।

म र भ न य य य

– – – । – ᴗ – । – ᴗ ᴗ । ᴗ ᴗ ᴗ । ᴗ – – । ᴗ – – । ᴗ – –

३—७ क्रोधात्सं—रक्तने —त्रंत्वरि—ततर—हयंस्य—न्दनंवा -हयन्तं
३—११ जित्वात्रै —लोक्यमा—जौससु—रदनु —सुतंय —न्मयाग-विंतेन

## अर्धसमवृत्त (Half-equal Metres)

(१) अयुजि नयुगरेफतो यकारो युजि तु न जौ जरगाश्च पुष्पिताग्रा ।

७-६ तवन्‍ृ -पमुख -निस्सृतै -र्वचोभिः
विगत -भयाहि -वयंवि -नष्टशो -काः
१-१४ विकसि -तशत -पत्रर -क्तनेत्रः
कनक -मयांग -दनद्ध -पीनबा -हुः
१-२२ करिक -रसदृ -शौगजे -न्द्रगामिं -
स्तवरि -पुशस्त्र -परिक्षि -तांगदौ -च
२-२ कनक -रचित -चित्रतो -रणाढया
मणिव -रविद्रु -मशोभि -तप्रदे -शा
२-५ कनक -रचित -विद्रुमे -न्द्रनीलैः
विकृत -महाद्रु -मपंक्ति -चित्रदे -शा
२-११ रजत -रचित -दर्पण -प्रकाशः
करनि -करैर्ह -दयंम -माभिपी -ड्य
२-१७ वरत -नुतनु -गात्रिका -न्तनेत्रे
कुवल -यदाम -निभांवि -मुच्यवे -णीं
२-२५ समुदि -तवर -चापबा -णपाणिं
पतिमि -हराज -सुतेत -वानया -मि
३-२ अमल -कमल -सन्निभो -प्रवेषः
कनक -मयोज्व -लदीपि -कत्पुरो -गः
३-१५ वरश -रणामु -पेहिशं -करंवा

प्रविश —चदुर्ग —तमंर —सातलं —वा
३–२२ अभिह —तवर —वप्रगो —पुराट्टां
रघुव —रकार्मु —कनाद —निर्जित —स्त्वं
४—३ सजल —जलध —रेन्द्रनी —लनीरो
विलुलि—तफेन —तरंग —चारुहा —रः
४—५ सजल —जलद —सन्निभ —प्रकाशः
कनक —मयाम —लभूष —णोज्वलां —गः
४—१२ ममश —रपरि —दग्धतो —यपंकं
हतश —तमत्स्य—विकीर्ण —भूमिभा —गं
४—१८ ममश —रवर —वातपा —तभग्ना
कपिव —रसैन्य —तरंग —ताडिता —न्ता
५–१३ मदन —वशग —तोमहा —नन्थं
सचिव —वचोप्य—नवेद्य —वीरमा —नी
६—२ रजनि —चरश —रीरनी —रकीर्णा
कपिव —रवीचि —युताव —रासिन —क्रा
६—१२ सुरव —रजय —दर्पदे —शिकेस्मिन्
दितिसु —तनाश —करेर —थेविभा —ति
६—१३ शरव —रपरि —पीतती —व्रबाणं
नरव —रनैर्ऋ —तशोःस —मीद्ययु —द्धं
६—१७ रघुव —रभुज —वेगवि —प्रमुक्तं
ज्वलन —दिवाक —रयुक्त —तीक्ष्णधा —रं
७—५ विकसि —तशत —पत्रदा —मकलपा
ज्वलन—मिहाशु —विमुक्त —जीविता —शा
७—१४ यमव —रुणाकु —वेरवा —सवाद्यैः
त्रिदश —गणैर —भिसंत्र —तोविभा —ति

# अभिषेकनाटकस्थपद्यानां अकाराद्यनुक्रमणिका।

